श्रीप्रभाचन्द्राः

श्रीशुभचन्द्राः

**श्रीमानतुङ्गसूरीणां परिचयः—**

श्रीमतां भवतां परिचयसाधनानि तावत् श्रीप्रभाचन्द्रसूरिसूत्रितं प्रभावकचरितम्, श्रीमेरुतुङ्गमुनिवरप्रणीतः प्रबन्धचिन्तामणिः, श्रीगुणाकरसूरिप्रमुखविरचिता वृत्त्यादयश्च ।

तत्र प्रभावकचरितादिदमवगम्यते—

वाराणस्यां श्रीहर्षदेवराजा राज्यं करोति स्म । तस्यां पुर्यां ब्रह्मक्षत्रियजातीयो धनदेवनामा सुधीर्वसति स्म । तत्सुतो मानतुङ्गाख्य एकदा दिगम्बरसाधुसकाशाद् धर्मदेशनां श्रुत्वा वैराग्यरङ्गेण रङ्गित आपृच्छय मातापितरौ दीक्षां जग्राह । चारुकीर्तिर्महाकीर्तिरित्याख्यां च लेभे ।

एकदा स श्वेताम्बरशासनसक्तया निजस्वस्रा भोजनार्थं निमन्त्रितः । तस्य कमण्डलौ अशोधनप्रमादेन जलस्य चानुसन्धानात् अनेके सम्मूर्च्छिताः पूतरा आसन् । तद् दृष्ट्वा स्वस्रा स प्रतिबोधितः । कालान्तरे तेन श्रीजिनसिंहसूरितः श्वेताम्बरमतानुसारिणी दीक्षा स्वीकृता । तदा तस्य मानतुङ्गेति नाम जातम् ।

अतः परं यादृक् स्तोत्रटीकाप्रारम्भे श्रीगुणाकरसूरिभिः मयूरबाणवृत्तान्तः कथितस्तादृक् वर्णितः प्रभावकचरिते । परन्तु ऐतिहासिकदृष्ट्या विशेषोऽयं यदत्र वाराणसी नगरी, तत्र तु उज्जयिनी पुरी, तच्छासिता श्रीवृद्धभोजराजः । स्तोत्रोत्पत्तिहेतावपि अत्र काचिद् भिन्नता वर्तते । यथाहि—न च स्वेच्छानुसारेण चतुश्चत्वारिंशन्निगडैर्नियन्त्रितो निजदेहः श्रीमानतुङ्गसूरिभिः, किन्तु चमत्कारदर्शनास्वीकारात् कुपितेन राज्ञा ते कारागृहे क्षिप्ता निगडिताश्च ॥

प्रबन्धचिन्तामणौ ( पृ० १०५–१०८ ) तु यथा—

"अथ मयूर-बाणाभिधानौ श्वशुरशालकौ पण्डितौ निजविद्वत्तया मिथः स्पर्धमानौ नृपसदसि लब्धप्रतिष्ठावभूताम् ।......एतस्मिन्नवसरे मिथ्यादृशां शासने विजयिनि ( मयूर-बाणदर्शितप्रभावेन ) सम्यग्दर्शनद्वेषिभिः कैश्चित् प्रधानपुरुषैर्नृपोऽभिदधे—यदि जैनमते कश्चिदीदृक्प्रभावाविर्भावः प्रभवति तदा सिताम्बराः स्वदेशे स्थाप्यन्ते, नो चेन्निर्वास्यन्ते इति तद्वचनानन्तरं श्रीमानतुङ्गाचार्यास्तत्राकार्य निजदेवताऽतिशयं कमपि दर्शयन्तु इति राज्ञा भणितम् । ते प्राहुः—मुक्तानामस्मद्देवतानामत्र कोऽतिशयः सम्भवति? तथापि तत्किङ्कराणां सुराणां प्रभावाविर्भावः कोऽपि विश्वचमत्कारकारी दर्श्यत इत्यभिधाय चतुश्चत्वारिंशता निगडैर्निजमङ्गं नियमितं कारयित्वा तन्नगरवर्तिनः श्रीयुगादिदेवस्य प्रासादपाश्चात्यभागे स्थितो मन्त्रगर्भं भक्ता-

---

इतिहासतत्त्वमहोदधिश्रीविजयेन्द्रसूरिप्रतिप्रान्तेऽयमुल्लेखः—

"इति श्रीभट्टारकश्रीरत्नचन्द्रसूरिविरचिता भक्तामरस्तोत्रवृत्तिः समाप्ता ॥ लिखितं पं० अमरविजयेन । संवत् १८५६ वर्षे मिति ज्येष्ठसितनवम्यां तिथौ चन्द्रवारे गिरिनगरे ।"

१ हिन्दीजैनचरितमालायां प्रसिद्धाया भक्तामरकथाया अनुसारेण ।

मरेति नवं स्तवं कुर्वन् प्रतिकाव्यं भग्नैकैकनिगडः शृङ्खलासङ्ख्यैः काव्यैः पर्याप्तस्तवोऽभिमुखीकृत-प्रासादः शासनं प्रभावयामास ॥"

श्रीउज्जयिनीनरेशवृद्धभोजपूज्यमयूर-बाणसमकालीनाः "शान्तिस्तवविधातृश्रीमानदेवाचार्यपट्टमुकुटा भयहर-भक्तिभ(ब्भ)रस्तवादिकरणप्रकटाः श्रीमानतुङ्गसूरयः श्वेताम्बराः" इति श्रीगुणाकरसूरयः (पृ० ४)।

प्रभावकचरिते श्रीमानतुङ्गसूरयः प्रथमं दैगम्बरीयां दीक्षां जगृहुस्तदनन्तरं श्वेताम्बरीयामिति व्यावर्णि श्रीप्रभाचन्द्रसूरिभिः[1]। अस्माद् विपरीत उल्लेखो वर्तते जयपुरीयक्रियाकलापटीकाप्रतौ। स चायम्–"मानतुङ्गनामा सिताम्बरो महाकविः निर्ग्रन्थाचार्यवर्यैरपनीतमहाव्याधिः प्रतिपन्ननिर्ग्रन्थमार्गो भगवन्! किं क्रियतामिति ब्रुवाणो भगवता परमात्मनो गुणगणस्तोत्रं विधीयतामित्यादिष्टः भक्तामरेत्यादिस्तुतिमाह।"

सहस्रावधानिश्रीमुनिसुन्दरसूरिप्रणीतायां गुर्वावल्यामुल्लेखोऽयम्—

"आसीत् ततो दैवतसिद्धिऋद्धः, श्रीमानतुङ्गोऽथ गुरुः २१ प्रसिद्धः।
भक्तामराद् बाणमयूरविद्या–चमत्कृतं भूपमबोधयद् यः ॥ ३५ ॥
भयहरतः फणिराजं, यश्चाकार्षीद् वशंवदं भगवान्।
भक्तिभरेत्यादि–नमस्कारस्तवलब्धबहुसिद्धिः ॥ ३६ ॥
जज्ञे चैत्ये प्रतिष्ठाकृन्–नेमे'र्नागपुरे' नृपात्।
त्रिभिर्वर्षशतैः ३०० किञ्चि–दधिकैर्वीरसूरिराट् ॥ ३७ ॥"

श्रीदेवविमलगणिविरचिते हीरसौभाग्ये (स० ४, पृ० १६४) यथा—

"तदीयपट्टाम्बरभानुमाली, श्रीमानतुङ्गश्रमणेन्दुरासीत्।
य औजिढत् साधुजनान् निजाज्ञां, नाथान् पृथिव्या इव सार्वभौमः ॥ ७५ ॥
भक्तामराह्वस्तवनेन सूरि–र्बभञ्ज योऽङ्गान्निगडानशेषान्।
प्रवर्तितामन्दमदोदयेन, गम्भीरवेदीव करी धरेन्दोः ॥ ७६ ॥
श्रीमानतुङ्गः करणेन भक्ता–मरस्तुतेस्तं क्षितिशीतकान्तिम्।
चकार नम्रं फलपुष्पपत्र–भारेण यद्वत् फलदं वसन्तः ॥ ७७ ॥
भयादिमेनाथ हरस्तवेन, यो दुष्टदेवादिकृतोपसर्गान्।
श्रीभद्रबाहुः स्वकृतोपसर्ग–हरस्तवेनेव जहार सङ्घात् ॥ ७८ ॥
सद्ध्याननागेश्वररश्मिसाम्य–मन्थाद्रिणाऽऽलोड्य मदाम्बुराशिम्।
तत्पट्टलक्ष्मीरथ वीरनाम्ना–ऽऽचार्येण वव्रे वनमालिनेव ॥ ७९ ॥"

श्रीरत्नचन्द्रसूरिकृतटीकायां यथा—

श्रीवर्धमानं प्रणिपत्य मूर्ध्ना दोषैर्व्यपेतं ह्यविरुद्धवाचम्।
वक्ष्ये फलं तस्य वृषभस्तवस्य सूरीश्वरैर्यत् कथितं क्रमेण ॥ १ ॥

---

१ कर्तारोऽस्य श्रीप्रभाचन्द्राचार्याः।
२ श्रीमानदेवसूरेः।

अथात्र 'भारते' क्षेत्रे, देशे 'मालव' संज्ञके । पुरी 'धारा' परा रेजे, लसत्प्रासादसद्ध्वजा ॥ २ ॥
यत्र सर्वजनानां हि, मुखाब्जेषु सरस्वती । अध्युवासोच्यते शोभा, कीदृशी ब्रह्मतः परा ॥३॥
यदोपरि समायात्य, चन्द्रोऽपि निष्कलङ्कताम् । याति श्रोतुं च गीतानि, यदा तिष्ठति चैणकः ॥४॥
अथास्ति तत्पतिः ख्यातः, खड्गधाराजितारिकः । सन्तर्पिताखिलो भोजो, महत्या दानधारया ५
तस्य मन्त्री समाख्यातो, बुद्धिमान् मतिसागरः । वीतरागपदाम्भोज-सेवनैकमधुव्रतः ॥ ६ ॥
सभामापूर्य चान्येद्युः, संस्थितो हरिविष्टरे । चलच्चामरकल्लोलै-र्वीज्यमानो नराधिपः ॥ ७ ॥
कालिदासादयस्तस्य, पण्डिताः शास्त्रपारगाः । कवित्वादिकलास्तोम-कोविदा गर्विणो भृशम् ८
मिलित्वा ते समायाताः, सभायां कौतुकोत्सुकाः । संस्कृतोपस्कृतालापा, मन्त्राराधनतत्पराः ॥९॥
कालिदासेन संच्छिद्य, स्वपादौ नवि(वी?)नौ पुनः। कालिकां च समाराध्य, समानीय प्रदर्शितौ ॥
भग्नोदरादिरोगेण, भार्गवो पीडितो शुभात् । अम्बिकाराधनादासीद्, राज्ञोऽग्रे कामसन्निभः ११
गलत्कुष्ठेन रोगेण, माघोऽभूद् व्रणिताङ्गकः । राजात्रलोकनायोग्य-समाराधितसद्रविः ॥ १२ ॥
सूर्यांशुव्याप्तमद्देहो, दृश्यते सुन्दराकृतिः । इत्यादि बहुधाऽऽश्चर्यं, दर्शितं तैः प्रभोः पुरः ॥ १३ ॥
वयमेव हि मन्त्रज्ञाः, शास्त्रज्ञा वयमेव च । किञ्चिज्जानन्ति नो देव!, दिक्पटा ज्ञानविच्युताः १४
तेषां गर्वोद्धतं वाक्य-माकर्ण्य स्व(क)मन्त्रिणम् । संप्रोवाचेति गुरव-स्तावकाश्चेन्ममाग्रतः ॥ १५ ॥
स्वविद्याबलतः किञ्चिद्, दर्शयन्तु च कौतुकम् । तर्हि मान्याः स्थितिश्चैषां, नान्यथा मामके पुरे ॥
स्वात्मकार्यकरा एते, सर्वजीवदयावहाः । मन्त्रादिकं न कुर्वन्ति, देव ! तेनोदितं पुनः ॥ १७ ॥
तथापि तद्वचं मत्वा, बहुचिन्तातुरोऽभवत् । तावत् समायर्यौ तत्र, मुनिपो ज्ञानलोचनः ॥१८॥
मानतुङ्गः स्वचारित्र-पवित्रीकृतभूतले(लः?) । तदागमं प्रतिज्ञाय, वन्दितुं जग्मिवान् स तम् १९
मन्त्रिणा कथितं श्रुत्वा, वृत्तान्तं धर्मवत्सलः । जातरूपः समायासीन्-मुनीशो राजसंसदि ॥२०॥
परिक्षिप्तं च तद्विद्यां, भोजस्तुर्याधिकाम्तदा । चत्वारिंशन्मुनेरङ्गे, लोहमुद्रा विधाय च ॥ २१ ॥
चतुर्भूमीतले हर्म्ये, निक्षिप्य मुनिमुत्तमम् । कपाटतुर्यकं राज्ञा, दापितं मुद्रयाऽन्वितम् ॥ २२ ॥
वृषभस्तवनं रात्रौ, तेनारब्धं तदा महत् । एकैकं क्रियमाणं सत्, काव्यं मन्त्राक्षरान्वितम् ॥२३॥
छिनत्ति लोहमुद्रां च, ह्येकैकं मुनिदेहतः । एवं सर्वाश्च ताः प्राप्ता, भिदां लोहस्य शृङ्खलाः ॥२४॥
ततः प्रगे समायात्य, संस्थिते नृपतेः पुरः । करस्थशृङ्खलः साधुः, सर्वलोकसमक्षकम् ॥ २५ ॥
जगादेति नराधीश!, विद्यावान् कोऽपि तेऽस्ति चेत् । करस्थशृङ्खलां तर्हि, मम दूरीकरोतु सः २६
स्वविद्यां प्रकटीकृत्य, कालिदासादयश्च ते । राजाज्ञया कृतोपाया, नाशकन् तन्निराकृतौ ॥२७॥
तेनाकाधिक्षमा नते, स्वविघ्ननिग्रहेऽत्र किम् । शृगालो जीयते यैर्न, कथं तैर्हरिणाधिपः? ॥२८॥
असत्यवचनासक्ता, मायादर्शितकौतुकाः । मिथ्यागर्वोद्धता मुग्ध-प्रतारणपरायणाः ॥ २९ ॥
इत्युक्त्वा चरमं काव्यं, संस्कृतं तेन तत्क्षणे । पश्यत्सु सर्वलोकेषु, शृङ्खला भिदमागमत् ॥ ३० ॥
लोहमुद्राऽतिगं वीक्ष्य, विस्मितोऽभून्नृपो हृदि । विलक्षत्वं गताश्चान्ये, दुःखदो हि पराजयः ३१
त्वमेव भुवने धन्यो, मोहहन्ता त्वमेव च । तपोधनस्त्वमेवासि, त्वमेव ज्ञानवानिह ॥ ३२ ॥
सत्यवाक्याङ्कितस्त्वं वा, शिवमार्गस्त्वमेव च । त्वमेव शङ्करो लोके, हितकर्ता त्वमेव च ३३

कृतागसां हि जन्तूनां, क्षमायोग्यस्त्वमेव च । इति स्तोत्रशतैः स्तुत्वा, नृपः पादावनौ स्थितः ३४
ततो धर्मोपदेशेन, मानतुङ्गोदितेन हि । जिनधर्मकरो जातो, भोजः श्रावकसत्तमः ॥ ३५ ॥
धर्मप्रभावनामित्थं, संविधाय महीतले । ययौ देशान्तरं साधु–रर्चनीयो नृपादिभिः ॥ ३६ ॥
ततो जिनालयास्तेन, राज्ञा संस्कारिताः पुरि । सुपात्रे ददते दानं, जिनबिम्बान्यनेकशः ॥ ३७ ॥
इदं भक्तामरस्तोत्रं, मानतुङ्गकृतं शुभम् । प्राप्नुवन्तीष्टसिद्धीस्ते, भावशुद्ध्या पठन्ति ये ॥३८॥
उत्पन्ने कारणं पूर्वं, स्तोत्रस्य गदितं मया । अधुना प्रोच्यते सारं तन्माहात्म्यस्य वर्णनम् ॥३९॥"

**श्रीमानतुङ्गसूरीणां कृतिततिः—**

श्वेताम्बरसम्प्रदायानुसारेण—(१) नमिऊणस्तोत्रं प्राकृतभाषायां गुम्फितं जैनजगति पञ्चम-सरणरूपेण च प्रसिद्धम्, (२) श्रीभक्तामरस्तोत्रम्, (३) श्रीभत्तिब्भरस्तवः ।[१]

सप्तदशशताब्दीयदिगम्बरीयपट्टावलीपुरस्सरं तु—

(१) [३]चिन्तामणिकल्पः, (२) मणिकल्पः, (३) चारित्रसारः, (४) उपसर्गहरस्तोत्रम्, (५) भक्तामरस्तोत्रम् ।

**श्रीमानतुङ्गसूरीणां समयः—**

अनेकग्रन्थाप्रकटनादैतिहासिकसाधनानुपलब्धेर्धर्मान्धाजैनवर्गभस्मीभूतसाहित्याच्च दुःशकः प्राचीनमहर्षिसमयनिर्णयः । तत्रापि यदा समाननामधारिणोऽन्येऽपि श्रुतिपथमवतरन्ति, तदा विशेषकष्टसाध्योऽयं प्रश्नो भवति । प्रथमं तावत् मानतुङ्गनामधारिणो मुनिवराः कति इति विचार्यते । एके 'जयन्तीप्रश्नोत्तरसङ्ग्रह'स्य सिद्धजयन्तीचरित्रापरनाम्नः प्रकरणस्य कर्तारः, द्वितीये 'परिग्रहप्रमाण'प्रणयितारः, तृतीये श्रीविक्रमात् १३३२तमे वर्षे श्रेयांसनाथचरित्र-रचयितारः । आद्येऽन्तिमे च भक्तामरस्तोत्रकर्तृभिर्भिन्ना इत्यवगम्यते, १३३४तमवैक्रमाब्दीय-प्रभावकचरितान्तर्गतश्रीमानतुङ्गप्रबन्धस्य [९]१६८तमपद्यावलोकनात् काव्यानुशासने (पृ. ६७) च भक्तामरस्य काव्यस्यैकादशस्यावतरणात् ।

१ श्रीधर्मघोषसूरिभिः श्रीमेरुतुङ्गसूरिभिश्च रचित ऋषिमण्डलस्तवो भक्तिभरेत्यपराह्वः स भिन्नः ।

२ "गुणेषु रागः सुकृतेषु लाभः, रोषश्च दोषश्च भवश्च कामः ।
श्रीमानतुङ्गस्य तथापि धर्मं, श्रीवीतरागस्य स एव वेत्ति ॥"

अनेन पद्येनानुमीयते यदुत एतत्पद्यात्मकस्य ग्रन्थस्य कर्तृनाम मानतुङ्गेनीति श्रीविचक्षणविजयाः ।

३ भ्रान्तिजन्योऽयमुल्लेख इति मत मे, यत कृतिरिय श्रीमानतुङ्गसूरिशिष्यश्रीधर्मघोषसूरीणाम् । उक्तं च तत्रैव प्रान्तपद्ये—"श्रीमानतुङ्गशिष्येण, धर्मघोषेण सूरिणा । रचितोऽनल्पकल्पोऽय, चिन्तामणिजगत्प्रभो. ॥४५॥"

४–५ अभिन्नौ इमौ इति प्रतिभाति । ६ एतत्प्रणयितार श्रीभद्रबाहुस्वामिन इति सुप्रसिद्धा श्वेताम्बरीया परम्परा ।

७ अस्योपरि एतच्छिष्यरत्नश्रीमलयप्रभमुनिवर्यैर्व्यरचि वृत्तिः ६६००श्लोकप्रमाणिका १२६०तमे वैक्रमीयाब्दे ।

८ एतदुल्लेखार्थं वीक्ष्यतां प्रो० पिटर्सन रिपोर्टसञ्ज्ञकस्य ग्रन्थस्य प्रथमस्य विभागस्याद्यं परिशिष्टं (पृ. ९४) ।

९ एतत् पद्य यथा—
"इत्थं श्रीमानतुङ्गप्रभुचरितमतिस्थैर्यकृज्जैनधर्म-
प्रासादस्तम्भरूपाः सुकृतभरमहापट्टविष्टम्भहेतुः ।
श्रुत्वा कुत्रापि किञ्चिद् गदितमिह मया सम्प्रदाय च लब्ध्वा
शोध्यं मेधाप्रधानैः सुनिपुणमतिभिस्तच्च नोपेक्षणीयम् ॥"

उपदेशचिन्तामणिलेखकानामपि नामधेयं मानतुङ्गमिति गम्यते तत्प्रशस्तिगतैर्निम्नलिखितैः पद्यैः, किन्तु न चायं मुनिः प्रास्ताविकः, वैक्रमीयपञ्चदशाब्द्यां तत्सत्तायाः।

"तेषां शिष्याः श्रीमन्मुनिशेखरसूरयो नयोपेताः।
श्रीजयशेखरसूरिः श्रीसूरिर्मेरुतुङ्गश्च ॥ १० ॥
एतेषु शिष्यः खलु मध्यमोऽहं, मोहं कुबोधप्रभवं विहाय।
गुरूपदेशादुपदेशचिन्ता-मणिश्रुतं सूत्रतया व्यगुम्फम् ॥ ११ ॥
व्यधां च तस्य स्वयमव्यलीकां, टीकां कथासारविचारहृद्याम्।
दण्डायुधाम्भोनिधिचन्द्र( १४३६ )सङ्ख्ये, वर्षे पुरे 'श्रीनृसमुद्र'नाम्नि ॥ १२ ॥
अनुजश्च सतीर्थ्यश्चा-स्माकं टीकामिमां मुदा।
लिलेख प्रथमादर्शे, मानतुङ्गगणिर्गुणी ॥ १३ ॥"

एवं सत्यां परिस्थित्यामनुमीयते यदुतेमे भक्तामरस्तोत्रकर्तारः श्रीमानतुङ्गसूरयः काव्यानुशासनकर्तृसमयपूर्वगामिनः।

अपरञ्च प्रभावकचरिते प्रबन्धचिन्तामणौ एतत्स्तोत्रटीकादौ एतेषां मयूर-बाणाभ्यां समानकालिकत्वं सूचितम्। परन्तु अस्य निरासः सविस्तरः कृतः क्केकनेबोसनामधेयैः डॉक्टरेत्युपाधिभूषितैर्मयूरशतकप्रस्तावनायाम्। एषां महाशयानां मते श्रीमानतुङ्गसूरयः वैक्रमीयतृतीयशताब्दीमलङ्चक्रुः।

अस्मिन् प्रस्तावे "मानतुङ्गसूरिः तेन नागपुरे विक्रमतस्त्रिंशति वर्षे नेमिनाथप्रतिष्ठा कृता वीरात् ७७०" इत्युल्लेखोऽपि समीक्ष्यताम्। किञ्च तर्कयन्तु तार्किका डॉक्टरयकॉबिमहाशयमत यदुत श्रीकल्याणमन्दिरस्तोत्रकारपूर्वगामिनो मानतुङ्गसूरिवर्याः।

भक्तामरटीकाकारपरिचयः—

श्रीभक्तामरस्तोत्रस्य विविधविबुधवर्यैर्विरचिता व्याख्याः[२]। तत्र श्रीगुणाकरसूरि-श्रीमेघविजयोपाध्याय-श्रीकनककुशलगणयः प्रसङ्गोपात्ताः, अतस्तेषां विषये यथासाधनं विचारः करिष्यते।

तावद् गुणाकरनामधेयाः पञ्च मुनिवर्या अभूवन् जैनशासनासक्ताः। ११७८तमे वर्षे सप्तक्षेत्री( दर्शनशुद्धिप्रकरणवृत्ति ? )रचयितार एके। विद्यासागरश्रेष्ठिकथाविधातारो द्वितीयाः। १२९६तमे वर्षे श्रीनागार्जुनकृतयोगरत्नमालाप्रणेतारः तृतीयाः। सम्यक्त्वकौमुदीगुम्फितारश्चतुर्थाः। १४२६तमे वर्षे भक्तामरवृत्तिविरचयितारः प्रासङ्गिकाः पञ्चमे। एतेषां परिचितिः स्पष्टीभवति तत्कृतभक्तामरस्तोत्रवृत्तिप्रशस्तिपरामर्शेन।

---

१ प्रबन्धचिन्तामणौ ग्रन्थकर्तृत्वविषये विशेषवक्तव्यतायामयमुल्लेखः कृतः श्रीदीनानाथतनुजै. रामचन्द्रशास्त्रिभि।

२ प्रेक्ष्यतां भूमिकायाः षोडश पृष्ठम्। ३ इमे प्रथमा भक्तामरवृत्तिरचनासमयापेक्षया, विद्यार्थिसमुपकारकाश्च-तु युक्तिरत्नाकर-तर्कभाषाटीका-ऽऽख्यातवादटीका-ऽनेकार्थसङ्ग्रहवृत्ति-सप्तपदार्थीटीकादिग्रन्थगुम्फितारः श्रीभानुचन्द्रविनेयाः श्रीसिद्धिचन्द्रा आद्या, तत्कृतवृत्तौ व्याकरणकोशादिपाठप्राचुर्यात्।

श्रीमेघविजयपूर्ववर्तिभिर्मुनिवरैरपि भक्तामरटीका निरमायीत्यवगम्यते कश्चित्-कौशाम्ब्यां-कोशाम्ब्यामित्युल्लेखानां नवमसप्तदशाष्टाविंशैकषष्टितमपृष्ठेष्ववलोकनात्।

श्रीगुणाकरसूरयः गुणसुन्दरेत्यपरनामधेया इति प्रतिभाति Bombay Branch of the Royal Asiatic Society सत्कभाण्डागारस्थ भक्तामरस्तोत्रवृत्तिप्रतौ प्रशस्तिगतप्रथमपद्यप्रान्ते निम्नलिखितोल्लेखप्रेक्षणात्—

"नवाङ्गवृत्तिकारकश्रीअभयदेवसूरिसन्तानीयश्रीगुणचन्द्रसूरिशिष्योपाध्यायगुणसुन्दरविरचिता श्रीयुगादिदेवस्तवविवृतिः समाप्ता ।

यद् गदितमर्थकूटं यल्लक्षणशब्दतश्च दुष्टमिति हि ।
तत् साधुभिः सुधीभिः शोध्यं सद्यः प्रसद्य मयि ॥ १ ॥

ग्रन्थाग्रं १५७१ सकलाक्षरसङ्कलनयेति । श्रीहंसकीर्तिगणिनाऽलेखि श्री'खरतर' गच्छे श्रीजिनभद्रसूरिविजयराज्ये ।"

एतदवसर्पिणीसञ्जाताद्यान्तिमतीर्थङ्करौ श्रीनाभेय-महावीरौ प्रणम्य श्रुतदेवतां च संस्तुत्य तीर्थङ्करपदाभिलाषिभिः (पृ. २७) श्रीगुणाकरसूरिभिः विवृतिः प्रारब्धा । तत्रादौ काव्योत्पत्तिरसूचि । अन्तेऽन्तिमपद्यस्य विविधा अर्था दर्शितास्तैः । वृद्धभोज-मयूर-तज्जामातृ-बाणसमसमयिनः श्रीमानदेवपट्टमौलयो भयहरभक्तिभरस्तवादिरचयितारश्च श्रीमानतुङ्गसूरिवरा इति तेषां मतम् ।

महोपाध्यायश्रीमेघविजयानां प्रस्तावः—

अध्यात्मकाव्यज्योतिर्निमित्तव्याकरणादिविषयकानां नेत्रामृताञ्जननिभानामनेकेषां ग्रन्थानां गुम्फितारो महामहोपाध्यायश्रीमेघविजयगणयः सम्राट्श्रीअकब्बरदत्तजगद्गुरुबिरुदधारकबृहत्तपागच्छाधिपतिश्रीहीरविजयसूरीश्वरशिष्यसंन्तानीयश्रीकृपाविजयविनेयाः । श्रीमन्तो

१ वंशवृक्ष.—




२ अत्र देवानन्दाभ्युदयकाव्यप्रशस्तिगत निम्नलिखितं पद्यमपि प्रमाणम्—

"तत्सेवासक्तचेता अनवरततया प्राप्तलक्ष्मीर्विशिष्य
शिष्यः श्रीमत्कृपादेर्विजयपदभृत. सत्कवेर्वाचकश्रीः ।
मेघः पद्माप्रसादाद् विशदमतिगुणो व्याध्यकाव्यं चकार
देवानन्दं सदैन्द्रोज्ज्वलविपुलधिया शोध्यतां शोध्यमत्र ॥"

भवन्तो वाचकाः श्रीविजयप्रभसूरिसकाशात् लब्धवाचकपदाः श्रीमेरुविजयादीनां गुरवः। अत्र श्रीशान्तिनाथचरित्रप्रान्तस्थप्रशस्तिः प्रमाणम्।[1] तत्रोक्तम्—

"तदनु गणधराली पूर्वदिग्भानुमाली
विजयपदमपूर्वं हीरपूर्वं दधानः॥
कनकविजयशर्माऽस्यान्तिषत् प्रौढधर्मा
शुचितरवरशीलः शीलनामा तदीयः।
कमलविजयधीरः सिद्धिसंसिद्धितीर-
स्तदनुज इह रेजे वाचकश्रीशरीरः॥
चारित्रशब्दाद् विजयाभिधान-स्त्रयी सगर्भाधृतशीलधर्मा।
एषां विनेयाः कवयः कृपाद्याः, पद्मास्वरूपाः समयाम्बुराशौ॥
तत्पादाम्बुजभृङ्गमेघविजयः प्राप्तस्फुरद्वाचक-
ख्यातिः श्रीविजयप्रभाख्यभगवत्सूरे'स्तपा'गच्छपात्।
नुन्नोऽयं निजमेरुपूर्वविजयप्राज्ञादिशिष्यैरिमां
चक्रे निर्मलनैषधीयवचनैः श्रीशान्तिचक्रिस्तुतिम्॥"

महोपाध्यायश्रीमेघविजयगणीनां कृतयः—

१ युक्तिप्रबोधः स्वोपज्ञवृत्तिसमेतः ५०००श्लोकप्रमितः।[3]

---

१ एतत्समर्थने मेघमहोदयप्रशस्तिगत उल्लेखोऽयमपि हेतु —
"मेरोर्विजयकृद्धया-दलङ्घ्यो मेरुवद् धिया।
भक्त्या मे रोचित' शिष्य', श्रीमेरुविजयः कवि.॥ १०४॥"

२ इदं दृढीभवति मेघमहोदयप्रशस्तिगतनिम्नलिखितपद्यावलोकनेन—
"तच्छाम्नने जयति विश्वविभासनेऽभूद्, विद्वान् कृपादिविजयो दित्रिजन्मसेव्यः।
शिष्योऽस्य मेघविजयाह्वयवाचकोऽसौ, ग्रन्थ कृत सुकृतलाभकृतेऽत्र तेन॥ १००॥"

३ प्राकाश्यमानोऽय ग्रन्थ श्रीऋषभदासजीकेसरीमलजी मस्थया। एतत्प्रान्तस्थानि पद्यानि यथा—
"चतु.सहस्री श्लोकानां, शतत्रयसमन्विता।
प्रमाणमस्य ग्रन्थस्य, निर्मित तत् कृता स्वयम्॥ ८॥
श्री'तपा'गणविभुर्भुवि भूय. कीर्त्तिपूर्तिधवलीकृतलोक'।
सूरिरानतसुरासुरदेव. प्रोल्लास विजयादिमदेवः॥ ९॥
तत्पट्टपूर्वाचलचित्रभानु–र्दुर्वादिवादेन्धनचित्रभानु।
जेजीयते श्रीविजयप्रभाह्व, सूरि' स्वबुद्ध्या जितदेवसूरि.॥ १०॥
तत्पट्टभूषणमहसाऽतिपूषा, सुवर्णनैर्मल्यविधानमूषा।
विराजते श्रीविजयादिरत्नः, प्रभुः प्रभाध्यापितदेवरत्नः॥ ११॥
तेषा राज्ये मुदाऽकारि, वाङ्मय युक्तिबोधनम्।
मेघविजयसञ्ज्ञेन, वाचकेन तपस्विना॥ १२॥"

२ लघुत्रिषष्टिचरित्रम् (अमुद्रितम्)।

३ हैमकौमुदी चन्द्रप्रभेत्यपरनाम्नी १७५८तमे प्रमिते वर्षे प्रणीता।

* ४ सिद्धज्ञानम्।

---

तत्परम्परा चैवम्—

"श्रीमत्'तपा'गणपतिर्यतिमार्गधीरः, श्रीहीरहीरविजयो जयवान् बभूव।
यः प्रत्यबूबुधदकब्बरराजराज्यं, वाक्यैः सुधानिमधुरैर्यवनाधिराजम् ॥ १२ ॥
श्रीवाचका कनकतो विजया बभूवु-र्विद्यानवद्ययशसो भुवि तद्विनेयाः।
तेषा सुशीलविजयाः कवयो विनेया, शिष्यौ बभूवतुरतुल्यमती तदीयौ ॥ १३ ॥
आद्य. श्रीकमलादिमश्च विजयस्तस्यानुजन्मा बुध.
श्रीसिद्धेर्विजयोऽत्र तौ मम गुरोर्दीक्षाऽनुशिक्षागुरू।
श्रीसन्मानकनाम्नि धाम्नि महसो द्रङ्गे विजित्य क्षणा-
लुम्पाकेन्द्रगणान् जयश्रियममू सम्प्रापतुर्विश्रुताम् ॥ १४ ॥
य पट्टतर्कवितर्ककर्कशमति साहित्यसिद्धान्तवित्
प्राणत्रक्षितिप कृपादिविजयः प्राज्ञो विनेयस्तयो।
तत्पादाम्बुजभृङ्गमेघविजयोपाध्यायलब्धात्मना
ग्रन्थो मेरुमहीधरावधिरयं सिद्धिश्रियै नन्दतात् ॥ १५ ॥"

१ एतद्ग्रन्थस्यैका हस्तलिखिता प्रति पुण्यपत्तनस्थप्राच्यविद्यासंशोधनमन्दिरे समस्ति। तत्र प्रारम्भ एवम्—
"महोपाध्यायश्रीश्री१०८श्रीश्रीमेघविजयगणि। तत्शिष्यपण्डितश्री५श्रीमेरुविजयगणिगुरुभ्यो नमः ॥ सरस्वत्यै नम. ॥

श्रीनाभेयजिनो जीया(त्), कल्याणश्रीनिकेतनम्।
य वाक्सुधाजयादिक्षु-रस शिश्राय पारणे ॥ १ ॥"

अन्ते निम्नलिखित उल्लेख —

"तद्राज्ये जयशालिनि जज्ञे श्रीसद्गुरोः कृपाविजयात्।
श्रीविजयप्रभु(भ)सूरेरवाप्तवाचकपद स मुनिः ॥ २० ॥
श्रीमेघविजयनामा विनयविलास लघुत्रिषष्टीयम्।
चक्रे कोष्ठागारिकवनराजाभ्यर्थनायोगात् ॥ २१ ॥"

सद्गुरुपरम्परा चैवम्।

"रेजे राजाधिराजा अकब्बरयवनाधीश्वरः पातिसाहि-
यस्तं स्वक्तिप्रशस्त्या वचनरचनयाऽबूबुधद् धर्ममार्गम्।
श्रीसूरिर्भूरिकीर्तिश्रमणगणतपाह्वानभूपस्वरूपः
श्रीमान् श्रीहीरपूर्वो विजयपदधर श्रीधराभ्यर्चनीयः ॥ २२ ॥
कनकविजयनामा वाचक· प्रौढधामा-ऽप्यभवदिह विनेयः श्रेयसामेकधाम।
तदनु विशदशीलः शीलनामा कवीन्दु-र्जितयमपि तदन्तेवासिनां प्रादुरास ॥ २३ ॥
कमलविजयनामा यो द्वितीयश्च सिद्धे, विजय इति तृतीयश्चारुचारित्रपूर्वः।
प्रशमसमयसिन्धु· सिन्धुरस्तर्ककेषु, समजनि जनितश्रीर्वाचकोऽस्मिन् गणेऽपि ॥ २४ ॥
श्रीकृपाविजयनामकवीन्द्राः सान्द्रचान्द्रमहसो यशसा ते।
तद्विनेयनयवाग्विनया ज्योतिर्मेमोजेत(?)पवित्रचरित्रम् ॥ २५ ॥"

२ इदं व्याकरणं मुद्रापितं श्रीजैनश्रेयस्करमण्डलेन।

* एतच्चिह्नेन सूच्यते यदुतैतद्ग्रन्थनामादिनिर्देशोऽकारि मया मुनिश्रीविचक्षणविजयनिवेदनाधारेण। एतेषामतोऽहमृणी वर्ते।

५ [1]श्रीशान्तिनाथचरित्रं नैषधीयमहाकाव्यपादपूर्तिरूपम् ।

६ [2]मेघदूतसमस्यालेखः ।

७ देवानन्दाभ्युदयः । इदं [3]महाकाव्यं माघसमस्यारूपं श्रीविजयदेवगुरुवर्णनात्मकं १७२७तमे प्रमिते वर्षे विरचितम्, श्रीयशोविजयजैनग्रन्थमालायां च प्रकाशितम् ।

८ श्रीशङ्खेश्वरपार्श्वप्रभुस्तवनं श्रीसारणाचलेत्यादिप्रारम्भकं परिशिष्टेऽत्र मुद्रापितम् ।

९ [4]दिग्विजयमहाकाव्यम् । इदमुदयश्रीसङ्केतात्मकं त्रयोदशसर्गीयं श्रीविजयप्रभसूरिजीवनविस्तारवर्णनात्मकम् ।

१० मातृकाप्रसादः । अयं ग्रन्थो धर्मनगरे वैक्रमीये १७४७तमे प्रमिते वर्षे रचितः ।[5] अस्मिन् ग्रन्थे 'ॐ नमः सिद्धम्' इति वर्णाम्नायस्य विवरणं वरीवर्ति ।

११ [6]विजयदेवमाहात्म्यविवरणम् । पन्न्यासश्रीवल्लभोपाध्यायगणिविरचितान्तर्गतकिञ्चित्प्रयोगविवरणरूपम् ।

---

१ जैनविविधसाहित्यशास्त्रमालाया मुद्रितम् ।

२ प्रकाशितोऽयं ग्रन्थः श्रीजैनआत्मानन्दसभया ।

३ अस्य प्रशस्तिगतं पद्यं यथा—

"मुनिनयनाश्वेन्दु( १७२७ )मिते वर्षे हर्षेण 'सादडी'नगरे ।
ग्रन्थः पूर्णः समजनि विजयदशम्यामिति श्रेयः ॥"

४ उग्रसेन(आग्रा)नगरस्थश्रीविजयधर्मलक्ष्मीज्ञानमन्दिरसत्कायाः प्रतेः प्रारम्भो यथा—

"ॐ ऐं ह्रीं श्रीं क्लीं अर्हं श्रीशङ्खेश्वरपार्श्वपरमेश्वराय जगदेकवीराय नमः ॥
स्वस्ति श्रीर्नृसुरासुरक्षितिभृतां वाल्लभ्यमभ्यस्यति
यत्पादाम्बुजसेवनापरिचयादुल्लासपीतद्युतिः ।
तारुण्यातिशये जगत्त्रयजयं रूपेण लब्ध्वा स्वयं
कारुण्याद् भगवान् स नाभितनयः पुष्णातु पुण्योदयम् ॥ १९ ॥"

अन्ते त्वेवम्—

"एवं देवनिषेवणप्रणयिना सर्वोऽपि पूर्वा हरित्
तीर्थानामभिवन्दनेन सुदृशा सम्भाविता तेन सा ।
सम्प्राप्तेन महोदयश्रियमहो पुण्यैरगण्यैस्ततः—
श्चातुर्मास्यविधानतः पुनरपि श्रीपत्तनान्तःस्थितम् ॥ १०२ ॥

इति श्रीदिग्विजयनाम्नि महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते उदयश्रीसङ्कलिते श्रीतीर्थराजगिरि श्रीगौतमस्वामिश्रीसुधर्मस्वामिस्तुतिवर्णनो नाम त्रयोदशः सर्गः ॥ श्रेयसेऽस्तु ॥"

५ एतदन्ते प्रशस्तिगतानि निम्नलिखितानि पद्यानि समर्थयन्त्युल्लेखमिमम्—

"श्रीमत्तपागच्छपतेर्व्रतेन, सुधर्मणः श्रीविजयप्रभस्य ।
क्षमाकम्राक्रोऽन्तिषदेष धीरः, श्रीमत्कृपादेर्विजयाह्वयानाम् ॥ ७६ ॥
नाम्ना श्रीमेघविजयो-पाध्यायोऽध्यायतत्परः ।
स्वसम्यग्दृष्टिनैर्मल्य-प्रकाशायाभ्यधादिदम् ॥ ७७ ॥
संवत्सरेऽश्ववार्धीश्व-भूमिते पौष उज्ज्वले ।
श्रीधर्मनगरे ग्रन्थः, पूर्णश्रियमशिश्रियत् ॥ ७८ ॥"

६ मुद्राप्यमाणमिदं श्रीयुतप्रेमचन्द्रकेसरीमलकारकग्रन्थमालायां द्वितीयाङ्करूपेण ।

१२ सप्तसन्धानमहाकाव्यम् । अस्मिन् काव्ये श्रीऋषभ-शान्ति-नेमि-पार्श्व-वीरेति-नामधेयानां पञ्चानां तीर्थपतीनां श्रीकृष्णवासुदेवस्य श्रीरामचन्द्रस्य च जैनदर्शनानुसारि माहात्म्यं वर्णितं विद्यते । एकैकस्य पद्यस्यार्थाः सप्तधा भवन्तीति नामचरितार्थता ।

१३ हस्तसञ्जीवनम् ।

* १४ ब्रह्मबोधः ।

* १५ अर्हद्गीता ।

१६ मेघमहोदयः । अयं ग्रन्थो वर्षप्रबोधापरनामकः सार्धत्रिसहस्र(३५००)श्लोकमितश्च । अस्मिन् ग्रन्थे भगवती-स्थानाङ्ग-श्रीहीरविजयकृतमेघमाला-रौद्रीयमेघमाला-रत्नमाला-त्रैलोक्यदीपक-विवेकविलास-श्रीभद्रबाहुसंहिता-गार्गीयसंहिता-वाराहिसंहितादिग्रन्थेभ्य उद्धृताः साक्षिभूतपाठाः सन्ति ।

१७ मध्यमव्याकरणम् ३५००श्लोकप्रमितम् ।

१८ लघुव्याकरणं शब्दचन्द्रिकेत्यपराह्वयं षट्शतीश्लोकप्रमाणकम् ।

१९ थावच्चाकुमारस्वाध्यायः ।

२० सीमन्धरस्वामिस्तवनम् ।

२१ पर्वलेखाः । इमे १७३०तम-१७४९तम-१७५१तमेतिवैक्रमीयाब्दत्रितयसम्बन्धिनः ।

२२ श्रीपार्श्वनाथनाममाला गूर्जरगीर्गुम्फिता ।

२३ भक्तामरटीका अस्मिन् ग्रन्थे मुद्रापिता ।

२४ उदयदीपिका ।

---

१ एतदवगम्यते तत्प्रशस्तिगतनिम्नलिखितपद्यात्—

"अनुष्टुभां सहस्राणि, त्रीणि सार्धानि मानि(न)तः ।
ग्रन्थोऽयं वर्षबोधाख्यो, यावन्मेरुः प्रवर्तताम् ॥ १०२ ॥"

२ अन्तेऽयमुल्लेख.—

"श्रीपास जिनवर विनतसुरनर हरिहर सेवितपाद ए,
भयभीडभंजन भविकरंजन सेवकजन सुप्रसाद ए,
तप गच्छ सुंदर मुनिपुरंदर विजयप्रभसूरिराय ए,
तस पुण्य राजइ पंडित छाजइं कृपाविजय उवझाय ए. ३८
तस सीस बधुर 'दीव' बंदिर मेघविजइं जयकरी,
ए नाममाला गुणविशाला रची गुरुपद अनुसरी. ३५

संवत् १७२१ वर्षे भट्टारकश्री१०८श्रीविजयप्रभसूरीश्वरचरणसेवां कुर्वता चतुर्मासकमध्ये पं० मेघविजयेन कृता लिखिता च श्रीशत्रुंजयादितीर्थयात्रासंघपतिपट्टभक्त वसा. श्रीनेमीदास-सामीदास-वीरदास पठनार्थम् ।"

३ भाण्डारिकाख्यसंशोधनमन्दिरसत्कायां प्रत्यां प्रारम्भिकः प्रान्तिमश्च भाग एवम्—

"नत्वाऽर्हन्तं पार्श्वभास्वद्-रूपं शङ्खेश्वरस्थितम् ।
श्रीभाग्यमल्लनृप सिंहे, धर्मकामः प्रतन्यते ॥ १ ॥

* २५ रावणवंशस्येतिहासः ।
* २६ भूविश्वेत्यादिकाव्यविवरणम् । अस्यान्तर्गतो विंशयन्त्रविधिः ।
* २७ पञ्चार्थीस्तव आचार्यनामगर्भितः ।
* २८ रावणाष्टकम् ।
२९ रमलशास्त्रम् ।
३० पञ्चाख्यानम् ।
३१ पञ्चमीकथा ।
* ३२ अर्जुनपताकायन्त्रविधिः ।[3]
* ३३ विजयपञ्च(पताका)विधिः ।
* ३४ भाषा चोवीसी ।

---

श्रीकेशवकृतार्थस्य, श्रीपार्श्वस्य प्रभावत ।
प्रभासभाजनानन्द-हेतुरग्रास्तु वस्तुत ॥ २ ॥
कृपामूलेऽर्हता धर्मे, श्रीमेघविजयोदय. ।
गवा रसप्रसारेण, भूयाज्जीवनसम्पदे ॥ ३ ॥"
"श्रेणीप्रश्नाक्षरेत्यादौ, काव्ये पाठविशोधनम् ।
श्रीमेघपूर्वविजयो-पाध्यायः कृतवानिदम् ॥ १ ॥
बद्धाऽञ्जलितया चैष, सता विज्ञप्तिमातनोत् ।
प्रसद्य मयि बालेऽपि, पाठशुद्धिर्विधीयताम् ॥ २ ॥
धर्मलाभ सतां वाच्य , प्राप्य सज्जनसङ्गतिम् ।
बहूनामुपकाराय, वेधा मेधाविना व्यधात् ॥ ३ ॥
जन्मलाभ धर्मलाभ, द्वय च धर्मसाधनम् ।
हस्तसञ्जीवनं वृत्त्या, वृत्त्याऽऽलोक्य विदन्त्विमम् ॥ ४ ॥
किञ्चिच्छेषविशेषार्थ-मुदितोदयदीपिका ।
जज्ञे प्रकरण तस्यां, सूर्यसम्मितमुत्तमम् ॥ ५ ॥
तपागच्छेशविजय-प्रभसूरीशसेवक. ।
शिष्य कृपादिविजय-विदुषामभ्यधादिमाम् ॥ ६ ॥
सूर्याचन्द्रमसौ याव-ल्लोक भासयतो रुचा ।
तावदर्थप्रकाशाय, भूयादुदयदीपिका ॥ ७ ॥
इति श्रीमदुदयदीपिका महोपाध्यायश्रीमेघविजयगणिकृता सिद्धिसौधमध्यमध्यास्त ॥ श्रीः ॥"

१ "तपागच्छेशसूरिश-विजयप्रभसेवक. ।
कृपाविजयधीराणां, शिष्योऽर्हच्छासनश्रियै ।
श्रीमेघविजयः प्राप्तो-पाध्यायपदवीश्रुत ।
भूविश्वेत्यादिकाव्यस्य, व्याख्यान चकिवानिदम् ॥"

२ "वाचकैर्मेघविजयै-र्विंशयन्त्र सुसूत्रितम् ।
श्रीवीरपार्श्वय(प)त्पद्मा-नुभावादस्तु सिद्धिदम् ॥"

३ एतन्नामधेयैका हस्तलिखिता प्रतिः प्राच्यविद्यासंशोधनमन्दिरे मया दृष्टा । सा जैनकृतिरिति निःसन्देहम्, किन्तु तत्र तत्कर्तुर्नाम मे नयनगोचरतां न गतम् ।

**श्रीकनककुशलगणीनां परिचितिः—**

श्रीमन्तः कनककुशलगणयः कदा कतमं मेदिनीमण्डलं मण्डयामासुरिति जिज्ञासायां जातायामुच्यते—

इमे पण्डिताः श्री'तपा'गच्छगगनदिनमणिजगद्गुरुविरुदविख्यातश्रीहीरविजयसूरीशशिष्य-श्रीविजयसेनसूरिराजशिष्यश्रीसोमकुशलगणीनां विनेयाः। श्रीमन्तः शान्तिचन्द्रवाचका एतेषां विद्यागुरवो वैक्रमीयसप्तदशशतकं स्वसत्तया समलञ्चक्रुः। एभिर्महाशयैः के के ग्रन्था गुम्फिता इति प्रश्नसमाधानार्थं विलोक्यतामिदमेव पृष्ठम्। तद्दर्शनेनेदमपि स्पष्टीभविष्यति यदु-तैभिः श्रीविक्रमार्कात् १६५२तमे प्रमिते वर्षे काव्यपञ्चकस्य वृत्तिर्व्यधायि। तत्पूर्वं प्रायस्तैर्न कोऽपि स्वतन्त्रग्रन्थो व्यरचि। एवं सति वृत्तिकाररूपेणैव प्रथमतः ख्यातिं प्रापुः।

**श्रीकनककुशलगणीनां कृतिकलापः—**

१ श्रीजिनप्रभसूरिकृतचतुर्विंशतिजिनस्तोत्रवृत्तिः ५०१श्लोकप्रमाणिका १६५२-तमे च वर्षे प्रणीता।

२ श्रीमानतुङ्गसूरिकृतभक्तामरस्तोत्रवृत्तिः १६५२तमे वर्षे प्रणीता।

३ श्रीसिद्धसेनदिवाकरकृतकल्याणमन्दिरस्तोत्रवृत्तिः ६००श्लोकप्रमाणगता १६५२तमे वर्षे च प्रणीता।

४ पञ्चमीपर्वस्तुतिवृत्तिः १६५२तमे वर्षे रचिता।

५ श्रीजिनप्रभसूरिकृतस्य 'ऋषभनम्र०'स्तोत्रस्य १६५२ तमेऽब्दे रचिता वृत्तिः।

६ ज्ञानपञ्चमीकथा १५०श्लोकमिता १६५५तमे वर्षे च प्रणीता।

---

१ प्रान्तस्थ उल्लेखश्चायम्—

"श्रीविजयसेनसूरिप्रसादतो नयनबाणरसचन्द्रे (१६५२)
प्रमिते वर्षे भवेद् रचिता वृत्तिरियं कनककुशलेन ॥ १ ॥"

२ एतस्याः प्रशस्तिरेवम्—

"श्रीमत्तपागणनभोऽङ्गणपद्मबन्धु-र्भाग्याद्कब्बरमहीरमणाद्वसाम्।
ख्याति जगद्गुरुरिति प्रथितां दधान, सश्रीकहीरविजयाभिधसूरिरासीत् ॥ १ ॥
तत्पट्टे वरगुणमणि-गणरोहणभूधरा धरापीठे।
सम्प्रति ह्यद्भुतयशसो विजयन्ते विजयसेनसूरिवराः ॥ २ ॥
वाचकचूडामणय, श्रीमन्तः शान्तिचन्द्रनामानः।
विद्यागुरवो विबुधा, विजयन्तां कमलविजयाश्च ॥ ३ ॥
एषां श्रीसुगुरूणां, प्रसादतो नयनबाणरसचन्द्रैः (१६५२)।
प्रमिते वर्षे रचिता, वृत्तिरियं कनककुशलेन ॥ ४ ॥
प्रत्यक्षरगणनया, वृत्तौ सङ्ख्या चतुःशती। सप्तपञ्चाशता श्लोकैरधिका समजायत ॥ ५ ॥"

७ दानप्रकाशः[1] ८४०श्लोकप्रमाणकः १६५६तमे प्रमिते वर्षे प्रणीतः ।
८ [2]रोहिणीकथा २००श्लोकप्रमाणात्मिका [3]१६५७तमेऽब्दे रचिता ।
९ दीपालिकाकल्पः ( प्राकृतभाषायाम् ) ।
१० विशाललोचनस्तोत्रवृत्तिः ।
११ सकलार्हच्चैत्यवन्दनवृत्तिः ।
१२ 'स्नातस्याः'स्तुतिवृत्तिः ।
१३ 'देवाः प्रभो'स्तोत्रवृत्तिः ।
१४ वरदत्तगुणमञ्जरीबावनी ।
१५ गोडीपार्श्वनाथच्छन्दः ।
१६ साधारणजिनस्तवनवृत्तिः[4] ।



---

१ अयं ग्रन्थः प्रकाशितः पण्डितहीरालालैः । तदन्ते उल्लेखोऽयम्—

"इति श्रीतपागच्छनायकश्रीविजयसेनसूरीश्वरशिष्यश्रीसोमकुशलगणिशिष्यपण्डितश्रीकनककुशलगणिविरचिते दानप्रकाशे ।

श्रीमत्'तपा'गणनभोऽङ्गणपद्मबन्धु–र्भाग्यादकब्बरमहीरमणादवाप्ताम् ।
ख्याति जगद्गुरुरिति प्रथितां दधान , सश्रीकहीरविजयाभिधसूरिरासीत् ॥ १ ॥
तत्पट्टे वरगुणमणि–गणरोहणभूधरा धरापीठे ।
साम्प्रतमद्भुतयशसो, विजयन्ते विजयसेनसूरिवरा ॥ २ ॥
वाचकचूडामणय , श्रीमन्त शान्तिचन्द्रनामान ।
विद्यागुरवो विबुधा, विजयन्ता कमलविजयाश्च ॥ ३ ॥
एषां श्रीसुगुरूणां, प्रसादत कायबाणरसचन्द्रैः ( १६५६ ) ।
प्रमिते वर्षे रचितो, ग्रन्थोऽय कनककुशलेन ॥ ४ ॥"

२ इयं श्रीरोहिणीतपोमाहात्म्यविषयिका रोहिण्यशोकचन्द्रकथा प्राकाश्य नीता पण्डितश्रीहीरालालैः ।

३ "श्रीमत्तपगणगगना–ङ्गणदिनमणिविजयसेनसूरीणाम् ।
शिष्याणुना कथेय विनिर्मिता कनककुशलेन ॥ १ ॥
श्रीशान्तिचन्द्रवाचक–विद्यागुरुमादरात् प्रणम्य मया ।
हयभूतरसेन्दु( १६५७ )मिते वर्षे दीपोत्सवे लिलेखे ॥ २ ॥"

४ कस्याञ्चित् प्रतावुल्लेखो यथा—

"श्रीमत्तपगणगगनाङ्गणदिनमणिविजयसेनसूरीणाम् । शिष्याणुना विरचिता वृत्तिरियं कनककुशलेन ॥
सं. १७४५ वर्षे श्रा. व. ८ ।"

## श्रीकल्याणमन्दिरस्तोत्रगवेषणा

चतुश्चत्वारिंशत्पद्यात्मकस्य त्रयोविंशजिनेश्वरश्रीपार्श्वनाथस्तुतिरूपस्य श्रीकल्याणमन्दिर-स्तोत्रस्य प्रान्तं पद्यमार्याच्छन्दसि निबद्धम्, अपराणि तु वसन्ततिलकायां विरचितानि। यथा भक्तामरस्तोत्रं श्वेताम्बरैर्दिगम्बरैश्च सौवसौवकृतिरूपेण स्वीक्रियते, तथेदं स्तोत्रमपि।

अमुत्रशब्दार्थः—

कल्याणमन्दिरस्तोत्रस्य त्रयोदशे पद्ये 'अमुत्र'शब्दस्य अस्मिन्नर्थे यः प्रयोगोऽकारि कविवरैः सोऽनुचित इति केचित्। अभिधानचिन्तामणौ (का. ६, श्लो० १६४) अमरकोशेऽपि 'प्रेत्यामुत्र भवान्तरे' इति पङ्क्त्यवलोकनेन 'अमुत्र'शब्दो भवान्तरवाची ज्ञायते, न तु ऐहिक-वाची। परन्तु एम्. ए. एल्. एल. बी. इत्युपपदविभूषितलक्ष्मणरामचन्द्रवैद्येतिनामधेयकृते संस्कृताङ्ग्लकोशे 'अमुत्र'शब्दस्य दृश्यतेऽर्थत्रयम्। तत्राग्रिमोऽर्थ इहेति, तत्समर्थनार्थं दृष्टान्ती-भूता पङ्क्तिश्च यथा—"अनेनैवार्भकाः सर्वे नगरेऽमुत्र भक्षिताः।" समर्थ्यतेऽयमर्थः श्रीवि-नयचन्द्रसूरिकृतश्रीमल्लिनाथमहाकाव्यस्य प्रथमे सर्गे निम्नलिखितपद्येन—

"असारेऽमुत्र संसारे, सर्वमेव विरागकृत्।
विशेषतोऽपि चास्माक-मिदं वैराग्यकारणम्॥ २८॥"

श्रीहेमविजयगणिकृते पार्श्वनाथचरित्रे (स. ५, श्लो. ३३२) प्रयोग एवंविधार्थकः—

"ततोऽमुत्र परत्रापि, हिताय विहिताहितम्।
अमुमेव श्रये श्रेयः-शरणं शरणं विभुम्॥"

अध्यात्मकल्पद्रुमे देवगुरुत्वशुद्ध्यधिकारे १७२तमे पद्ये ऐहिकवाची अमुत्रशब्दो वर्तते, यथा—

"भक्त्यैव नार्चसि जिनं सुगुरोश्च धर्मं, नाकर्णयस्यविरतं विरतीर्न धत्से।
सार्थं निरर्थमपि च प्रचिनोष्यघानि, मूल्येन केन तदमुत्र समीहसे शम्?॥"

स्वोपज्ञहैमबृहद्वृत्तौ (पृ० १३७) उल्लेखश्चायम्—

"न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित् कश्चिदाह क भवान् उषितः? स आह अमुत्रा-वात्समिति। रात्र्यन्तयामे तु मुहूर्तमपि स्वापे हस्तन्येव अमुत्राऽवसमिति।"

अपरञ्च संस्कृतज्ञानां सुपरिचितमिदं पद्यम्—

"इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥"

अनेन सूच्यते इदमदसोः प्रायः समानता। अत एव दृश्यन्ते प्रयोगा अप्येवंविधा महाका-व्येषु। यथाहि रघुवंशे द्वितीये सर्गे—

"अमुं पुरः पश्यसि देवदारुं, पुत्रीकृतोऽसौ वृषभध्वजेन ।
योहेमकुम्भस्तननिःसृतानां, स्कन्दस्य मातुः पयसां रसज्ञः ॥ ३६ ॥
कण्डूयमानेन कटं कदाचित्, वन्यद्विपेनोन्मथिता त्वगस्य ।
अथैनमद्रेस्तनया शुशोच, सेनान्यमालीढमिवासुरास्त्रैः ॥ ३७ ॥"

अस्य महाकाव्यस्य षष्ठे सर्गे च—

"अथाङ्गराजादवतार्य चक्षु-र्याहीति जन्यामवदत् कुमारी ।
नासौ न काम्यो न च वेद सम्यग्, द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ ३० ॥"
"असौ महाकालनिकेतनस्य, वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभि-र्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ ३४ ॥"

**नैषधीयचरितस्य** ( स. १३, श्लो० ३१ ) श्रीनारायणरचितायां नैषधीयप्रकाशाख्यायां व्याख्यायां ( पृ. ५०५ ) निम्नलिखितोल्लेखावलोकनमपि प्रासङ्गिकम्—

"तस्मादमुत्र नले भवतीरता नेति न युक्तम्"

एवं सति 'अमुत्र'शब्दस्य अस्मिन्नर्थे प्रयोगो न तिरस्करणीयो धीधनैः । 'अमुत्र'शब्दस्य अमुष्मिन्नस्मिन्नर्थे प्रयोगः समीचीनः प्रतिभाति ।

**'विध्यापिताः'प्रयोगस्य परामर्शः—**

'इन्ध्'धातोर्व्युपसर्गपूर्वकस्य 'विज्झाइ' इति रूपं भवति ( अवलोक्यतां हैमप्राकृतव्याकरणस्य अष्टमाध्यायस्य द्वितीयपादस्य अष्टाविंशतितमं सूत्रम् ) । 'विज्झवइ' इति प्रेरकरूपम् । अस्य संस्कृतभाषायां परावर्तने सति 'विध्यापयति' इति रूपं भवतीतिकेचित् । हैमप्राकृतपुरस्सरसूचिता पूर्वोक्ता शब्दोत्पत्तिर्न केवलं संस्कृतसाहित्ये दुर्लभा, किन्तु माऽघटिताऽस्मिन् प्रकरणेऽर्थापेक्षया । समीचीना तु शब्दोत्पत्तिर्व्युपसर्गपूर्वकस्य ध्यैधातोर्विद्यते । 'विध्यापयति'रूपं एतन्मूलोद्भूतान्यपराणि रूपाणि च बहुधा प्रयुक्तानि जैनग्रन्थकारैः, किन्तु क्वचिदेवाजैनसंस्कृतलेखकैः । अपरञ्च 'विध्यापिताः' इति रूपं न शुभं संस्कृतम् । एतत्कल्पनायाः सत्यताऽसत्यतापरीक्षणविचक्षणैरवतार्यतां मीमांसाभूमिं मदीयमिदं नम्रं निवेदनम्—

**श्रीजिनभद्रगणिक्षमाश्रमणैर्भाष्यपीयूषपयोधिभिर्विरचिते श्रीविशेषावश्यकभाष्ये** प्रायुञ्जि 'विज्झाइ'रूपं निम्नलिखितायां गाथायाम्—

"दावानलो व्व कत्थइ लग्गइ विज्झाइ समयमन्नंतो ।
तह कोइ ओहिदेसो से जायइ नासए विईओ ॥ ७५१ ॥"

**एतद्वृत्तिकारैर्मलधारीयश्रीहेमचन्द्रसूरिभिः** प्रोक्तं ( पृ. ३६१ )—

"दग्धशुष्कतृणादिके विध्यायति-निर्वाति"

---

१ "किं ते तथा मतिरमुष्य यथाऽऽशय स्यात्, त्वत्पाणिपीडनविनिर्मितयेऽनपाशः ।
कान् मानवानवति नो भुवन चरिष्णून्-नासावमुत्र न रता भवतीति युक्तम् ॥"

योगशास्त्रे (प्र० २, श्लो० ८१) 'विध्यापयितुं' रूपं विद्यते, तथाहि—

"स्त्रीसम्भोगेन यः काम-ज्वरं प्रतिचिकीर्षति ।
स हुताशं घृताहुत्या, विध्यापयितुमिच्छति ॥"

अस्य स्वोपज्ञवृत्तौ १२२तमे पत्रे 'विध्यापयितुं-शमयितुम्' इत्युल्लेखः ।

श्रीअमरचन्द्रसूरिभिश्चतुर्विंशतिजिनेन्द्रसङ्क्षिप्तचरितेषु श्रीशान्तिनाथचरिते 'विध्यापितः' इति पदं प्रायुज्जि । तच्च स्थलमेवम्—

"रयात् नराज्ञयाऽऽप्ताभ्या-मावाभ्यां त्वचिताऽनलः ।
विध्यापितोऽयं विधिवत्, पयोभिरभिमन्त्रितैः ॥ ७८ ॥"

मलधारीयश्रीदेवप्रभसूरिभिरेतद्धातुमयः प्रयोगोऽकारि पाण्डवचरित्रे निम्नलिखितस्थानेषु, यथाहि—

"स्वकीयैरिव विध्याय-मानाः शोकाश्रुवारिभिः ।
धूमायमानाः सोऽपश्यत्, कोटिशो रचिताश्रिताः ॥"—(स. ५, श्लो. २८४)

"लोकः शोकाकुलः कामं, तं कृशानुं कृशेतरम् ।
वेगाद् विध्यापयामास, बाष्पद्विगुणितैर्जलैः ॥"—(स. ८, श्लो. ६०)

किञ्च श्रीहेमविजयप्रणीतायां कल्याणमन्दिरटीकायां समस्ति निर्देशोऽयम्—

'ध्यै चिन्तायां' धातुर्विपूर्वः 'सन्ध्यक्षराणामा' (सारस्वते सू. ८०३) धातोः प्रेरणे त्रिप्रत्ययः 'रातो औं पुक्' (सा० सू. १०३७) अतीते क्तप्रत्ययः विध्यापिताः, निर्वाणं प्रापिता इति ।"

ध्यैधातोः ध्यापयति प्रेरकरूपं निरदेशि क्रियारत्नसमुच्चये अजैनैः श्रीयुतविद्यानन्दैरपि निजे कृतिकलापे । तत्र (अ. २, श्लो. ६३) प्रोक्तम्—

"निर्वाति च विध्यायति चेत्यर्चिर्नाशे"

अनेन किं न सिध्यति ध्यैधातोर्व्युपसर्गपूर्वकस्य प्रयोगस्य समीचीनत्वं जैनाजैनग्रन्थेषु आदरणीयत्वं च[1] ।

अष्टाविंशे पद्ये चतुर्थे चरणे 'त्वत्सङ्गमे' इति सप्तम्यन्तः प्रयोगो नौचित्यं वहतीति यकोबीमहोदयानां मतम् । तैस्तत्स्थाने त्वत्सङ्गमादिति सूच्यते परन्तु तन्मतग्रहणे न किमपि कारणं वर्तते, यतः त्वत्सङ्गमे संति सुमनसः परत्र अपरत्र वा न रमन्ते इति वाक्यरचना समीचीना, अर्थवैशिष्ट्यविशिष्टा टीकाकाराभिमता च ।

---

१ इव पदमध्याहृतं ज्ञेयम् ।

चत्वारिंशत्तमे पद्ये 'चेत्'पदस्य 'वध्योऽस्मि' पुरतः स्थानं योग्यम्, न तु तत्पश्चाद्; अन्यथाऽर्थवैपरीत्यं भवतीति यकोबीमहाशयानामभिप्रायः, किन्तु न चायं समीचीनो भाति ।

प्रातिहार्यवर्णनम्—

प्रातिहार्यवर्णनात्मकानि नाना काव्यानि सन्ति श्वेताम्बरसाहित्ये । तत्राशोक-सिंहासन-चामरा-ऽऽतपत्रत्रयेतिप्रातिहार्यचतुष्कविभूषितं भक्तामरस्तोत्रम् । प्रातिहार्याष्टकस्य सम्पूर्णतया वर्णनं समस्ति कल्याणमन्दिरस्तोत्रे येनाधरीक्रियन्तेऽन्यकृतान्येतद्वर्णनानि । तथापि तेषां नामोल्लेखः प्रास्ताविकः सन् क्रियते । यथाहि—श्रीनेमिचन्द्रसूरिकृते प्रवचनसारोद्धारे (द्वा. ३९), श्रीहेमचन्द्रसूरिसन्दृब्धे वीतरागस्तोत्रे पञ्चमः प्रकाशः (श्लो. १–९), श्रीजिनसुन्दरसूरिकृते श्रीसीमन्धरस्वामिस्तवने (श्लो. २–९), श्रीजिनप्रभसूरिकृते [4]पञ्चकल्याणकस्तवने (श्लो. १९–२६) श्रीपार्श्वनाथप्रातिहार्यस्तवनेऽपि, श्रीज्ञानसागरसूरिसूत्रिते पार्श्वजिनस्तवने (श्लो. ७–१४), श्रीसहजमण्डनगणिगुम्फिते सीमन्धरस्वामिस्तोत्रे (श्लो. ७–१४), चिरन्तनमुनिरत्नरचिते सोपारकस्तवने च प्रातिहार्याष्टकवर्णनं वरीवर्ति ।

कल्याणमन्दिरप्रणेतृपरिचयः—

कल्याणमन्दिरकर्तारः श्रीस्कन्दिलसूरिविनेयमुकुन्देत्यपराह्वयवृद्धवादिशिष्या दीक्षितसमये [6]कुमुदचन्द्रनामप्रसिद्धाः श्रीसिद्धसेनदिवाकरा इति श्रीप्रभाचन्द्रसूरिभिर्निरदेशि प्रभावकचरित्राह्वयायां निजकृतौ वृद्धवादिप्रबन्धे । एतत्पुरोगामिनि कस्मिंश्चिद् ग्रन्थ एतादृगुल्लेखो मे नयनगोचरतां न गतस्तथापि जीर्णशीर्णमठप्रशस्त्याधारेण निर्मितस्य वृद्धवादिप्रबन्धस्य वास्तविकता कथं शङ्कनीया ? ।

अपरश्चैतत्स्तोत्रप्रणेतृणां प्रतिभा द्वात्रिंशद्द्वात्रिंशिका-सन्मतिप्रकरणनिर्मातृश्रीसिद्धसेनदिवाकरैर्नाधरीक्रियते इति मे नम्रं मतम् । किन्त्विदं सत्यं यदुतास्मिन् स्तोत्रे कुत्रापि स्वल्पस्तत्त्वज्ञानोन्मेषो न वर्तते यत्प्राचुर्यं सन्मत्यादिषु मेधाविमस्तकं धूनयति ।

---

१ अत्र गद्यात्मक वर्णनम् । २ श्रीयशोविजयजैनग्रन्थमालायां प्रसिद्धि नीतस्य श्रीजैनस्तोत्रसङ्ग्रहस्य द्वितीये विभागे (पृ २५–२६) । ३ मुद्रितमिदं प्रकरणरत्नाकरस्य द्वितीये विभागे (पृ. २५०) । ४–५ एतज्जिज्ञासुभिर्विलोक्यतां श्रीभक्तामरस्तोत्रपादपूर्तिरूपकाव्यसङ्ग्रहस्य द्वितीयो विभाग (पृ १६२–१६४, १६०–१६२) ।

६ "अदीक्षयत जैनेन, विधिना तमुपस्थितम् । नाम्ना कुमुदचन्द्रश्च, स चक्रे वृद्धवादिना ॥ ५७ ॥"

७ "ततश्चतुश्चत्वारिंशद्-वृत्तां स्तुतिमसौ जगौ । कल्याणमन्दिरेत्यादिविख्यातां जिनशासने ॥ १४४ ॥"

८ श्रीभद्रेश्वररचितायां कथावल्यां श्रीसिद्धसेनप्रबन्धो वरीवर्ति, परन्तु तत्र कल्याणमन्दिरस्य नामापि न दृश्यते, किं पुनस्तत्कर्तृनामधेयम् ? ।

९ कल्याणमन्दिरस्य द्वितीयया द्वात्रिंशिकया सह शब्दविन्यास-शैली-कल्पनासु किमपि साम्यं वर्तते, छन्दसि तु प्रायः सर्वाङ्गीणा समानता, यतः पृथ्वीच्छन्दोनिबद्धं प्रान्तिमं पद्यं द्वात्रिंशिकायाम्, कल्याणमन्दिरे त्वार्याच्छन्दोगुम्फितम्, अन्यानि सर्वाणि कृतियुगले वसन्ततिलकाच्छन्दसि निर्मितानि ।

अस्य स्तोत्रस्य प्रान्तेऽन्यत्र वा सिद्धसेनेति पदप्रयोगो नास्ति, अत एव नेदं तत्कर्तृकमिति कथनं प्रमाणविकलं ज्ञेयम्; यतः श्रीसिद्धसेनकृतां पंचमीं द्वात्रिंशिकामेकविंशतितमां च विहायान्यासु तत्कृतिषु 'सिद्धसेन'शब्दो न दृश्यते। स्तोत्रस्यास्य न काचन प्राचीना टीकोपलभ्यते तस्मात् तत्कर्तारः श्रीसिद्धसेनेभ्यो भिन्ना इत्यपि न सङ्गतिमङ्गति, नाना द्वात्रिंशिकायास्तथाविधटीकाऽनुपलब्धेः।

श्रीसिद्धसेनदिवाकरसमयः—

कल्याणमन्दिरकर्तारः श्रीसिद्धसेनदिवाकरेभ्यो भिन्ना एवेति निर्धारणे स्पष्टप्रमाणाभावात् ते महामति–श्रुतकेवलि–सन्मत्यादिप्रणेतारः श्रीसिद्धसेना एवेति मत्वा तेषां समयमाश्रित्य किञ्चिल्लिख्यते।

श्रीहरिभद्रसूरिवरविरचिते पंचवस्तुकसञ्ज्ञके ग्रन्थे सन्मति-तद्विधातृसिद्धसेनदिवाकरनामनिर्देशः समस्ति। अतस्तत्पुरोगामिन एवैत इति सिध्यति। निशीथभाष्यं प्राणायि श्रीजिनभद्रगणिक्षमाश्रमणैर्येषां निर्वाणसमयः ६४५तमोऽब्दो वैक्रमीयाब्द इति जैनपरम्परा। भाष्यस्यास्य चूर्णिः श्रीजिनदासगणिमहत्तरैर्निरमायि। तैर्नन्दीचूर्णिः शाकसंवति ५९८तमे प्रणीतेति सुविदितं विदुषाम्। एभिर्निशीथचूर्ण्यां दर्शनप्रभाविकग्रन्थरूपेण सन्मतिप्रकरणस्य द्विः श्रीसिद्धसेनानां योनिप्राभृताधारेण घोटकनिर्मातृरूपेणैकश उल्लेखोऽकारि। <u>अनेनानुमीयते श्रीसिद्धसेनानां सत्तासमयो वैक्रमीयपञ्चमीशताब्द्या नार्वाचीनः।</u>

गौतमीयन्यायसूत्रे (१–१–४) वात्स्यायनप्रणीते तद्भाष्ये चाभ्रान्तवाच्यो व्यभिचारिशब्दः समस्ति। किञ्च योगाचार्यभूमिशास्त्रप्रकरणार्यवाचनामतानुसारिणि प्रत्यक्षलक्षणेऽप्यभ्रान्तपदप्रयोगः। अनेन श्रीदिङ्नागपूर्वगामिभिर्बौद्धबुधैरप्यभ्रान्तपदं प्रायुञ्जीति निष्कर्षः। एवं सत्यां परिस्थित्यां श्रीधर्मकीर्तिपश्चाद्गामिन एव श्रीसिद्धसेना इति प्रो. यकोबी-तदुपजीविप्रो. वैद्यमतस्य प्रामाण्यं किं सम्भवति?।[5]

---

१ "इति निरुपमयोगसिद्धसेनः प्रबलतमरिपुनिर्जयेषु वीरः।
विशतु सुरपुरुष्टुतस्तुतो नः सततविशिष्टशिवाधिकारि धाम ॥ ३२ ॥"

२ "महार्चिर्धनेशो महाज्ञामहेन्द्रो, महाशान्तिभर्ता महासिद्धसेनः।
महाज्ञानगच्छा(मत्स्या?)वनी मूर्तिरर्हन्, स एकः परात्मा गतिर्मे जिनेन्द्रः ॥ ३१ ॥"

३ "भण्णइ एगतेण अम्हाणं कम्मवाय णो इट्ठो।
ण य णो सहाववाओ सुअकेवलिणा जओ भणिअं ॥ १०४७ ॥" पञ्चवस्तुकनाम्नि ग्रन्थे।

४ "आयरियसिद्धसेणेण सम्मईए पइट्ठिअजसेणं। दूसमणिसादिवागरकप्पत्तणओ तदक्खेणं ॥ १०४८ ॥"

५ विशेषार्थिभिर्वीक्ष्यतां मदीया गूर्जरप्रस्तावना (पृ. ३४)।

## कल्याणमन्दिरस्तोत्रस्य वृत्तयः

| वृत्तिकारः | रचनासमयः | ग्रन्थाग्रम् |
|---|---|---|
| १ श्रीकनककुशलगणयः | १६५२ | |
| २ श्रीमाणिक्यचन्द्रमुनिचन्द्राः | | |
| ३ श्रीहर्षकीर्तिसूरयः | १६६८ | ५२५ |
| ४ श्रीरत्नचन्द्रगणयः | | |
| ५ श्रीसमयसुन्दरगणयः | १६९५ | |
| ६ श्रीहेमविजयाः | | |
| ७ श्रीजिनविजयमुनयः | १७१० | |
| ८ श्रीदेवतिलकमुनयः (उपकेशगच्छीयाः) | | |
| ९ श्रीगुणसागरमुनयः | | ५५० |
| १० श्रीगुणसेन(रत्न?)मुनयः | | |
| ११ श्रीचारित्रवर्धनगणयः | | ४८० |

१ टीकाप्रारम्भे—

"श्रीमत्पार्श्वजिनं नत्वा, बालाना बोधहेतवे ।
'कल्याणमन्दिर'स्तोत्रे, व्याख्यालेशो विधीयते ॥ १ ॥"

२ बि बि एण्ड महाशयानां मण्डलीद्वारा प्रकाशिते युग्ममुनिरसशशि(१६७४)मितेऽब्दे च प्रणीते श्रीप्रद्युम्नचरित्रे सप्तदशसर्गान्ते तत्प्रणेतृश्रीरत्नचन्द्रगणयो निजगुरुवर्यं स्वय च परिचाययन्ति, तथाहि—

"श्रीशान्तिचन्द्रवरवाचकदुग्धसिन्धु-लब्धप्रतिष्ठवरवाचकरत्नचन्द्रः ।
श्रीविष्णुपुत्रचरित ललित चकार, सर्गोऽत्र सप्तदशमान इहाऽऽप ऋद्धिम् ॥ १७५ ॥

इति श्रीदिल्लीदेशे 'फतेपुर'स्थे पातसाहिश्रीअकब्बरैः श्रीगुरुदर्शनार्थसमाहूतभट्टारकश्री५श्रीहीरविजयसूरीश्वरैः सह विहारकृताम्, स्वय कृतकृपारसकोशग्रन्थश्रावणरञ्जितपातसाहिश्रीअकब्बराणाम्, श्रीहीरविजयसूरिनाम्ना कारितजीजीयाकरनिवारणस्फुरन्मानानाम्, तथा कारितषड्(ण्)मासिकजीवाभयदानप्रधानस्फुरन्मानानाम्, श्रीजम्बूद्वीपप्रज्ञप्तिसूत्रस्य प्रमेयरत्नमञ्जूषानामबृहद्वृत्तिकृताम्, पातसाहिश्रीअकब्बरदापितोपाध्यायपदानाम्, महोपाध्यायश्री५श्रीश्रीश्रीसकलचन्द्रगणिशिष्य-महोपाध्यायश्री५श्रीशान्तिचन्द्रगणीनां शिष्यमुख्योपाध्यायश्रीरत्नचन्द्रगणिविरचिते श्रीभक्तामरस्तव-श्रीकल्याणमन्दिरस्तव-श्रीदेवाःप्रभोस्तव-श्रीमद्धर्मस्तव-श्रीऋषभवीरस्तव-कृपारसकोश-अध्यात्मकल्पद्रुम-श्रीनैषधमहाकाव्य-श्रीरघुवंशमहाकाव्यवृत्तिनवभगिनीनामनुजे भ्रातरि श्रीप्रद्युम्नचरित्रे महाकाव्ये...सप्तदशमः स्वर्ग सम्पूर्ण ।"

३ प्रारम्भेऽयमुल्लेख —

"पार्श्वनाथं जिन नत्वा, शिष्यार्थं सृजति स्फुटम् । 'कल्याणमन्दिर'स्तोत्र-व्याख्यां समयसुन्दरः ॥ १ ॥"

प्रान्ते तु यथा—

"श्रीमद्विक्रमतो वरेषु नवषड्जैवातृके (१६९५) वत्सरे
मासे फाल्गुनिके प्रपूर्णदाशिनि 'प्रह्लादने' सत्पुरे ।
श्रीमच्छ्रीजिनचन्द्रसूरिवर(वृषभ?)प्रौढप्रसादादिमां
टीकां श्रीसमयादिसुन्दरगणिश्चक्रे स्फुटामर्थतः ॥ १ ॥"

४ इमे श्रीविजयप्रभसूरिसमसमयिनः ।

माणिक्यचन्द्रेतिनामधेयाः के के मुनिवरा अभूवन्निति जिज्ञासायामुच्यते–

श्रीअभयदेवसूरिपरम्परायां सञ्जातानां श्रीसागरचन्द्रसूरीणां विनेयाः श्रीमाणिक्यचन्द्रसूरयः। कुबेरपुराणं, काव्यप्रकाशसङ्केतः श्रीपार्श्वनाथचरित्रं रसमञ्जरीचरित्रं च कृतय एषां महाशयानामिति केचित्। श्रीसिद्धसेनचरित्रविधायितारः श्रीशान्तिनाथचरित्रकर्तारोऽलङ्कारशेखररचयितारोऽप्येतन्नामधेयकाः।

भक्तामरस्तोत्रटीकायाः संशोधनकर्मणि पञ्च प्रतयः समासादिताः। तासु श्रीगुणाकरसूरिकृतवृत्तिविषयकास्त्रयः प्रतयः। तत्राद्या क–सञ्ज्ञका ६२पत्रात्मिका वैक्रमीये १९५२तमे वर्षे लिखिता नात्यशुद्धा मूलश्लोकरहिता मुनिवर्यश्रीहंसविजयसत्का, द्वितीया ख-सञ्ज्ञका 'अमदावादडहेला'उपाश्रयसत्का ६०पत्रात्मिका प्राचीना शुद्धप्राया लेखनसमयोल्लेखविरहिता, ग–सञ्ज्ञका तृतीया प्रतिस्तु पण्डितहीरालालहंसराजमुद्रापितं 'श्रीभक्तामरस्तोत्र'नामकं सटीकं पुस्तकम्। उपाध्यायश्रीमेघविजयविरचितटीकाया मुद्रणालयपुस्तिकार्थं इतिहासतत्त्वमहोदधिश्रीविजयेन्द्रसूरिसकाशात् प्राप्ता एका प्रतिः १९पत्रात्मिका १७८२तमे वर्षे लिखिताऽशुद्धा। अस्या आधारेणाकारि मया मुद्रणालयपुस्तिका या आगमोद्धारकजैनाचार्यश्रीआनन्दसागरसूरिभिर्महता प्रयासेन संशोधिता। पृष्ठाष्टकस्य मुद्रणानन्तरं मद्विज्ञप्त्यनुसारेणान्याऽपि प्रतिर्मह्यं प्रेषिता श्रीविजयेन्द्रसूरिभिः। अन्या प्रतिः २५पत्रात्मिका पूर्वापेक्षया शुद्धतरा। अस्या आधारेण मया संशोधिता द्वितीयटीकाया अवशिष्टो भागः।

कल्याणमन्दिरस्य श्रीकनककुशलकृतवृत्तिसंशोधनार्थं प्रतिचतुष्कमुपयुक्तमभूत्। तत्र क–सञ्ज्ञका मुनिराजश्रीहंसविजयसत्का, ख–ग–सञ्ज्ञके मुनिश्रीचतुरविजयसत्का, घ–सञ्ज्ञका तु सूर्यपुरस्थमोहनलालजीभाण्डागारीया। श्रीमाणिक्यचन्द्रकृतविवृतेः संशोधनकार्ये कस्यचित् प्रतिरेकैव प्रकाशकेन मह्यं दत्ताऽऽसीत्।

एतद्ग्रन्थस्य सम्पादनकार्ये यैर्महानुभावैरहमुपकृतस्तेषां नामधेयानि धन्यवादपुरस्सरं प्रकटीकरोमि। तावत् द्वितीयटीकाया मुद्रणालयपुस्तिकाऽवलोकनेन अन्यत्र सन्दिग्धस्थलेषु मार्गसूचनेन च्छायोल्लेखकरणेन च साहाय्यप्रदानात् श्रीआनन्दसागरसूरीश्वरैरहमृणीकृतः। किञ्च साहित्यधर्मोद्धारकशास्त्रविशारदस्वर्गस्थजैनाचार्यश्रीविजयधर्मसूरीश्वराणां पट्टधरैरितिहासतत्त्वमहोदधिबिरुदसमलङ्कृतैः श्रीविजयेन्द्रसूरिभिरुपकृतोऽस्मि प्रतिद्वयप्रेषणेन। अपरञ्च भूमिकाया मुद्रणालयपुस्तिकावलोकनेन कतिचिद्ग्रन्थनामादिसूचनेन चोपकृतोऽहं श्रीविजयवल्लभसूरीशशिष्यरत्नैर्मुनिश्रीविचक्षणविजयाभिधानैः। १२०तमपर्यन्तानां पृष्ठानां द्वितीय-

१ १२६६तमे वैक्रमीयाब्दे व्यरचि ग्रन्थोऽयम्।

२ जैनग्रन्थावल्याधारेण।

३ वैक्रमीये १२७६ तमे वर्षे दीपवमन्दिरे प्रणीतमिदं चरित्रम्।

वेलासंशोधनपत्राणां समीक्षणेन स्वर्गस्थश्रीक्षान्तिविजयैरवशिष्टस्य भागस्य तु मुख्यतो दक्षिण-विहारिमुनिवर्यश्रीअमरविजयविनेयश्रीचतुरविजयैरहमुपकृतोऽस्मि ।

एवं सम्पादितेऽस्मिन् ग्रन्थे याः काश्चनाशुद्धयो भवेयुस्तत्परिमार्जनं कुर्वन्तु सहृदयसाक्षरा इति प्रार्थयामि विबुधवृन्दारविन्दमकरन्देन्दिन्दिरो हीरालालः ।



# પ્રસ્તાવના

**સ્તુતિ-સ્તોત્રોની વ્યાપકતા—**

આ ચરાચર જગત્માં અનેક ધર્મોના પ્રાદુર્ભાવ તેમજ લય થયા છે અને થાય છે. આ ધર્મો ઈશ્વરવાદી હો કે અનીશ્વરવાદી હો, તોપણ ઇષ્ટ વસ્તુનાં યશોગાન તો તેમાં પણ જરૂર ગવાયાં છે અને ગવાય છે. સ્તુતિ-સ્તોત્રનો સામાન્ય અર્થ ગુણોત્કીર્તન છે એ વાત ધ્યાનમાં લઇશું તો એવો ભાગ્યે કોઇ દેશ આ પૃથ્વીની સપાટી ઉપર હશે કે જેના સાહિત્યમાં અલ્પાંશે પણ આને સ્થાન નહિ મળ્યુ હોય. પ્રસ્તુતમાં વ્યાપક અર્થ ન કરતાં ઈશ્વરના ગુણોનું અનુમોદન એટલો અર્થ કરીશું તો ખાસ કરીને આ ભારતભૂમિ ઉપર ઊગેલા ધર્મ-વૃક્ષોનું સ્તોત્રરૂપી સરિતામાંથી વહેતા ભક્તિ-રસથી સિંચન થયેલું વિશેષતઃ જણાશે.

**સ્તોત્ર-સાહિત્ય અને તેનો વિકાસ—**

આર્ય ભૂમિના ઉપલબ્ધ સાહિત્યનો વિચાર કરતાં વેદોને સૌથી પ્રાચીન માનવા એ અનુચિત નહિ ગણાય. આવી પરિસ્થિતિમાં સ્તુતિ-સ્તોત્રની આદ્ય ઉત્પત્તિ માટે **ઋગ્વેદ-સંહિતા** તરફ દૃષ્ટિપાત કરતાં એના પ્રાથમિક અષ્ટકના પ્રારંભિક અનુવાકમાં આદ્ય નવ ઋચામાં અગ્નિ-દેવની સ્તુતિ, દ્વિતીય તથા તૃતીય અનુવાકમાં ઇન્દ્રની સ્તુતિ, પાંચમામાં સ્તોત્ર-ઉત્પત્તિ અને સ્તોત્ર-વર્ણન, નવમામાં ઉષ-પ્રાર્થના, અને સૂર્યની સ્તુતિ તથા દશમામાં વરૂણની સ્તુતિ એ પ્રમાણે અનેક સ્તુતિરૂપ ઋચા નજરે પડે છે. પરંતુ આ સ્વાભાવિક ઘટના છે, કેમકે ઋગ્નો અર્થ જ સ્તુતિ છે.

**બ્રાહ્મણ**, **ઉપનિષદ્**, **ગૃહ્યસૂત્ર** અને **શ્રૌતસૂત્ર**ના અવલોકનથી એમ માલૂમ પડે છે કે ધીરે ધીરે સ્તુતિઓના વિષય તરીકે પ્રાકૃતિક દૃશ્ય ન રહેતાં ઉદૂખલ, મુશલ ઇત્યાદિની પણ સ્તુતિ (અર્થવાદ) થવા માંડી. ભક્તિને માટે યથાયોગ્ય સ્થાન મળે તેવી રીતે આ વાતાવરણ ફરતું ગયું અને **રામાયણ** અને **મહાભારત** ગ્રન્થો અસ્તિત્વમાં આવ્યા. પરંતુ એનાથી આ ભક્તિ-પ્રદર્શક કાર્યની પૂર્ણાહુતિ ન થતાં તે વિશેષ ઉદ્દીપ્ત બન્યું. પુરાણો લાગણી-ભક્તિ પ્રદર્શિત કરવાનું સાધન તરીકે વધારે અનકૂળ થઇ પડ્યાં. ક્રમશઃ એમાંનાં કેટલાંક વર્ણનો મહાકાવ્યોની સામગ્રીરૂપ બન્યાં, જેમકે **કાલિદાસ**ના **રઘુવંશ**ના દશમા સર્ગમાં સોળમા શ્લોકથી અને **કુમારસંભવ**ના બીજા સર્ગમાં તેરમા શ્લોકથી દેવો દ્વારા પરમાત્માની સ્તુતિ, **ભારવિ**ના **કિરાતાર્જુનીય**ના અન્તિમ સર્ગમાં **અર્જુન** દ્વારા **મહાદેવ**ની સ્તુતિ, **માઘ**ના **શિશુપાલવધ**ના ૧૪ મા સર્ગના પ્રારંભમાં **ભીષ્મ** દ્વારા **કૃષ્ણ**ની સ્તુતિ અને **રાજાનક રત્નાકર**કૃત **હરવિજય**ના ૪૭ મા સર્ગમાં દેવો દ્વારા **ચણ્ડી**ની ૧૬૪ પદ્યો વડે સ્તુતિ. આ પ્રમાણે સ્તુતિ-સ્તોત્રરૂપ ઉદ્યાન પલ્લવિત થયું.

લોકપ્રિય અને ભક્ત્યાત્મક ધર્મના પ્રચારના કાર્યમાં [1]પુરાણોની સાથે સાથે [2]તાન્ત્રિક સાહિત્યે પણ ફાળો આપ્યો. આ સામગ્રીઓમાં ગ્રહોના પ્રભાવની માન્યતાનો ઉમેરો થતાં અનેક સ્તુતિઓનો પ્રાદુર્ભાવ થયો. આ નૂતન સ્તુતિ–સાહિત્ય પ્રાચીન સ્તોત્ર–સાહિત્ય સાથે ટક્કર ઝીલી શકે તેવું બન્યું.

વર્મના દૃષ્ટાન્ત તરીકે **ભાગવત** પુરાણના છઠ્ઠા સ્કંધના આઠમા અધ્યાયગત [3]નારાયણ-વર્મનો અને કવચના ઉદાહરણરૂપે [4]શિવ–કવચ, [5]સૂર્ય–કવચ, [6]ગણેશ–કવચનો ઉલ્લેખ થઇ શકે તેમ છે. વિશેષમાં આની જેમ [7]શિવ–રક્ષા, [8]બાલ–રક્ષા, [9]વિષ્ણુપંજર, વજ્રપંજર, ત્રૈલોક્યવિજય, [10]દુર્ગાપદુદ્ધાર, [11]મહામૃત્યુંજય, ગ્રહશાન્તિ, એ પણ વેદને માનનારા હિંદુઓના સ્તોત્ર–સાહિત્યનો એક ભાગ છે. આ સાહિત્યની સાર્વજનિકતા અને વિપુલતા તો એના સંગ્રહાત્મક સૂચિઓના નિરીક્ષકથી અજાણી રહે તેમ નથી.

**બૃહત્–સ્તોત્ર–રત્નાકર, બૃહત્સ્તોત્ર–મુક્તાહાર** અને **બૃહત્–સ્તવ–કવચ–માલા**માં અનેક સ્તોત્રો છે અને વળી આ ગ્રન્થોની કેટલીએ આવૃત્તિઓ થઇ ગઇ છે એ વાતને લક્ષ્યમાં લેતાં સામાન્ય કોટિના હિંદુઓ તો આ સાહિત્ય તરફ કેવો ભાવ રાખે છે તે સમજી શકાય છે. **બ્રહ્માને** ઉદ્દેશીને વિશેષ સ્તોત્રો રચાયાં હોય એમ લાગતું નથી. દક્ષિણ ભારતમાં ધુણ્ડિરાજ તરીકે ઓળખાતા [12]**ગણપતિ** પરત્વે ઘણાં સ્તોત્રો છે. એને જ્યેષ્ઠ, કપિલ, ચિન્તામણિ, મયૂરેશ, સિદ્ધિદાતા, વિનાયક, વિઘ્નરાજ, વિઘ્નાન્તક, શેષપુત્ર અને પાર્શ્વપુત્ર તરીકે સંબોધવામાં આવેલ છે. સૂર્યનાં સ્તોત્રો પૈકી **ભવિષ્યત્**–પુરાણમાં **શ્રીકૃષ્ણ** અને **અર્જુન**ના સંવાદમાં [13]**આદિત્યહૃદય** મનનીય છે આ સ્તોત્ર–વૃક્ષની પાસે ગ્રહના સ્તોત્રરૂપ છોડવા પણ નજરે પડે છે. આ ઉપરાંત **શિવ, શક્તિ** અને **વિષ્ણુ**ને ઉદ્દેશીને પણ સ્તોત્રો રચાયાં છે. **શિવ**નુ તેમાં ઉત્તમ સ્થાન હોય એમ ભાસે છે. એને મહેશ, મહાદેવ, શંકર, વીરેશ્વર અને

---

૧–૨ સ્તોત્રોના ભડાર તરીકે પુરાણો પૈકી **બ્રહ્મ, વિષ્ણુ, માર્કણ્ડેય, પદ્મ, સ્કન્દ, બ્રહ્મવૈવર્ત, વિષ્ણુધર્મોત્તર, હરિવંશ, દેવીભાગવત** અને **ભવિષ્યોત્તર** તથા તન્ત્રો પૈકી **જ્ઞાનસંકલિની, મહીનિર્વાણ, પ્રપંચસાર, બ્રહ્મયામલ, રૂદ્રયામલ, વારાહી, ભૈરવ, વિશ્વસાર, સારદાતિલક, નીલતન્ત્ર** અને **તન્ત્રસાર**નો નિર્દેશ કરી શકાય

૩ જુઓ **બૃહત–સ્તોત્ર–મુક્તાહાર** ('ગુજરાતી' મુદ્રણાલય, દ્વિતીય આવૃત્તિ પૃ૦ ૬૧–૬૪). ૪ જુઓ **સ્કન્દ**–પુરાણનો બ્રહ્મોત્તરખડ અથવા **બૃહત૦હાર** (પૃ૦ ૮). ૫–૬ જુઓ **બૃહત૦હાર** (પૃ૦ ૧૧૪–૧૧૫, ૧૩૭–૧૩૮). ૭ જુઓ **બૃહત૦હાર** (પૃ૦ ૪૯–૫૦) ૮ જુઓ **ભાગવતનો** દશમ સ્કધ અથવા **બૃહત૦હાર** (પૃ૦ ૨૫૬) ૯ જુઓ **બ્રહ્માણ્ડ** પુરાણનો ઈશ્વર–નારદ–સવાદ અથવા **બૃહત૦હાર** (પૃ૦ ૬૪–૬૬) ૧૦ જુઓ **બૃહત૦હાર** (પૃ૦ ૨૦૮–૨૦૯) ૧૧ જુઓ **બૃહત૦હાર** (પૃ૦ ૫૦–૫૧) તથા **માર્કણ્ડેય** પુરાણ

૧૨ પૌરાણિક ગણપતિ તે વૈદિક બ્રહ્મણસ્પતિ કે બૃહસ્પતિ (જુઓ **ઋગ્વેદ** અ. ૨–૨૩–૧)નું રૂપાન્તર હોય એમ કેટલાક માને છે. ૧૩ જુઓ **બૃહત૦હાર** (પૃ૦ ૧૧૫–૧૨૯).

પશુપતિ તરીકે પણ ઓળખાવેલ છે, જોકે એની રુદ્રતા દર્શાવનારાં એનાં રુદ્ર, મહાકાળ, હર, સ્થાણુ અને શૂલપાણિ એવાં પણ નામો છે. [1]રાવણ, વ્યાસ અને શંકરાચાર્યે પણ મહાદેવનાં સ્તોત્રો રચ્યાં છે એમ કહેવાય છે.

વિષ્ણુ સંબંધી પુષ્કળ સ્તોત્રો છે. તેમાં એના દશે અવતારના વર્ણનરૂપ બે સ્તોત્રો—એક લક્ષ્મણસેનના સમસમયી જયદેવ રચિત 'आवाय वेदाः'થી શરૂ થતું [2]સ્તોત્ર અને બીજું અજ્ઞાતકર્તૃનામ બંગાળામાં વિશેષ પ્રચલિત છે. જૂદા જૂદા અવતારો સંબંધી પણ સ્તોત્રો છે. વિષ્ણુના બ્રહ્મણ્યદેવ, નારાયણ, પુરુષ, અચ્યુત, હરિ, ગોવિન્દ, ત્રિવિક્રમ, જગન્નાથ અને પાણ્ડુરંગ એવાં નામોથી સ્તુતિ કરવામાં આવી છે.

પુરાણ અને તન્ત્રોમાં જેનાં વિવિધ નામો નજરે પડે છે, એ શક્તિ દેવીનાં અનેક સ્તોત્રો છે આ દેવીનાં મહિષમર્દિની, દક્ષિણકલિકા, પગલામુખી એવાં પણ નામો આ સ્તોત્રોમાં જોવાય છે. સરસ્વતી અને લક્ષ્મીને કેટલીક વાર એની પુત્રીઓ તરીકે ઓળખાવેલી છે. આ શક્તિ વિશ્વજનની છે અને એનાં ૧૬ નામો સૂચવવામાં આવ્યાં છે. સરસ્વતી દેવીનાં સ્તોત્રો અર્વાચીન સમયમાં બહુ થોડાં રચાયાં હોય એમ ભાસે છે, તાન્ત્રિક જોકે સાહિત્યમાં 'ह्रीं ह्रीं हृद्यैकबीजे'થી શરૂ થતુ [3]સ્તોત્ર તથા પ્રપંચસારમાં ત્રિપુરાસ્તોત્ર છે.

આ દેવ–દેવીઓનાં સ્તોત્રો ઉપરાંત ગંગા, યમુના, ગોદાવરી, નર્મદા જેવી [4]નદીઓનાં તેમજ વિશ્વનાથ, [5]અન્નપૂર્ણા, મણિકર્ણિકા, કાલભૈરવ, દણ્ડપાણિ, વેંકટેશ અને શ્રીરંગનાથ જેવા એકસ્થાનીય દેવતારૂપ ગણાતી વ્યક્તિઓનાં પણ સ્તોત્રો છે.

આ સ્તોત્ર–સાહિત્યના વિભાગો પડી શકે છે, પરંતુ એના રચના–કાલ તેમજ રચયિતાના સંબંધમાં નિર્દેશ કરવો એ સહેલી વાત નથી; કેમકે કેટલાંક સ્તોત્રોના કર્તાઓએ તો પોતે માનના ભૂખ્યા નહિ હોવાને લીધે પોતાનું નામ પણ જણાવ્યું નથી. આમાંનાં લગભગ ૬૦ ટકા જેટલાં સ્તોત્રો બારમા સૈકા પૂર્વે રચાયાં હોવાનું અને કેટલાંક તો છેક આઠમી શતાબ્દીમાં પણ રચાયાં હોય એમ જણાય છે. લગભગ સો સ્તોત્રોને તો શ્રીશંકરાચાર્યની કૃતિ તરીકે ઓળખાવવામાં આવે છે. એ બધાં એની કૃતિ હોવાનો સંભવ નથી, તોપણ (અત્યારે પણ કાશીમાં આરતીના સમયે ગવાતું) [6]ગંગાષ્ટક, અન્નપૂર્ણા સ્તોત્ર, [7]વેદસાર શિવસ્તવ,

---

૧ જુઓ બૃહત્વ્હાર ( પૃ૦ ૨૭–૨૯ ).

૨ સારદાતિલક તેમજ તન્ત્રસારમા પણ આ દૃગ્ગોચર થાય છે. આનું એક પદ્ય નીચે મુજબ છે.—
"वहसि वपुषि विशदे वसन जलदाभम् । हलहतिभीतिमिलितयमुनाभम् ।"

૩ આ સ્તોત્રનો Hymn to the Goddess એ પુસ્તકમાં A. Avalon મહાશયકૃત અનુવાદ છે.

૪–૫ જુઓ બૃહત્વ્હાર ( પૃ૦ ૩૦૩–૩૨૪, ૧૮૪–૧૮૫ ).

૬–૭ જુઓ બૃહત્વ્હાર ( પૃ૦ ૩૦૫–૩૦૬, ૩૪–૩૫ ).

[1]ચર્પટપંજરિકા, [2]આનન્દલહરી અને [3]કાશીપંચક એ ત્રણને તો આ પ્રખર વેદાન્તીની કૃતિ તરીકે બેધડક ઓળખાવી શકાય તેમ છે.

પુષ્પદંતનું [5]શિવમહિમ્ન-સ્તોત્ર અને કુલશેખરની [6]મુકુન્દમાલા, આનંદવર્ધનનું દેવી-શતક, બાણભટ્ટનું ચણ્ડી-શતક, મયૂરનું સૂર્ય-શતક, [7]યાજ્ઞવલ્કયની કૃતિ તરીકે ઓળખાતું [8]સૂર્યાર્યાસ્તોત્ર (રવિગાથા), ઉપમન્યુનું 'શિવસ્તોત્ર તથા વિષ્ણુષટ્પદી એ પણ સ્તોત્ર-સાહિત્યના ઉપાસકને મનન કરવાં જેવાં છે.

---

૧-૩ જુઓ બૃહત્૦હાર પૃ૦ ૩૩૨-૩૩૩, ૧૭૩-૧૭૫, ૩૧૪

૪ આ પ્રત્યેકનું એકેક પદ્ય અત્ર નીચે મુજબ આપવામાં આવે છે;—

"भगवति ! तव तीरे नीरमात्राशनोऽहं, विगतविषयतृष्णः कृष्णमाराधयामि ।
सकलकलुषभङ्गे ! स्वर्गसोपानसङ्गे', तरलतरतरङ्गे ' देवि ' गङ्गे ! प्रसीद ॥ १ ॥"

"नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपावनकरी प्रत्यक्षमाहेश्वरी ।
प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी माताऽन्नपूर्णेश्वरी ॥ १ ॥"

"पशूनां पतिं पापनाशं परेशं, गजेन्द्रस्य कृत्तिं वसानं वरेण्यम् ।
जटाजूटमध्ये स्फुरद्गाङ्गवारिं, महादेवमेकं स्मरामि स्मरारिम् ॥ १ ॥"

"वयसि गते कः कामविकारः, शुष्के नीरे कः कासारः ।
नष्टे द्रव्ये कः परिवारो, ज्ञाते तत्त्वे कः संसारः ॥ १० ॥"

"भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते !
प्राप्ते सन्निहिते मरणे नहि नहि रक्षति डुकृञ् करणे ( ध्रुवपदम् )"

"वृषो वृद्धो यानं विषमशनमाशा निवसनं
श्मशानं क्रीडाभूर्भुजगनिवहो भूषणनिधिः ।
समग्रा सामग्री जगति विदितैव स्मररिपो-
र्यदेतस्यैश्वर्यं तव जननि ! सौभाग्यमहिमा ॥ १६ ॥"

"काशीक्षेत्रं शरीरं त्रिभुवनजननी व्यापिनी ज्ञानगङ्गा
भक्तिः श्रद्धा गयेयं निजगुरुचरणध्यानयोगः प्रयागः ।
विश्वेशोऽयं तुरीयः सकलजनमनःसाक्षिभूतोऽन्तरात्मा
देहे सर्वं मदीये यदि वसति पुनस्तीर्थमन्यत् किमस्ति ? ॥ ५ ॥"

૫ જુઓ બૃહત્૦હાર (પૃ ૧૫-૨૦). આ સ્તોત્રની શ્રીહર્ષકીર્તિસૂરિએ ટીકા રચી છે, જ્યારે શ્રીરત્નશેખરસૂરિએ એની પાદપૂર્તિરૂપ શ્રીઋષભમહિમ્નઃસ્તોત્ર રચ્યું છે. આ સ્તોત્ર (અનુવાદ સહિત) 'જૈન સ્તોત્ર તથા સ્તવન સંગ્રહ અર્થ સહિત' એ પુસ્તકમાં ઇ. સ. ૧૯૦૭માં છપાયેલ છે.

૬ કાવ્યમાલાના પ્રથમ ગુચ્છકમાં ચોથા સ્તોત્ર તરીકે આ છપાયેલું છે. બૃહત્૦હાર (પૃ૦ ૭૪-૭૬)માં પણ આ છે. વળી આનો નિમ્ન-લિખિત આઠમો શ્લોક સાહિત્યદર્પણના તૃતીય પરિચ્છેદના પ્રાન્ત ભાગમાં 'देवविषया रतिः'ના ઉદાહરણાર્થે આપવામાં આવ્યો છે.

"दिवि वा भुवि वा ममास्तु वासो, नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारविन्दौ, चरणौ ते मरणे विचिन्तयामि ॥"

૭-૮ જુઓ બૃહત્૦હાર (પૃ૦ ૧૪૩-૧૩૪, ૨૩-૨૫).

यो वार्यादिलघुर्धृतिं दिनमणिर्मध्येगुरुर्जो रुजं
द्यौस्तो मूर्तिधनक्षयं गुरुमुखो भस्तारकेशो यशः ॥ १ ॥"—शार्दूलविक्रीडितम्

**इति गणाष्टकविवरणे,** तथा 'भः प्रभुक्षोभकारकः' इत्युक्तत्वात् भकारोऽपि नादौ ग्राह्य इति चेदुच्यते—

"मनौ मित्रे भयौ भृत्या–वुदासीनौ जतौ स्मृतौ ।
रसावरी नीचसञ्ज्ञौ, द्वौ द्वावेतौ मनीषिभिः ॥ १ ॥"—अनु०

मित्रगणात् द्वितीये मित्रगणे चापरमिति, तथा उदासीनाद् भृत्यगणे द्वितीये परे सति शुभजयश्च, अन्येषु सर्वगणयोगेषु न शुभमित्युक्तत्वात्, वर्णशुद्धावपि **भामट**वचनाद् भकारस्य संयुक्तस्यैव निषेधेन केवलस्य भगवद्वाचकत्वाच्च न दोषः, अयं च विमर्शो **वृत्तरत्नाकरवृत्तौ नारायणभट्ट**कृतायां बोध्यः । तथा मरेत्यपशब्दे दोषो न चिन्त्यः, आं इति मन्त्रबीजस्य आदावन्ते च काव्यस्य प्रक्षेपणेन स्तोत्रसंहितोद्भावनकारित्वात्, आं इत्यक्षरं **चक्रेश्वरी**मन्त्रबीजमित्याम्नायिका, अत एव **रघुवंशादिकालिदास**कृतौ एतद् बीजमेवाद्यं । छन्दस्त्वत्र वसन्ततिलका । तल्लक्षणं च—"उक्ता वसन्ततिलका तभजा जगौ गः" ॥ इति काव्यद्वयार्थः ॥ १–२ ॥

*The poet commences the hymn with benediction*

Having duly bowed to the (holy) pair of the *Jina's* (Lord *Rishabha's*) feet—the feet which enhance the lustre of the jewels (set) in the crowns lowered by the devoted gods, which have destroyed the pitchy darkness of sins and which were in the beginning of the *Yuga* the (main) support of mankind sinking in the sea of existence *(Bhava)*, I *(Mânatunga)*, too, will indeed praise that (very) first Lord of the *Jinas*, who has been extolled in hymns, lofty and captivating the hearts of (the living beings of) the three worlds, by the lords of the celestial worlds, (-the lords) who had become proficient on account of the insight they acquired by gaining the knowledge of the true principles of all the sciences. (1–2)

* * * *

अथ कविरात्मौद्धत्यं परिजिहीर्षुराह–

**बुद्ध्या विनाऽपि विबुधार्चितपादपीठ !**
**स्तोतुं समुद्यतमतिर्विगतत्रपोऽहम् ।**
**बालं विहाय जलसंस्थितमिन्दुबिम्ब-**
**मन्यः क इच्छति जनः सहसा ग्रहीतुम् ? ॥ ३ ॥**

१ शार्दूलविक्रीडित–लक्षणम्—
"सूर्याश्वैर्यदि मस्सजो सततगाः शार्दूलविक्रीडितम् "

गु० वि०—हे विबुधार्चितपादपीठ!-हे दैवतव्रातपूजितपदासन! जिन! बुद्ध्या-प्रज्ञया विनाऽप्यहं-मानतुङ्गाचार्यः स्तोतुं समुद्यतमतिः-स्तवाय कृतमतिव्यापारो वर्ते, अत एव विगतत्रपः-अशक्यवस्तुनि प्रवर्तनान्निर्लज्जः। दृष्टान्तमाह—बालं-शिशुं विहाय-मुक्त्वा कोऽन्यः-अपरो जनः सचेतनो जलसंस्थितं-नीरकुण्डमध्यप्रतिबिम्बितमिन्दुबिम्बं-चन्द्रमण्डलं ग्रहीतुं-लातुं सहसा-तत्कालमिच्छति-अभिलषति? । बालस्तद्ग्रहणाग्रहग्रहिलो भवति, नापरः; अहमपि बालरूपो ज्ञेय इति। औद्धत्ये त्वहं तादृशमतिशक्तिविकलो दुष्करकवित्वधुरोद्धरणाङ्गीकरणनिर्वहणात् प्राज्ञधुरन्धरेषु प्राधान्यं प्राप्स्यामीति, यतस्तद्विदः—कवित्वश्रमविदः। उक्तं च—

" विद्वानेव हि जानाति, विद्वज्जनपरिश्रमम्।
न हि वन्ध्या विजानाति, गुर्वी प्रसववेदनाम्॥ १॥ "—अनु०

इत्याशयः॥ ३॥

मे० वृ०—अथ कविना किलेति संभावनाभिधानेन जिनस्तवनकरणेऽसामर्थ्यं व्यञ्जितं, तर्हि कथं स्तुतौ प्रवृत्त इत्याह—(बुद्ध्येत्यादि)।

हे विबुधार्चितपादपीठ! अहं त्वां स्तोतुं समुद्यतमतिरस्मि इत्यन्वयः। कर्त्रुक्तिः। हे देवपूजितचरणन्यासस्थान! हे भगवन्! अहं—स्तोत्रकर्ता त्वा वर्णयितुं तत्परमना वर्ते इत्यर्थः। 'अस्मि' इति क्रियापदम्। कः कर्ता? 'अहम्'। अकर्मको धातुः। किं कर्तुम्? 'स्तोतुम्'। कं कर्मतापन्नम्? 'त्वाम्'। कथम्? 'विनाऽपि'। कया? 'बुद्ध्या' मत्या। कथंभूतः? 'विगतत्रपः' लज्जारहितः। अत्रायं हेतुहेतुमद्भावः—यतोऽहं विगतत्रप., अतस्त्वां बुद्ध्या विनाऽपि स्तोतुं समुद्यतमतिरस्मि, बुद्धिहीनो देवार्चनीयं भगवन्तं कथं स्तोष्ये इति भावः। उक्तार्थे अर्थान्तरन्यासमाह[1]—अन्यः को जनो जलसंस्थितं इन्दुबिम्बं सहसा ग्रहीतुं इच्छति—वाञ्छति इत्यन्वयः। 'इच्छति' इति क्रियापदम्। कः कर्ता? 'अन्यो जनः' अपरो लोकः। किं कर्मतापन्नम्? 'इन्दुबिम्ब' चन्द्रमण्डलम्। कि कर्तुम्? 'ग्रहीतुं' लातुम्। कथम्? 'सहसा'। कथंभूतं इन्दुबिम्बम्? 'जलसंस्थितं' जले प्रतिबिम्बितम्। किं कृत्वा? 'बालं विहाय' कुमार अव्यक्तं त्यक्त्वा। बालो हि कदाचिज्जले प्रतिबिम्बितं चन्द्रमण्डलं दृष्ट्वा लातुं करं प्रसारयति, न पुनर्व्यक्तज्ञानवान् पुरुषः, प्रतिबिम्बे छायामात्रस्यैव भावात्, कदाचिदाकाशगतं चन्द्रमण्डलं देवादिप्रयोगाद् ग्रहीतुं शक्यते, न पुनः प्रतिबिम्बगतमित्यनेन स्वस्य बालविलसितता भगवत्स्तोत्रस्याशक्यकार्यता च उक्ता भवति। अत्र इषेः कर्तुर्जहतेश्च कर्तुर्नैवैकत्वं, तथापि विहायेतिल्यबन्तरूपो निपातो विनार्थे द्रष्टव्यः, 'बलात्कारे प्रसह्य'इति वत्, तद्योगे च ततोऽन्यत्रापि दृश्यत इति द्वितीया॥

---

१ अर्थान्तरन्यास-लक्षणम्—

" विशेषस्य सामान्येन साधर्म्यवैधर्म्याभ्यां समर्थनमर्थान्तरन्यासः "

—श्रीहेमचन्द्रसूरिकृते काव्यानुशासने (अ० ६)

**अथ समासाः**—पादयोः पीठं पादपीठं, विबुधैः अर्चितं पादपीठं यस्य स[1] तत्संबोधने हे विबुधार्चितपादपीठ! अनेन **तक्षशिलापुर्यां** तथा **हस्तिनागपुरे** भगवदवस्थानभूमौ **बाहुबलिना श्रेयांसेन** कारितं पीठं सूचितम। बुद्ध्या इत्यत्र विनायोगे तृतीया। सम—सम्यक् प्रकारेण उद्यता मतिर्यस्य (सः[2]), तथा विशेषेण गता विगता 'नाम्नश्च०' (सा० सू० ५३९) इति तत्पुरुषः, विगता त्रपा यस्य स[3] विगतत्रपः। जले संस्थितं जलसंस्थितम्[4]। इन्दोर्बिम्ब इन्दुबिम्बं[5] तत्, कर्मणि द्वितीया। ग्रहीतुमित्यत्र 'ईटो ग्रहाम्' (सा० सू० ८२१) इति दीर्घः॥ इति तृतीयकाव्यार्थः॥ ३॥

*He acknowledges his audacity*

Oh Lord whose foot-stool is adored by the wise (or the celestials)! (really) I have become shameless, for, though wanting in intelligence, I make an attempt at praising Thee. Who else than a child would hasten to catch the disc of the moon reflected in water? (3)

⁂ ⁂ ⁂ ⁂

अथ जिनेन्द्रस्तुतावन्येषां दुष्करतां[6] दर्शयन्नाह—

वक्तुं गुणान् गुणसमुद्र! शशाङ्ककान्तान्
कस्ते क्षमः सुरगुरुप्रतिमोऽपि बुद्ध्या?।
कल्पान्तकालपवनोद्धतनक्रचक्रं
को वा तरीतुमलमम्बुनिधिं भुजाभ्याम्?॥ ४॥

गु० वि०—हे गुणसमुद्र!—स्थैर्यगाम्भीर्यधैर्यादिगुणरत्नरत्नाकर! को बुधस्ते—तव शशाङ्ककान्तान्—निर्मलकलाभृत्कमनीयान्[7] शान्ततादीन्[8] गुणान् वक्तुं—जल्पितुं क्षमः-समर्थः?। किंभूतोऽपि? बुद्ध्या—प्रतिभया सुरगुरुप्रतिमोऽपि-वाचस्पतिसमोऽपि। अत्र दृष्टान्तः—वा उपमितौ। कस्तरणकलाकुशलो नरो भुजाभ्यां—बाहुभ्यामम्बुनिधिं—सागरं तरीतुं—पारं प्राप्तुमलं—शक्तः? अपितु न कश्चिदित्यर्थः। किंभूतमम्बुनिधिम्? कल्पान्तकालस्य पवनेनोद्धतानि-अविनीतानि दुर्दर्शानि उद्धृतान्यूर्ध्वं चलितानि वा नक्रचक्राणि—यादोवृन्दानि यत्रेति समासः। प्रलयमरुत्प्रेरितदुष्टजन्तुजातमित्यर्थः। यथा युगान्तक्षुब्धाब्धितरणं दुःशंकं[9] तथाऽर्हत्कीर्तनं गीर्पतेरपि दुर्घटम्, तत्राहं प्रवृत्तः समर्थ इवाभास्यामि विद्वज्जने, इत्यौद्धत्यम्॥

अत्रापि मन्त्रः प्राक् कथित एव॥

१ बहुव्रीहि.. २ बहुव्रीहि.. ३ बहुव्रीहि. ४ तत्पुरुष. ५ तत्पुरुषः.
६ 'दुःकरण' इति ग-पाठः। ७ 'कलाकमनीयान्' इति ग-पाठ.। ८ 'शान्तादीन्' इति क-पाठः।
९ 'दुःशक्यं' इति क-पाठ.।

**प्रभावे कथा यथा—**

वार्धिर्बाहुफलकेन, तीर्णश्चक्राप्रमादतः ।
पुराऽभूत् सुमनिः श्रीमान्, स्तवचिन्तामणिस्मृतेः ॥ १ ॥–अनु०

पुरोज्जयिन्यां पुरि दारिद्र्यवसतिर्भद्रकप्रकृतिः सुमतिर्वणिगभूत् । स च कञ्चन जैनमुनिमवन्दत । तस्याग्रे मुनिर्देशनामित्थमकृत—

"धणओ धणत्थियाणं, कामत्थीणं च सव्वकामकरो ।
सग्गापवग्गसङ्गम-हेऊ जिणदेसिओ धम्मो ॥ १ ॥"–आर्या

किञ्च—

"धम्म विहूणउ न सुक्ख वियाणहिं परघरि पाणिउ इंधणु आणहिं ।
खण्डहिं दलहिं करहिं विलोडणु तहवि न पावहिं किंचिवि भोयणु ॥ २ ॥

अधमजातिरनिष्टसमागमः
प्रियवियोगभयानि दरिद्रता ।
अपयशोऽखिललोकपराभवो
भवति पापतरोः फलमीदृशम् ॥ ३ ॥–द्रुतविलम्बितम्

तं पुन्नह अहिनाणु जं गहिलाणवि रिद्धडी ।
तं पुणु पावह माणु जं गुणवंतह भिक्खडी ॥ ४ ॥"

अहो ! श्वेताम्बरमहर्षिणा मदुचितो धर्मोपदेशो दत्त इति मत्वा मुनिवचः श्रुत्वा जिनधर्मं प्रपन्नो धनार्थी भक्तामरस्तवमभ्यैष्ट । भक्त्यवन्ध्यं त्रिसन्ध्यं शश्वज्जपति स्म । एकदा—

---

१ 'वार्धि बाहु०' इति क-पाठः ।

२ छाया—

धनदो धनार्थिकानां, कामार्थिनां च सर्वकामकरः ।
स्वर्गापवर्गसङ्गमहेतुर्जिनदेशितो धर्मः ॥

३ 'हिउ' इति क-पाठः ।

४ छाया—

धर्मेण विहीनो न सुखं विजानाति परगृहे पानीयमिन्धनं आनयति ।
खण्डयति दलयति करोति विलोडनं तथापि न प्राप्नोति किञ्चिदपि भोजनम् ॥

५ द्रुतविलम्बित-लक्षणम्—

"द्रुतविलम्बितमाह नभौ भरौ"

६ छाया—

तत् पुण्यस्याभिज्ञानं यद् ग्रथिलानामपि ऋद्धिः ।
तत् पुनः पापस्य मानं यद् गुणवतां भिक्षा ॥

७ 'लाघरि रिद्धडी' इति ख-पाठः ।

"अत्थविहूणो पुरिसो, सुवंसजाओवि लहइ लंहुअत्तं।
पावइ परिभवठाणं, गुणरहिओ धणुहदंडुव ॥ १ ॥"—आर्या

इति विमृश्य सुमतिर्धनार्जनचिकीः समुद्रतटपुरं गत्वा पोतमारुरोह । क्रमेण बोहित्थेऽम्बुधिमध्यगे कल्पान्तवाता इव दुर्वाता ववुः । पूर्वं कादम्बिनीतिमिरपटली प्रबलदावानलधूमावलीव नभोमण्डलमरौत्सीत्। राक्षसीनेत्रकान्तकीलेव विद्युल्लता घनमध्ये नामांसीत्। नाविकजनश्रवोदुःश्रवं स्तनयित्नुस्तनितं निर्घातपातसममभूत्। पीतमद्या इव सागरोर्मिष्वितस्ततश्चरन्तस्तिमि-तिमिङ्गिल-पाठीन-पीठ-नक्र-चक्र-मकर-कूर्म-शिशुमारादिदुष्टजलचरजन्तुवाराश्चुक्षुभुः। तलगता अपि वालुकाकणाः कर्ममुक्ता इवोर्ध्वं जग्मुः। जगज्जिग्रसिषुराक्षस इवोन्मुमूर्च्छोर्मिमाला । धार्टीक्षुभिता इव सांयात्रिकाः कान्दिशीकाः कोलाहलं चक्रुः स्वाभीष्टदेवान् सस्मरुश्च। नाङ्गरः सागरोपर्यतिष्ठन् दुर्जन इव क्वापि स्थितिं न लेभे। सितपटः पोतवणिग्मनोरथवत् खण्डशोऽभूत्। कृतघ्नस्नेहा इव सज्जा अपि रज्जवस्तुत्रुटुः। सुवंशा अपि पोतविध्वंसरक्षणेऽक्षमा अभूवन्। तत्र क्षणे केऽपि मुनय इव कर्मग्रन्थिमिव कूपकस्तम्भं चिच्छिदुः। केऽपि कान्ताङ्गमिव फलकं कराभ्यां गाढं जगृहुः। केऽपि गुरुवाक्यमिव साररत्नादि हृन्मध्ये दधुः। अत्रान्तरे भूतार्त इव कालज्वरार्त इव पापीव पोत इतस्ततो भ्रान्त्वा भग्न उपकार इव कृतघ्ने । सर्वोऽपि वस्तुस्तोमोऽम्भोधिमध्ये मग्नः। सुमतिस्तुर्य वृत्तं स्मरन् चक्रेश्वर्यनुभावाद् बाहुभ्यां तटिनीशं तरंस्तटे लग्नः। प्रत्यक्षीभूय देवी तस्मै पञ्चाक्षसमं रत्नपञ्चकं ददौ, नगरमानीतश्च। राजमान्यो वदान्यो धन्यो धर्मी धनं विललास, काशप्रकाशयशाः सुमतिर्दृष्टधर्मातिशयः परमश्रावकोऽभूत् ॥

॥ इति द्वितीया कथा ॥ २ ॥

**मे० वृ०**—अथ पूर्वोक्तमेव भङ्ग्यन्तरेण समर्थयति—(वक्तुमित्यादि) ।

हे गुणसमुद्र! ते—तव गुणान् वक्तुं कः पुरुषः क्षमः स्यात्? इत्यन्वयः। क्षमः-समर्थो भवेत् इत्यर्थः। 'स्यात्' इति क्रियापदम्। कः कर्ता? 'कः' पुरुषः । किं कर्तुम? 'वक्तुं' वाङ्मात्रेण पठितुम्। कान् कर्मतापन्नान्? 'गुणान्'। कस्य? 'ते' तव। कथंभूतान् तान् गुणान्? 'शशाङ्ककान्तान्' चन्द्रवन्मनोहरान्। कथंभूतः कः पुरुषः? 'बुद्ध्या सुरगुरुप्रतिमः' बृहस्पतिप्रतिबिम्बः। कथमपि। अत्रार्थान्तरं न्यस्यति—वा—अथवा अम्बुनिधिं भुजाभ्यां तरीतुं कः पुरुषः अलं—समर्थः स्यात्?

१ छाया—

अर्थविहीनः पुरुषः, सुवंशजातोऽपि लभते लघुत्वम्।
प्राप्नोति परिभवस्थानं, गुणरहितो धनुर्दण्ड इव ॥

२ 'लहुयत्त' इति ख पाठः। ३ मेघनादम्। ४ 'क्षुब्धा' इति ख-ग-पाठः। ५ 'परश्रावक' इति ख पाठः।

इत्यन्वयः। 'स्यात्' इति क्रियापदम्। कः कर्ता? 'कः' पुरुषः। कथंभूतः कः? 'अलं' समर्थः। किं कर्तुम्? 'तरीतुं' पारं प्राप्तुम्। कं कर्मतापन्नम्? 'अम्बुनिधिं' समुद्रम्। काभ्याम्? 'भुजाभ्याम्'। कथंभूतं अम्बुनिधिम्? 'कल्पान्तकालपवनोद्धतनक्रचक्रं' युगान्तसमयवायुना उद्धता—अत्यन्तभीषणा उच्छलन्तो नक्रा—मत्स्याः चक्राः—चक्राकारजीवविशेषा यस्मिन् स तथाभूतं, यद्वा नक्राणां चक्राणि—समूहा यस्मिन्नित्यपि योज्यम्। यथा समुद्रो भुजाभ्यां तरीतुं दुष्करस्तथा तव गुणा अप्यपारत्वाद् वर्णयितुं दुःशकाः, अत एव गुणसमुद्र इति संबोधनं युक्तमिति भावः॥

**अथ समासाः**—गुणानां समुद्र इव समुद्रो गुणसमुद्रः, तत्संबोधनं हे गुणसमुद्र! कर्मधारयः उपमितसमासः। शशः अङ्के—उत्सङ्गे यस्य स शशाङ्कः, कविप्रसिद्धिरियं, शशाङ्कवत् कान्ताः शशाङ्ककान्तास्तान्, मध्यपदलोपी समासः। सुराणां गुरुः सुरगुरुः, सुरगुरोः प्रतिमेव सुरगुरुप्रतिमः। कल्पस्य अन्तः कल्पान्तः, कल्पान्तश्चासौ कालश्च कल्पान्तकालः, कल्पान्तकालस्य पवनः कल्पान्तकालपवनः, कल्पान्तकालपवनेन उद्धताः कल्पान्तकालपवनोद्धताः, नक्राश्च चक्राश्च नक्रचक्राः, कल्पान्तकालपवनोद्धता नक्रचक्रा यत्र स तम्। अलमित्यव्ययं सामर्थ्ये। अम्बूनि नितरां धीयन्ते अस्मिन्निति अम्बुनिधिस्तं, 'नाम्नश्च०' (सा० सू० ५३९) इति समासः। भुजाभ्यामित्यत्र करणे तृतीया। प्रवहणादिना अम्बुनिधिः सुतरः, न पुनर्भुजाभ्यां इत्यतिशयोक्त्यलंकारः[1]। तरीतुमित्यत्र 'ईटो ग्रहाम्' (सा० सू० ८२१) इति दीर्घः॥ इति (चतुर्थ)काव्यार्थः॥ ४॥

*He points out the incompetence of even others in singing the merits of God*—

Oh ocean of virtues! Is even he who equals *Brihaspati* (the preceptor of gods) in knowledge capable of enumerating Thy merits that are charming like the moon? Who would be able to swim by means of his hands the ocean in which multitudes of crocodiles (or *Nakras* and *Chakras*) are stirred up by the hurricane blowing at the time of the destruction of the universe (*Kalpânta*)? (4)

✻ ✻ ✻ ✻

**अथ स्तवकरणप्रवृत्तौ कारणमाह—**

**सोऽहं तथापि तव भक्तिवशान्मुनीश!**
**कर्तुं स्तवं विगतशक्तिरपि प्रवृत्तः।**
**प्रीत्याऽऽत्मवीर्यमविचार्य मृगो मृगेन्द्रं**
**नाभ्येति किं निजशिशोः परिपालनार्थम्?॥ ५॥**

---

१ अतिशयोक्ति-लक्षणम्—

"विशेषविवक्षया भेदाभेदयोगायोगव्यत्ययोऽतिशयोक्तिः"

—काव्या० (अ० ६).

गु०-वि०—हे मुनीश !-सकलयोगीश ! तथापि तव स्तोत्रकरणासामर्थ्ये सत्यपि सोऽहं क्षीरकण्ठकुण्ठप्रज्ञोऽपि स्तवारम्भे विगतशक्तिरपि-क्षीणबलोऽपि । डमरुकमणि-न्यायेनोभयत्रापि तव प्रयोगः। तव-भवतो भक्तिवशात्-सेवाग्रहात् तव स्तवं-स्तुतिं कर्तुं-विधातुं प्रवृत्तः-कृतोद्यमो जातः। अत्रोपमानम्—मृगो-हरिण आत्मवीर्य-निजबलम् अवि-चार्य-अविचिन्त्य निजशिशोः-स्वीयबालस्य प्रीत्या-प्रेम्णा परिपालनार्थ-परिरक्षणाय मृगेन्द्रं-सिंहं किं नाभ्येति-किं न युद्धायाभिमुखो व्रजति ? । अपितु व्रजत्येव । अनौ-द्धत्ये यथा मृगः सिंहाभिगमे भग्नविक्रमो हास्यास्पदं तथाऽहं त्वत्स्तोत्रकरणे इति । औद्ध-त्ये तु यथा कुरङ्गो मृगेन्द्राभिमुखोत्थाने अबलोऽपि स्वबालपालनाय व्रजन् श्लाघां लभते । केसरिणस्तु मृगेण सह युद्धं लज्जायै ।

उक्तं च—

"मृगारि वा मृगेन्द्रं वा. सिंहं व्याहरतां जनः ।
तस्य द्वयमपि व्रीडा, क्रीडादलितदन्तिनः ॥ १ ॥"–अनु०

तथापि मतिमन्दोऽहं त्वद्भक्तिपारवश्यात् स्तवनप्रवृत्तौ कृतयत्नः कृतिनां कीर्तिपात्रं भवितेति वृत्तगर्भार्थः ॥ ५ ॥

मे० वृ०—अथैवमशक्यकार्यता दृढीकृत्य प्रवृत्तिहेतुमाह—(सोऽहमित्यादि) ।

हे मुनीश ! तथापि सोऽहं स्तव कर्तुं प्रवृत्तोऽस्मि इत्यन्वयः । कर्तरि उक्तिः । 'यत्रान्यन्न क्रियापदं न श्रूयते तत्र अस्तिर्भवन्त्यादिपरः प्रयुज्यते' इति न्यायादत्र 'अस्मि' इति क्रियापदम् । कः कर्ता ? 'सः' 'अहं विगतत्रपः' इत्यादिविशेषणविशिष्टः । कथंभूतः अहम् ? 'प्रवृत्तः' कृतारम्भः । किम् ? 'कर्तुम्' । कं कर्मतापन्नम् ? 'स्तवं' स्तोत्रम् । "स्तवः स्तोत्रं स्तुतिर्नुतिः" (अभि० का० २, श्लो० १८३) इति हेमसूरयः । कथम् ? 'तथापि' । सुरगुरुणाऽपि दुष्करस्तवने मादृशमन्दधियः सर्वथा असमर्थ-त्वेऽपि । तत्र हेतुमाह । कस्मात् हेतोः ? 'भक्तिवशात्' आन्तरप्रीतिबलात् । कस्य ? 'तव' । कथंभूतः अहम् ? 'विगतशक्तिरपि' निश्चितस्वकीयासामर्थ्योऽपि । अत्रान्वयं द्वावपिशब्दौ अत्यन्तासङ्गत्यदर्शनेन वक्ष्यमाणां बहुश्रुतोपहसनीयता प्राहतुः । असमर्थस्यापि प्रवृत्तौ हेतुं सूचयन्नर्थान्तरमाह—मृगो मृगेन्द्रं किं नाभ्येति ? इत्यन्वयः । कर्तरि उक्तिः । 'अभ्येति' इति क्रियापदम् । सन्मुखं यातीत्यर्थः । कथम् ? 'न', काका अपितु अभ्येत्येव । कः कर्ता ? 'मृगः' हरिणः । कं कर्मतापन्नम् ? 'मृगेन्द्रं' सिंहम् । किं कृत्वा ? 'प्रीत्या' स्नेहेन 'आत्मवीर्यं' स्वबलम् 'अविचार्य' अविमृश्य । किमर्थम् ? 'निजशिशोः परिपालनार्थं' स्वबालकरक्षणाय । अत्रार्थे यथा सर्वथा मृगस्य सामर्थ्यं नास्ति तथापि स मृगः स्नेहपरवशस्तद्रक्षणाय प्रवर्तते, तथाऽहमपि त्वद्भक्तिवशात् प्रवृत्तोऽस्मीति भावः ॥

---

१ 'डमरुक' इति क-पाठः । २ 'मुखोत्थाय' इति क पाठः ।

अथ समासः—येन प्रकारेण तथा इत्यर्थेयम् । भक्तेर्वशः भक्तिवशः, तस्मात् भक्तिवशात् । मुनीनामीशः मुनीशः, तत्संबोधने हे मुनीश ! । स्तवनं स्तवः, तं स्तवम् । विशेषेण गता विगता, 'प्रादयो०' (का० सू० ५३९) इति समासः, विगता शक्तिर्यस्य स विगतशक्तिः । प्रवर्तते स्म इति प्रवृत्तः । आत्मनो वीर्यं आत्मवीर्यं, तद् आत्मवीर्यम् । न विचार्य अविचार्य । मृगाणामिन्द्र इव इन्द्रः मृगेन्द्रस्तम् । अभ्येतीत्यत्र 'इण् गतौ' धातुः अभिपूर्वः अदादिः । निजश्चासौ शिशुश्च निजशिशुः कर्मधारयः, तस्य निजशिशोः, निजस्य शिशुरिति तत्पुरुषः कौशल्याम् । "निजः पुनः" (अभि० का० ३, श्लो० २२५) "आत्मीयः स्वः स्वकीयश्च" (अभि० का० ३, श्लो० २२६) इति हेमसूरयः । परिपालनस्य अर्थः–प्रयोजनं यस्य क्रियायां तत् परिपालनार्थम् । क्रियाविशेषणत्वात् नपुंसकत्वं, अत एव ईशार्थमिति किरातार्जुनीयायां काव्यवृत्तौ घण्टापथमध्ये ईशार्थं यथा तथेति क्रियाविशेषणं, अर्थेन नित्यसमासः सर्वलिङ्गता च वाच्या इति, परिपालनायेति परिपालनार्थं, 'तदर्थार्थेन' (सिद्ध० अ० ३, पा० १, सू० ७२) इति हैमवचनात्, अर्थशब्देन समासस्तत्पुरुषः ॥ इति पञ्चमकाव्यार्थः ॥ ५ ॥

*He justifies his attempt.*

Oh master of the saints ! in spite of this, being induced by devotion, I, that very man, though powerless, proceed to praise Thee Without being conscious of its power does not ( even ) an antelope rush against the king of beasts ( lion ) in order to protect its young one, owing to the affection it cherishes for it ? ( 5 )

* * * *

अथ कविरसामर्थ्येऽपि वाचाटताहेतुमाह—

अल्पश्रुतं श्रुतवतां परिहासधाम
त्वद्भक्तिरेव मुखरीकुरुते बलान्माम् ।
यत् कोकिलः किल मधौ मधुरं विरौति
तच्चारुचूतकलिकानिकरैकहेतुः ॥ ६ ॥

शु० वि०—हे विश्वविश्रुत ! श्रुतधरवैरिवसितचरण ! त्वद्भक्तिरेव–त्वच्छुश्रूषैव बलात्–हठादतिशयात् मां–मानतुङ्गाचार्यं मुखरीकुरुते–अबद्धमुखीकरोति, वाचालं विधत्ते इत्यर्थः । मां किंभूतम् ? अल्पानि–स्तोकानि श्रुतानि–शास्त्राणि यस्येति विग्रहस्तम् । अथाल्पशब्दोऽभाववाची । अल्पश्रुतमश्रुतमित्यनौद्धत्यम् । ( ग्रन्थाग्रं २०० ) अत एव श्रुतवतां–दृष्टशास्त्राणां विदुषां परिहासधाम–हास्यास्पदम् । अत्र दृष्टान्तदृढता–किलेति सत्ये । यत् कोकिलः–कलकण्ठो मधौ–वसन्ते मधुरं–मृदुकण्ठं विरौति–कूजति तदहं मन्ये चारुचूतकलिकानिकरैकहेतुरस्ति । चार्व्यश्च ताः सकषायरसाश्चूतकलिकाः–सहका-

१ '[illegible]' इति [illegible]-पाठः । २ 'वरसेवितचरण' इति [illegible]-पाठः । ३ 'मुखरीकरोति' इति [illegible]-पाठः ।

रस्य विकस्वरमञ्जर्यश्च ( चारुचूतकलिकाः ), चारुचूतकलिकानां निकरः–समूहः स चासौ एकहेतुश्चेति कर्मधारयः । तिक्तसुरभिसहकारस्मेरमञ्जरीपुञ्ज एव एकः कारणं विद्यते इत्यर्थः । औद्धत्ये तु यथाऽऽम्रमञ्जरीकृतभोजनः पुंस्कोकिलो मधुरस्वरो भुवि मनोहरः स्यात् ।

उक्तं च—

"उत्कूजन्तु वटे वटे वत बकाः काका वराका अपि
क्रां कुर्वन्तु सदा निनादपटवस्ते पिप्पले पिप्पले ।
सोऽन्यः कोऽपि रसालपल्लवनवग्रामोल्लसत्पाटवः
क्रीडत्कोकिलकण्ठकूजनकलालीलाविलासक्रमः ॥ १ ॥"–शार्दूल०

तथाऽहं स्तोकग्रन्थोऽपि त्वदुक्त्या स्तवं कुर्वाणः प्रवीणश्रेणौ लब्धवर्णो भावीति वृत्तभावार्थः ॥ ६ ॥

**मे० वृ०**—अथ भगवद्भक्तिप्रवृत्तत्वादेव मत्कृतावपि पण्डितप्रवृत्तिहेतुरिदं भविष्यति इत्याह–( अल्पश्रुतमित्यादि ) ।

हे मुनीश ! मां त्वद्भक्तिरेव मुखरीकुरुते इत्यन्वयः । 'मुखरीकुरुते' इति क्रियापदम् । वाचालं कुरुते इत्यर्थः । का कर्त्री ? 'त्वद्भक्तिः' तवानुरागः कं कर्मतापन्नम् ? 'माम्' । कस्मात् ? 'बलात्' हठात् । कथंभूतं माम् ? 'अल्पश्रुतं' न बहुशास्त्रज्ञम् । पुनः किंवि० माम् ? 'श्रुतवतां' शास्त्रज्ञानां 'परिहासधाम' हास्यस्थानम् । उक्तार्थे युक्तिमाह–'किल' इति सत्ये । कोकिलः यत् मधौ मधुरं विरौति इत्यन्वयः । 'विरौति' इति क्रियापदम् । जल्पतीत्यर्थः । कः कर्ता ? 'कोकिलः' पिकः । किं कर्मतापन्नम् ? 'यत्' । 'मधुरं' प्रियम् । कस्मिन् ? 'मधौ' वसन्ते । यत्तदोर्नित्याभिसम्बन्धात् तदिति 'तत्र चारुचूतकलिकानिकरैकहेतुः', 'भवति' इति शेषः । 'भवति' इति क्रियापदम् । कः कर्ता ? 'चारुचूतकलिकानिकरैकहेतुः' मनोहर आम्रमञ्जरीसमूह एव एकः–अद्वितीयो हेतुः–कारणमित्यर्थः । आम्रमञ्जरीकवलीकरणेनैव तत्कूजने माधुर्यं भवति इति भावः । तथापि ( थैव ) ममापि स्तवनप्रवृत्तौ मुख्यो हेतुस्त्वद्भक्तिरेवेति हृदयम् ॥

**अथ समासाः**—अल्पं श्रुतं यस्य स तम् । प्रशस्तं बहु श्रुतं येषां ते श्रुतवन्तस्तेषाम्, 'भूम्नि प्रशंसायां वा मतुप्' । यदुक्तं ( श्रीकात्यायनवार्तिकपाठ ३१८३ )—

"भूमनिन्दाप्रशंसासु, नित्ययोगेऽतिशायने ।
संसर्गेऽस्ति विवक्षायां, प्रायो मत्वादयो मताः ॥ १ ॥"–अनु०

श्रुतं विद्यते येषां ते श्रुतवन्तः, तेषाम् । परिहसनं–परिहासः, परिहासस्य धाम परिहासधाम तत्पुरुषः । तव भक्तिस्त्वद्भक्तिः । एवेति निश्चये । मुखं–वाग् अस्यास्तीति मुखरः, 'मध्वादिभ्यो रः' (सिद्ध० अ० ७, पा० २, सू० २६) इति हैमवचनात् अस्त्यर्थे रप्रत्ययः, अमुखरं मुखरं कुरुते इति मुखरीकुरुते, च्विप्रत्ययः । चारुश्चासौ चूतश्च चारुचूतः, चारुचूतस्य कलिकाः चारुचूतकलिकाः,

चारुचूतकलिकानां निकरः चारुचूतकलिकानिकरः, एकश्चासौ हेतुश्च एकहेतुः, चारुचूतकलिकानिकर एव एकहेतुः चारुचूतकलिकानिकरैकहेतुः, 'समासश्चान्वये नाम्नाम्' (सा० सू० ४६६) इति समासः। यदित्यत्र द्वितीयैकवचनं, वाक्यार्थमात्रवाचित्वे तु प्रथमाऽपि सम्भवति, तच्छब्दाग्रे चूतस्य पूर्वोक्तपरामर्शित्वेन प्रथमा, व्याख्यानान्तरेण सप्तम्यपीति, यत्तच्छब्दावव्ययावनव्ययौ च वर्तेते इति श्रीविजयसेनसूरिप्रश्नोत्तरग्रन्थे । विरौतीत्यत्र 'रु शब्दे' धातुः 'युतुरुस्तुभ्य ईर्वा उर्वा' विरौति विरवीति इति रूपद्वयम् ॥ इति षष्ठकाव्यार्थः ॥ ६ ॥

*He mentions the reason for praying to God.*

It is my devotion to Thee that compels me to prattle—me, who am an object of ridicule to the scholars on account of my possessing little knowledge. That the cuckoo sings sweet songs in the spring is solely due to (the presence of) the charming bunches of mango-sprouts (6)

* * * *

हेतुमुक्त्वा स्तवकरणे यो गुणस्तमाह—

त्वत्संस्तवेन भवसन्ततिसन्निबद्धं
पापं क्षणात् क्षयमुपैति शरीरभाजाम् ।
आक्रान्तलोकमलिनीलमशेषमाशु
सूर्यांशुभिन्नमिव शार्वरमन्धकारम् ॥ ७ ॥

गु० वि०—हे सकलपातकनाशन! जिन! त्वत्संस्तवेन–भवद्गुणोत्कीर्तनेन शरीरभाजां–प्राणिनां भवसन्ततिसन्निबद्धं–जन्मकोटिममर्जितं पापम्–अष्टविधं कर्म क्षणाद्–घटिकाषष्ठांशेन स्तोककालाद् वा क्षयमुपैति–नाशमुपयाति । भगवत्स्वरूपध्यानाद् देहिनां साम्यं भवति । साम्यादुक्तपापक्षयो युक्तः ।

उक्तं च—

"प्रणिहन्ति क्षणार्धेन, साम्यमालम्ब्य कर्म तत् ।
यन्न हन्यान्नरस्तीव्र–तपसा जन्मकोटिभिः ॥ १ ॥"–अनु०

अमुमेवार्थमुपमिमीते–पापं किमिव ? अन्धकारमिव । यथा शार्वरं–कृष्णपक्षरात्रिजं तिमिरं सूर्यांशुभिन्नं–सहस्रकररोचिर्विदारितं आशु–शीघ्रं क्षयं गच्छति यतः । किंभूतमन्धकारम् ? आक्रान्तलोकं–व्याप्तविश्वं अलिनीलं–मधुकरकुलकृष्णं अशेषं–सकलं न तु स्तोकम् । पापविशेषणान्यप्यौचित्येन कार्याणि । यथा दुरितक्षयहेतुर्जिनस्तवः, तथा तिमिरनाशहेतुः सूर्योदय इति ।

१ 'युरुतुस्तुभ्योऽद्विकेभ्यो हसादीनां चतुर्णामीड्वा' इति सारस्वते ( सू० ८९२ ) ।

उक्तं च—

"रवेरेवोदयः श्लाघ्यः, किमन्यैरुदयान्तरैः ।
न तमांसि न तेजांसि, यस्मिन्नभ्युदिते सति ॥ १ ॥"—अनु०

इति वृत्तभावार्थः ॥ ७ ॥

अत्र मन्त्रोऽपि यथा—

ॐ ह्रां ह्रीं ह्रूं ऋषभशान्तिधृतिकीर्तिकान्तिबुद्धिलक्ष्मीह्रीं अप्रतिचक्रे ! फट् विचक्राय(यै) स्वाहा । शान्त्युपशान्तिसर्वकार्यकरी भव देवि! अपराजिते ! ॐ ठः ठः । राजकुले विवादे कटकादिषु स्मर्यते ।

एतन्माहात्म्ये सुधनोदाहरणम्—

"दिवाऽपि तमसाऽऽकीर्णाः, श्रेष्ठिभूपजिनालयाः ।
धूलीपावैष्णवावासो, रजोव्याप्तौ स्तवस्मृतेः ॥ १ ॥"—अनु०

पाटलीपुरे पत्तने परमजैनः सुवासनः सधनः सुधननामा श्रेष्ठी बभूव । स स्वकारितप्रासादे श्रीआदिदेवस्यार्चामानर्च । तत्सम्पर्काद् राजा भीमः श्रावकोऽभूत् ।

उक्तं च ( नीतिशतके श्लो० १९ )—

"जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम् ? ॥ १ ॥"—वसन्त०

अन्यदा तत्र पुरोद्याने वैष्णवो धूलीपा नाम योगी आगात् । स च सिद्धक्षुद्रचेटकः सेवकीकृतपाषण्डिपेटकः पाटलीपुरीयं सर्वजनमाचकर्ष निजकलया । ततोऽसौ चित्ते जहर्ष कञ्चन जनं पप्रच्छ च—मत्सेवनाय को नायाति नागरः ? । सोऽवदत्—श्वेताम्बरदर्शनभक्तिदृढौ राजश्रेष्ठिनौ नायाताम् । धूलीपाश्चेटकशक्त्या जिनराजश्रेष्ठिगृहेषु धूलीवृष्टिमकरोत् । प्रातः श्रेष्ठी पांसुपङ्क्तिपातेन प्रसृतं तमो दृष्ट्वा भक्तामरस्तवसप्तमवृत्तगुणनावसरे प्रकटीचक्रे चक्रेश्वरीम् । सा चार्हच्छासनप्रभावनाचिकीः सुधनवचसा जिनभूपश्रेष्ठिगृहगतां धूलिं निरस्य वैष्णवमन्दिरे धूलीपास्थाने च पांसुपूरमक्षिपत् । किमपि नास्फुरद् योगिनः । फालभ्रष्टद्वीपीव विलक्षः स्थितः ।

उक्तं च—

"तावद् गर्जन्ति मातङ्गा, वने मदभरालसाः ।
लीलोल्लोलितलाङ्गूलो, यावन्नायाति केसरी ॥ १ ॥"—अनु०

---

१ 'अथान्यदा तत्पुरो०' इति ग-पाठः । २ 'धूलीपनामा' इति ग-पाठः । ३ '[illegible]' इति ख-पाठः । ४ 'क्षालितं' इति ख-पाठः ।

धूलीपा दैवीतर्जितः श्रेष्ठिचेष्टितं ज्ञात्वा कथमपि श्रेष्ठिनः चरणे शरणमसरत् । श्रेष्ठी राजस्थानमानयत् तम् । ततो धूलीपा विदितसर्वोदन्तः सुधनात् धर्मं शुश्राव । यथा—

"हिंसा त्याज्या नरकपदवी सत्यमाभाषणीयं
स्तेयं हेयं सुरतविरतिः सर्वसङ्गाभिवृत्तिः ।
जैनो धर्मो यदि न रुचितः पापपङ्कावृतेभ्यः
सर्पिर्दुष्टं किमलमियता यत् प्रमेही न भुङ्क्ते ॥ १ ॥"—स्रग्धरा

"देवेषु वीतरागाद्, देवो व्रतिषु व्रती च निर्ग्रन्थात् ।
धर्मश्च क्षान्तिकृपा–धर्मादस्त्युत्तमो नान्यः ॥ २ ॥"—आर्या

इति धर्मं श्रुत्वा सम्यक् सम्यक्त्वधरोऽभूत्, श्रेष्ठिनं च गुरुमिव मेने । देव्या धूलिरुपशमिता । सूर्यांशुसदृशं जिनशासनप्रतापं व्यतिस्तरत् (?) सुधनः । देवाधिदेवं दृष्ट्वा तुष्टाव धूलीपाः ।

जिनेन्द्रचन्द्रप्रणिपातलालसं
मया शिरोऽन्यस्य न नाम नम्यते ।
गजेन्द्रगलस्थलपानलम्पटं
शुनीमुखे नालिकुलं निलीयते ॥ १ ॥—वंशस्थम्

इति सर्वोऽपि जनो भक्तामरस्तवमध्यगीष्ट, गरिष्ठगरिममन्दिरं श्रेष्ठी जातः ॥

॥ इति तृतीयकथा ॥ ३ ॥

मे० वृ०—अथ प्रवृत्तिहेतुमाख्याय सर्वजनदिव्यताहेतुमाह—( त्वत्संस्तवेनेत्यादि ) ।

हे मुनीश ! त्वत्संस्तवेन पापं क्षणात् क्षय उपैति इत्यन्वयः । 'उपैति' इति क्रियापदम् । किं कर्तृ ? 'पापं' कल्मषम् । कं कर्मतापन्नम् ? 'क्षय' प्रलयं विनाशमितियावत् । केषाम् ? 'शरीरभाजां' प्राणिनाम् । कस्मात् ? 'क्षणात्' घटिकाषष्ठांशात । केन ? 'त्वत्संस्तवेन' । करणे तृतीया । किंवि० पापम् ? 'भव-(सन्तति)सन्निबद्धं' जन्मश्रेणिसञ्चितम् । अतिबहुलमित्यर्थः । अत्र दृष्टान्तमाह—किमिव ? अन्धकारमिव । इव—यथा । अन्धकारं क्षणात् क्षयं उपैति इत्यन्वयः । 'उपैति' इति क्रियापदम् । किं कर्तृ ? 'अन्धकारम्' । किं कर्मतापन्नम् ? 'क्षयम्' । किंवि० ? 'शार्वरं' रात्रिसम्भूतम् । पुनः किं० ? 'आक्रान्तलोकं' व्याप्तविश्वम् । पुनः किं० ? 'अलिनीलं' भ्रमरकृष्णम् । "कालो नीलोऽसितः शितिः" (अभि० का० ६, श्लो० ३३) इति हेमसूरयः । पुनः किंवि० ? 'अशेषं' समस्तम् । पुनः किंवि० ? 'सूर्यांशुभिन्नं' आदित्यकिरणविदीर्णम् । कथम् ? 'आशु' शीघ्रम् ॥

---

१ 'चरणे' इति क-पाठः । २ 'नानूनं भा०' इत्यपि पाठः । ३ किमिदमियता इति ख-पाठः ।

४ वंशस्थ-लक्षणम्—

"जतौ तु वंशस्थमुदीरितं जरौ"

**समासाश्च**—तव संस्तवः त्वत्संस्तवः षष्ठीतत्पुरुषः । युष्मच्छब्दस्य 'त्वन्मदेकत्वे०' (**सा० सू० ३३०**) इति त्वदादेशः । भवानां सन्ततिः भवसन्ततिः, भवसन्तत्या सनिबद्ध भवसन्ततिसंनिबद्धम् । उपैति इत्यत्र इणेधिवर्जनान्नोपसर्गाकारलोपः । शरीर भजन्तीति शरीरभाजस्तेषां 'भजो विण्' (**सा० सू०** १२३२) इति विण् प्रत्ययः । आक्रान्तो लोको येन तत् आक्रान्तलोकम् । अलिवन्नीलं अलिनीलं, मध्यलोपी समासः । न विद्यते शेषो यत्र तत् अशेषम् । सूर्यस्य अंशवः सूर्यांशवः, सूर्यांशुभिर्भिन्नं सूर्यांशुभिन्नम् । शर्वर्यां सम्भूतं शार्वरं 'तत्र कृतलब्धक्रीतसभूते' (अ० ६, पा० ३, सू० ९४) इति **सिद्धहेम**सूत्रादण्, शर्वर्यां भवं शार्वरमिति **कौशल्यां**; 'वर्षाकालेभ्यः' (सिद्ध० अ० ६, पा० ३, सू० ८०) इति **हैम**सूत्रेण, तथा 'कालाट्ठञ्' (अ० ४, पा० ३, सू० ११) इति **पाणिनीयसूत्रेण** कथमिह ठञ् प्रत्ययो नेति न चिन्त्यं, अर्थविशेषत्वात्, 'नैशो मार्गः सवितुरुदये सूच्यते कामिनीना'मितीव शारदं पार्वणः शर्वरीसार इत्यादि महाकविप्रयोगाच, **सिद्धान्तकौमुद्यां** तु—'शार्वरस्य तमसो निषिद्धये' इति **कालिदासः**, 'अनुदितौषसराग' इति **भारविः**, समानकालीन प्राक्कालीनं इत्यादि च, 'अपभ्रंश एवैते' इति **प्रामाणिकाः** इत्युक्तं, शर्वर्या इदं शार्वरमिति कश्चित । अन्धं करोतीत्यन्धकारः, पुंनपुंसकः । यथा सूर्योदिते तिमिरक्षयस्तथा त्वत्मस्तवनात पापक्षयः, न च अत्रापसिद्धान्तः, अर्हद्वर्णसंज्वलनस्य भावस्तवत्वेन भगवत्याद्यागमेऽपि महाफलत्वेन उक्तत्वात्, 'पूजाकोटिसम स्तोत्र' इति लोकेऽपि सिद्धत्वाच्चेति, तद् विचिन्त्य यथाशक्त्याऽत्र प्रवर्तनीयमेवत्याशयः॥ इति सप्तमकाव्यार्थः ॥ ७॥

*He points out the advantages of praising God*

The sins of the embodied souls accumulated within a series of births are instantaneously annihilated by praising Thee, as is the case with the jet-black nocturnal darkness pervading the universe, when pierced by the rays of the sun. (7)

❀ ❀ ❀ ❀

स्तवारम्भसामर्थ्यं हृदयन्नाह—

मत्वेति नाथ ! तव संस्तवनं मयेद-
मारभ्यते तनुधियाऽपि तव प्रभावात् ।
चेतो हरिष्यति सतां नलिनीदलेषु
मुक्ताफलद्युतिमुपैति ननूदबिन्दुः ॥ ८ ॥

गु० वि०—हे विश्वविघ्नप्रमाथ ! नाथ ! पूर्वोक्तयुक्त्या स्तवकरणं दुष्करं सर्वपापहरं चेति मत्वा–अवबुध्य मया भक्तिपरवशेन तनुधियाऽपि–स्वल्पमतिनाऽपि इदं–प्रत्यक्षं भण्यमानं तव संस्तवनं–भवतः स्तोत्रं कर्तुमिति शेषः, आरभ्यते–करणायोद्यम्यते । इदं च स्तवनं मत्कृतमपि तव प्रभावात्–भवतोऽनुभावात् सतां–सज्जनानां विदुषां चेतो हरिष्यति–मनो हरिष्यति, न तु दुर्जनानाम् । सन्त एवान्यगुणग्रहणे लम्पटाः । उक्तं च—

१ 'स्तवनक०' इति क पाठ । २ 'वनमकृत' इति क-ख-पाठः ।

"मनसि वचसि काये पुण्यपीयूषपूर्णा-
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ? ॥ १ ॥"—मालिनी

न तु खलाः । उक्तं च—

"सीसं धुणियं हिययं चमक्कियं पुलइयं च अंगेहिं ।
तहवि हु खलस्स वाणी, परगुणगहणे न नीसरिआ ॥"

ननु निश्चये उदबिन्दुः–वारिच्छटा नलिनीदलेषु–कमलिनीपत्रेषु मुक्ताफलद्युतिं–मौक्तिकच्छायां उपैति–उपागच्छति । अत्र 'उदकस्योदः०' ( पा० अ० ६, पा० ३, सू० ५७ ) इति निपातः । अत्र तव प्रभावात् सतां मनोहरं स्तवनमित्युक्ते स्तवस्याऽऽसमाप्तेः कर्तुः श्रोतुरध्येतुश्च श्रेयःसूचनं निर्विघ्नताकथनं च । यदुक्तं च—

"श्रेयांसि बहुविघ्नानि, भवन्ति महतामपि ।
अश्रेयसि प्रवृत्तानां, क्वापि यान्ति विनायकाः ॥ १ ॥"—अनु०

इति । यथा पद्मिनीपत्रस्थजलबिन्दुर्मुक्ताच्छायां धत्ते तथा तव प्रभावगुणाश्रयणात् स्तवोऽपि विद्वच्चित्तानन्दनं कर्ता । इति वृत्तगर्भार्थः ॥ ८ ॥

मे० वृ०—अथ पापक्षयार्थिनां स्वत एवास्योपादेयता भविष्यतीत्याह—( मत्वेत्यादि ) ।

हे नाथ ! मया इदं–वक्ष्यमाणं त्वत्संस्तवनं आरभ्यते–प्रारम्भक्रियाविषयीक्रियते इत्यन्वयः । कर्मणि उक्तिः । 'आरभ्यते' इति क्रियापदम् । केन कर्त्रा ? 'मया' । किं कर्मतापन्नम् ? 'संस्तवनं' स्तोत्रम् । किंविशिष्टं संस्तवनम ? 'इदं' बुद्धिस्थम् । किंविशिष्टेन मया ? 'तनुधिया' स्वल्पबुद्ध्या । किं कृत्वा ? 'इति मत्वा' एवं ज्ञात्वा । इतीति घण्टालालान्यायेन इदमिति पदस्य उभयत्र सम्बन्धात् इदं संस्तवनं सतां चेतो हरिष्यति–आक्षेप्स्यति वशं नेष्यतीतियावत् इत्यन्वयः । 'हरिष्यति' इति क्रियापदम् । किं कर्तृ ? 'संस्तवनम्' । किं कर्मतापन्नम् ? 'चेतः' । केषाम् ? 'सताम्' । कस्मात् ? 'प्रभावात्' । कस्य ? 'तव' । ननु–निश्चितम् उदबिन्दुः मुक्ताफलद्युति उपैति ( इत्यन्वयः ) । ('उपैति') इति क्रियापदम् । कः कर्ता ? 'उदबिन्दुः' जलकणः । कां कर्मतापन्नाम् ? 'मुक्ताफलद्युतिं' मौक्तिककान्तिम् । केषु ? 'नलिनीदलेषु' कमलिनीपत्रेषु । आधारप्रभावावृतादृशं वस्त्वपि परमशोभां प्राप्नोति । यदुक्तं—

---

१ मालिनी–लक्षणम्—

"ननमयययुतेयं मालिनी भोगिलोकैः"

२ छाया—

शीर्षं धुतं हृदयं, चमत्कृतं पुलकितं चाङ्गैः ।
तथापि तु खलस्य वाणी, परगुणग्रहणे न निस्सृता ॥

३ 'तहविहु परगुणगहणे खलस्स वाणी न नीसरिआ' इति ख–पाठः ।

"संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते ।
स्वातौ सागरशुक्तिसम्पुटगतं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥ १ ॥"–शार्दूल०

**समासा यथा**–मननं पूर्वं मत्वा 'मन ज्ञाने' धातुः क्त्वा प्रत्ययः 'लोपस्त्वनुदात्ततनाम्' ( सा० सू० ८८६ ) इति नलोपः, 'ह्रस्वस्य पिति कृति तुक्' ( सा० सू० १२४६ ) । संस्तूयते अनेनेति संस्तवनम् । तनुर्धीर्यस्य स तनुधीस्तेन तनुधिया । नलिन्या दलानि नलिनीदलानि तेषु । आधारे सप्तमी । बहुवचनं तु अत्यन्तशोभासम्भारव्यञ्जकम् । मुक्ता एव फलं मुक्ताफलं, तस्य द्युतिः मुक्ताफलद्युतिस्ताम् । उदकस्य बिन्दुः उदबिन्दुः, 'सहादेः सादिः' ( सा० सू० ५०६ ) इति तेन उद इत्यादेशः । "बिन्दौ पृषत्पृषतविप्रुषः" (अभि० का० ४, श्लो० १५५ ) इति हेमसूरयः ॥ इति अष्टमकाव्यार्थः ॥ ८ ॥

*He gains confidence in composing the hymn.*

Having thus thought over, oh Lord, I, though poor in intelligence commence ( composing ) this hymn of Thine Owing to Thy prowess, this ( humble ) work of mine will surely attract the attention of the good, ( for, even ) a drop of water shines like a pearl, when resting on a leaf of a lotus-plant. ( 8 )

* * * *

अथ सर्वज्ञनामग्रहणमेव विघ्नहरमाह—

आस्तां तव स्तवनमस्तसमस्तदोषं
त्वत्संकथाऽपि जगतां दुरितानि हन्ति ।
दूरे सहस्रकिरणः कुरुते प्रभैव
पद्माकरेषु जलजानि विकासभाञ्जि ॥ ९ ॥

**शु० वि०—**हे अष्टादशदोषनिर्नाशन! अस्तसमस्तदोषं–निर्मूलितनिखिलदूषणं तव स्तवनं–गुणरहस्योत्कीर्तनं आस्तां–तिष्ठतु दूरे । स्तवमहिमा महीयान् वर्तते । त्वत्संकथाऽपि–त्वत्सम्बन्धी संलापोऽपि–त्वद्विषयिणी पूर्वभवसम्बद्धनामवार्ताऽपि जगतां–लोकानां दुरितानि–पापानि विघ्नानि वा हन्ति । उक्तं च ( वन्दितासूत्रे, गा० ४६ )—

"[1]चिरसंचियपावपणा–सणीइ भवसयसहस्समहणीए ।
चउवीसजिणविणिग्गय–कहाइ वोलिंतु मे दिअहा ॥ १ ॥"–आर्या

---

१ छाया—

चिरसञ्चितपापप्रणाशिन्या भवशतसहस्रमथिन्या ।
चतुर्विंशतिजिनविनिर्गत–कथया व्रजन्तु मम दिवसाः ॥

औपम्ये[1] यथा—सहस्रकिरणः-सूर्यो दूरे तिष्ठतु, प्रभैव-अरुणच्छायैव पद्माकरेषु-सरस्सु जलजानि-मुकुलरूपकमलानि विकाशभाञ्जि-स्मेराणि कुरुते। यदा सूर्योदयात् पूर्वप्रवर्तिनी प्रभातप्रभा पद्मविकाशिनी स्यात्, तदा सूर्यस्य किमुच्यते?। तथा भगवद्गुणोत्कीर्तनं[2] स्तवमाहात्म्यं न कश्चिद् वक्तुमलम्। जिननामग्रहणसंकथैव सर्वदुरितनाशिनीतिवृत्तार्थः ॥९॥

अत्र मन्त्रो[3] यथा—

ॐ ह्रीँ जूं श्रीचक्रेश्वरी(रि?) मम रक्षां कुरु कुरु स्वाहा, सर्वरक्षाकरी भगवती केशववत्

"निराकृत्य हरिं मार्गे, केशवो याति संस्तवात्।
पृष्ठे कृत्वा ततो देव्या, रसकूपाद् बहिः कृतः ॥ १ ॥—अनु०
भिल्लधाटीं तृषं क्षिप्त्वा, वने च जलयोगतः।
दुरितानि क्षयं जग्मु-श्चकाराद्दि जिनालयम् ॥ २ ॥"—युग्मम्

वसन्तपुरे केशवो नाम निर्धनो वणिक् वसति स्म। सोऽन्यदा जैनगुरुदेशनामश्रौषीत्—

"धर्मो मङ्गलमुत्तमं नरसुरश्रीभुक्तिमुक्तिप्रदो
धर्मः पाति पितेव वत्सलतया मातेव पुष्णाति च।
धर्मः सद्गुणसङ्ग्रहे गुरुरिव स्वामीव राज्यप्रदो
धर्मः स्निह्यति बन्धुवद् दिशति वा कल्पद्रुवद् वाञ्छितम् ॥ १॥"—शार्दू०

किञ्च—

"कल्लाणकोडिजणणी[4], दुरंतदुरिआरिवग्गनिट्ठवणी।
संसारजलहितरणी, इक्कुच्चिय होइ जीवदया ॥ २ ॥"—आर्या

इति श्रुत्वा हिंसाविरतिव्रतमग्रहीत्। भक्तामरस्तवमपाठीत्। केशवो धनं विना सर्वं जात्यादिकमनर्थं मेने। उक्तं च—

"यस्यास्ति वित्तं स नरः कुलीनः
स पण्डितः स श्रुतवान् गुणज्ञः।
स एव वक्ता स च दर्शनीयः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ १ ॥"—उपजातिः[5]

अतो धनार्जनचिकीर्देशान्तरमसरत्। मार्गे गच्छन् सार्थाद् भ्रष्टः पञ्चवदनेन रुद्धः स्तवमस्मार्षीत्। सिंहोऽनश्यत्। ततः केनचित् कापालिना विप्रतार्य धनाशया रस-

---

१ 'औपम्य यथा' इति क-पाठः। २ '०द्गुणकीर्तनं' इति ग-पाठः। ३ 'मन्त्रोऽयम्' इति क-पाठः।

४ छाया—
कल्याणकोटिजननी, दुरन्तदुरितारिवर्गनिष्ठापनी।
संसारजलधितरणी, एकैव भवति जीवदया ॥

५ उपजाति-लक्षणम्—
"स्यादिन्द्रवज्रा यदि तौ जगौ ग, उपेन्द्रवज्रा जतजास्ततो गौ।
अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ताः ॥"

कूपिकां प्रक्षिप्तः। सोऽपि तद्वचं स्वभृतं तुम्बं जग्राह। केशवः सरज्जुरधो मुक्तः कथमपि कूपमेखलायां स्थितः स्तवं सस्मार। चक्रादेव्या पृष्ठे कृत्वा निष्कासितः। [1]निःस्वस्य रत्नाष्टकं वितीर्णम्। सार्थेन साकं व्रजन् कान्तारे समुत्थितां भिल्लधाटीं निर्घाटयामास स्तवस्मरणात्। एकाकिने निर्जले वने भ्रमते तृषितायाष्टमनवमवृत्तगुणनप्रान्ते देव्योदकं दत्तम्। एवं सर्वाणि कष्टानि हत्वा पुरं प्राप। उक्तं च—

"वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुराकृतानि ॥ १ ॥"—उपजातिः

रत्नाष्टकेन श्रीर्जाता। चक्रेश्वरीपार्श्वालोकचमत्कारकृते [2]एकदिनेन जैनप्रासादं कारयामास। केशवश्चिरं सुखमभुनक्, धर्ममाराधयामास॥

॥ इति चतुर्थी कथा ॥ ४ ॥

मे० वृ०—अथ संस्तवनस्य अतिशयालुमाहात्म्यमाह—( आस्तां तवेत्यादि )

हे नाथ! तव स्तवनं दूरे आस्तां इत्यन्वयः। 'आस्ताम्' इति क्रियापदम्। तिष्ठत्वित्यर्थः। किं कर्तृ? 'स्तवनम्'। कस्य? 'तव' भवतः। कस्मिन्? 'दूरे' दूरस्थले, स्तवनस्याधिकमहिमत्वात्। किन्तु त्वत्संकथाऽपि—त्वत्पूर्वभवादिमूलप्रथमानुयोगागमोऽपि—त्वद्वार्ताऽपि वा जगताम्—आधारे आधेयोपचारात् जगन्निवासिलोकानां दुरितानि—पापानि हन्ति इति वाक्यम्। 'हन्ति' इति क्रियापदम्। का कर्त्री? 'त्वत्संकथा'। कानि कर्मतापन्नानि? 'दुरितानि'।

"अथाऽशुभम्।
दुष्कृतं दुरितं पाप—मेनः पाप्मा च पातकम्॥
किल्बिषं कलुषं किण्वं, कल्मषं वृजिनं तमः।
अंहः कल्कमघं पङ्कः"—(अभि० का० ६, श्लो० १६,१७)

इति हेमसूरयः। किंवि० स्तवनम्? 'अस्तसमस्तदोष' निरस्तसर्वदूषणम्। अत्र दृष्टान्तमाह—सहस्रकिरणो दूरे आस्ताम्। 'आस्ताम्' इति क्रियापदम्। कः कर्ता? 'सहस्रकिरणः' सूर्यः। किन्तु प्रभैव—प्रभातकान्तिरेव पद्माकरेषु—तडागेषु जलजानि—पद्मानि विकाशयति—विकाशीकुरुते इति क्रियासम्बन्धः। 'कुरुते' इति क्रियापदम्। का कर्त्री? 'प्रभा'। कानि कर्मतापन्नानि? 'जलजानि'। कथंभूतानि? 'विकाशभाञ्जि' विकस्वराणि॥

समासाश्च—समस्ताश्च ते दोषाश्च समस्तदोषाः, अस्ताः समस्तदोषा येन तद् अस्तसमस्तदोषम्। तव संकथा त्वत्संकथा। सहस्रं किरणा यस्य स सहस्रकिरणः। पद्मानां आकराः पद्माकराः, तेषु पद्माकरेषु। जले जातानि जलजानि, डप्रत्ययः। विकाशं भजन्तीति विकाशभाञ्जि॥ इति नवमकाव्यार्थः॥९॥

---

१ निर्धनस्य। २ 'एकदिने जैन०' इति ख-पाठः।

*He mentions the prowess of God's narration.*

Let Thy psalm which has destroyed all faults be out of consideration, since even the narration of Thy life annihilates the sins of the universe. Leave aside the case of the Sun, when (even) its light alone opens the lotuses lying in the lakes. (9)

※ ※ ※ ※

अथ जिनस्तुतिसेवाफलमाह—(ग्रं० ३००)

नात्यद्भुतं भुवनभूषणभूत ! नाथ !
भूतैर्गुणैर्भुवि भवन्तमभिष्टुवन्तः ।
तुल्या भवन्ति भवतो ननु तेन किं वा
भूत्याश्रितं य इह नात्मसमं करोति ॥ १० ॥

गु०वि०—हे भुवनभूषणभूत ! भूतशब्द उपमावाची, हे विश्वमण्डनसमान ! नाथ ! –प्रभो ! भूतैः–जातैः–विद्यमानैर्गुणैर्भुवि–पृथिव्यां भवन्तं–त्वामभिष्टुवन्तः–स्तुवन्तो जना भवतः–तव तुल्याः–समा भवन्ति एतन्नात्यद्भुतं–नातिचित्रम् । अत्र व्यतिरेकमाह—ननु–निश्चितं वा–अथवा तेन स्वामिना किं कार्यं–किं प्रयोजनम् ? इह–भवे जनमध्ये वा यः स्वामी आश्रितं–सेवकं भूत्या–ऋद्ध्या आत्मसमं–निजतुल्यं न करोति–न विधत्ते । अहमपि तीर्थकरं स्तुवन् जिनध्यानैकतानमानसत्वेन तीर्थकृद्गोत्रार्जको भवितेति कवेराशयः ॥

अत्राम्नायः—

श्रीऋषभप्रभुः त्र्यशीतिपूर्वलक्षणानि गार्हस्थ्येऽस्थात् । पुत्रशतं देशशतराज्ये न्यधात् । विनीतापुरे ज्येष्ठसुतं भरतं न्ययुङ्क्त । विरक्तो भोगान्नाभुङ्क्त । याचकेभ्यः सांवत्सरिकदानं प्रादत्त । चतुर्भी राजन्यक्षत्रियसहस्रैः सत्रा व्रतमादत्त । शक्राभ्यर्थनया चातुर्मुष्टिकं लोचमकरोत् । कच्छमहाकच्छादयस्तथैवाकार्षुः । मौनी चावनीं विजहार । शुद्धभिक्षानभिज्ञो जनोऽशनं न वितताार । प्रभोः पुरः कनक-किरीट-कटक-कन्या-करिकिशोर-कम्बल-कौशेयादि दधुस्ते, तेष्वकल्प्यतया भगवान् न किमपि जग्राह । तूष्णीक एव प्रतिज्ञामुवाह । क्षुधिताः कच्छादयो विमृश्य स्वर्धुनीतीरे कन्दफलाशनाख्यपाभरादकृतगृहगमना वर्धितासंस्कृतालकत्वाज्जटिलास्तापसा अभूवन् ॥

इतश्च नमिविनमी राजपुत्रौ कार्यवशाद् दूरदेशं प्रासावायातौ, कच्छमहाकच्छयोर्निजपित्रोरमिलताम्, सर्वं वृत्तान्तमलभेताम् । तावापृच्छ्य भरतेऽवहीलनां धृत्वा श्रीम-

१ '०षण ! भूतनाथ !' इत्यपि पदच्छेद. समीचीनः ।

२ व्यतिरेक-लक्षणम्—

"उत्कर्षापकर्षहेत्वोः साम्यस्य चोक्तावनुक्तौ चोपमेयस्याधिक्य व्यतिरेकः"

–काव्या० (अ० ६)

३ पङ्कजादि । ४ 'किमपि न जग्राह' इति ख–पाठः ।

द्वावीशं स्वामिनं सेवार्थं समगंसाताम् । निशितनिस्त्रिंशधरौ यत्र स्वामी क्रमौ न्यवीविशत् ततो भुवः कण्टकाद्युदधरतां दंशमशकादिकमरक्षताम् । प्रातः स्वामिपार्श्वभुवं प्रमार्ज्य नलिनीदलानीतनीरेणाभ्यषिञ्चताम् । बकुलकमलपाटलादिकुसुमप्रकरं विस्तार्य चरणावभ्यर्च्यास्रद्वाञ्छितदो भवेत्युक्त्वा नमोऽकार्ष्टाम् । उभयपार्श्वयोरसिधरौ तीर्थनाथमसेविषाताम् । एवं मध्यंदिने सन्ध्यायामपि वन्दित्वा कामितमयाचताम् । इत्थं जङ्गमं तीर्थं समाश्रयतोर्नेमिविनम्योर्गतः कियान् कालः ॥

एकदा धरणेन्द्रश्चलितासनः स्वामिनं निनंसिषुरैत् । नमस्कृतो भावसारं भगवान् स्तुतश्च, तावपश्यत् । कौ युवां किमर्थं परमगुरुसेवायै लग्नावित्यपृच्छत् । तावूचतुः—भो महाशय ! कच्छमहाकच्छसुतौ नमिविनमी क्षत्रियावावाम् । राज्यार्थं नाथं सेवितुमारभावहि । पातालेन्द्रोऽवदत्—निरीहो निर्ममो मुक्तसर्वसङ्गो भगवान् किं वितरिष्यति ? निर्धनात् का धनप्राप्तिः ? । न च कस्मै रुष्यति न तुष्यति नीरागत्वादसौ । भरतं भजत । स सकाञ्चनस्तुष्टो राज्यांशं युवाभ्यां दास्यति । तौ स्माहतुः—शृणु भो ! स्वामी यादृक् त्वयोक्तस्तादृगस्तु । आवाभ्यां वाञ्छितायासावाश्रितः, सफलो भवतु मा भवतु वा, भरतं न सेवावहे । कल्पवृक्षं मुक्त्वा कः कर्कन्धूं[1] स्वीकुरुते ? काञ्चनं त्यक्त्वा क आरमादत्ते ? चिन्तामणिं हित्वा कः कर्करकं[2] ग्रन्थौ बध्नाति ? रत्नाकरं विहाय को लवणाकरं श्रयते ? इति जानीहि । इहामुत्रावयोः स्वाम्ययमेव । फणीन्द्रस्तयोरद्वितीयां भक्तिं मत्वा श्रीऋषभरूपं विकृत्याष्टचत्वारिंशत् सहस्राणि मन्त्रानगदत् । रोहिणीप्रमुखाः साम्नाया देव्यः प्रत्यक्षीकृत्य दत्तास्तेन वैताढ्ये दक्षिणोत्तरश्रेणौ पञ्चाशत्षष्टिपुरस्थापना कृता खेचरतामगातां तौ । धरणेन्द्रः सर्वां स्थितिं कृत्वा नागनिकायमगमत् । तत्सम्बन्धिनः स्वजनाः सर्वे विद्याधरतां प्रापुः । तौ विमानयानसमानश्रीप्रौढौ नव्यदिव्यविमानारूढौ भरतभूपायात्मानं दर्शयित्वा दक्षिणश्रेणौ रथनूपुरचक्रवालपुरे श्रीनमिः, उत्तरश्रेणौ गगनवल्लभपुरे विनमिश्च राज्यमकुरुताम् । निरुपमभोगैर्बहुकालं निर्गमय्य विद्याधरेन्द्रपदं स्वपुत्राभ्यां दत्त्वा गृहीतव्रतौ कोटीद्वयेन मुनीनां सहितौ श्रीशत्रुञ्जये श्रीनाभेयजिनलब्धं सिद्धिपदं प्रापतुः । इत्याश्रितं स्वतुल्यं कुर्वते प्रभवः ॥ इति वृत्तार्थः ॥ १० ॥

मे० वृ०—अथ स्तवनस्य रेखाप्राप्तं महिमानमाह—( नात्यद्भुतमित्यादि )

हे भुवनभूषण ! हे भूतनाथ ! जना भुवि भवतः तुल्या भवन्तीत्यन्वयः । 'भवन्ति' इति क्रियापदम् । के कर्तारः ? 'जनाः' । कथंभूताः ? 'तुल्याः' समानाः । कस्य ? 'भवतः' । 'तुल्यार्थैस्तृतीया-षष्ठ्यौ' (सिद्ध०अ० २, पा० २, सू० ११६) इति षष्ठी । किं कुर्वतः ? 'अभिष्टुवन्तः' स्तवं कुर्वन्तः । कं कर्मतापन्नम् ? 'भवन्तं' त्वाम् । कैः करणभूतैः ? 'गुणैः' औदार्यादिभिः । किंवि० ? 'भूतैः' सद्भूतैः । कस्याम् ? 'भुवि' पृथिव्याम् । हे भुवनभूषण !—हे जगन्मण्डन ! तत्—तुल्यभवनं, नात्यद्भुतं—न अत्याश्चर्यं, तव स्तवनमाहात्म्यात् त्वद्रूपा भवन्तीति भावः । अत्र व्यतिरेकमाह—ननु—निश्चितं वा तेन स्वामिना

[1] 'कान्दुर' इति ख-पाठः । [2] बदरीम् । [3] पित्तलम् ।

किं स्यात् इत्यन्वयः। 'स्यात्' इति क्रियापदम्। किं कर्तृ? 'किं' कार्यम्। केन? 'तेन' स्वामिना। आश्रितेनेति शेषः। आक्षेपोक्त्या न किमपि इत्यर्थः। तेन केन? यः स्वामी आश्रितं—सेवकं भूत्या—सम्पदा आत्मसमं न करोतीत्यन्वयः। 'करोति' इति क्रियापदम्। कथम्? 'न'। कः कर्ता? 'यः' स्वामी। कं कर्मतापन्नम्? 'आश्रितम्'। किंविशिष्टम्? 'आत्मसम' स्वतुल्यम्। कया? 'भूत्या'। केचित् तु पूर्वान्वये हे भुवनभूषणभूत! हे नाथ! इत्यामन्त्रणाभ्यामन्वयं कुर्वन्ति, तत्र भूतशब्द उपमार्थे वाच्यः॥

समासा यथा—अति—अत्यन्तं—अतिक्रान्तं अद्भुतं अत्यद्भुतम्। 'अतिरतिक्रमे' इति सिद्धहेम (अ० ३, पा० १, सू० ४५) सूत्रात् तत्पुरुषसमासः। भुवनस्य भूषणं भुवनभूषणं, तत्सम्बोधनं क्रियते हे भुवनभूषण!। भूतानां नाथः भूतनाथः, तत्सम्बोधन हे भूतनाथ!। प्राणिनां पालकत्वात् आत्मनः समः आत्मसमस्तं आत्मसमम्॥ इति दशमकाव्यार्थः॥ १०॥

*He declares the fruit of praising God.*

Oh Lord! oh ornament to the universe! It is not a matter of great surprise that those who praise Thee on this earth by singing Thy really existing merits attain Thy status (become Thy equals) Or else what is the use of him (that lord) who does not raise his devotee to the same level of prosperity where he is?–10



अथ जिनदर्शनफलमाह—

दृष्ट्वा भवन्तमनिमेषविलोकनीयं
नान्यत्र तोषमुपयाति जनस्य चक्षुः।
पीत्वा पयः शशिकरद्युति दुग्धसिन्धोः
क्षारं जलं जलनिधे रसितुं क इच्छेत्?॥ ११॥

गु०वि०—हे प्रसन्नरूपस्वरूप! अनिमेषेण—निर्निमेषेण विलोक्यते—दृश्यत इत्यनिमेषविलोकनीयस्तं भवन्तं—त्वां दृष्ट्वा—वीक्ष्य जनस्य—द्रष्टुर्भव्यस्य चक्षुः—नेत्रं अन्यत्र—देवान्तरे न तोषं—चित्तानन्दमुपयाति—उपैति उमास्वातिवाचकवत्। सोऽदृष्टपूर्वां जिनमूर्तिं दृष्ट्वा स्तुतिं पठितवान्—

"वपुरेव तवाचष्टे, भगवन्! वीतरागताम्।
न हि कोटरसंस्थेऽग्नौ, तरुर्भवति शाद्वलः॥ १॥"—अनु०

ततोऽन्यत्र शिवादौ विरक्तो जिनधर्मदर्शनासक्तोऽभूदुमास्वातिर्द्विजसूनुरात्तव्रतः सूरिपदमाप। क्रमात् पूर्वगतवेत्ता वाचकोऽभूत्॥ चक्षुरिति जातावेकवचनम्। ध्यानिनो भवन्मुद्रास्वरूपावबोधार्थं स्थिरीभूय निर्निमेषदृशस्त्वां पश्यन्तोऽपरसुखेष्वरुचिं

१ आक्षेप—लक्षणम्—
"विवक्षितस्य निषेध इवोपमानस्याक्षेपश्चाक्षेपः"
—काव्या० (अ० ६)

इच्छतीत्यर्थः। अत्रोपमा—कः पुरुषो दुग्धसिन्धोः-क्षीरसमुद्रस्य पयो-दुग्धं पीत्वा जलनिधेः-लवणाम्भोधेः क्षारं-कटुकं जलं रसितुं-स्वादितुं-पातुमिच्छेत्? अपितु न कोऽपि। दुग्धसिन्धोः पयः किंभूतम्? शशिनः करस्तद्वद् द्युतिर्यस्येति शशिकरद्युति-चन्द्रकरनिर्मलम्। तीर्थकृद्रूपदर्शनं क्षीरसागरपयःपानसमं, अपरदेवरूपदर्शनं क्षारसमुद्रोदकस्वादसमानमिति वृत्तभावार्थः ॥ ११ ॥

मन्त्राम्नायम्—

ॐ ह्रां अरहंताणं सिद्धाणं सूरीणं उवज्झायाणं साहूणं मम ऋद्धिं वृद्धिं समीहितं कुरु कुरु स्वाहा। शुचिना प्रातःसन्ध्यायां वार ३२ स्मरणात् सर्वसिद्धिः कपर्दिकवत् कामधेनोः कामितासिः—

"कपर्दी नन्दिनीं धेनु-मधोक् द्वात्रिंशतं दिनान्।
तत्क्षीरं स्वर्णलक्षाणि, प्रान्ते भूपं न्यमन्त्रयत् ॥ १ ॥"–अनु०

श्रीअणहिल्लपत्तने चौलुक्यवंश्यकुमारपालदेवो राजा, भोपला नाम राज्ञी, वाग्भटो महामन्त्री। श्रीहेमचन्द्रसूरिगुरुदेशनाकर्णनात् राजा परमार्हतोऽजनि। इतश्च तत्र पुरि कपर्दी नाम दुर्गतो वणिगभूत्। स च भक्तामरस्तवं पपाठ वर्णमात्राशुद्धमेकमना उपवैणवं गुणयति स्म। एकदा तस्यैकादशवृत्तं ध्यायतः श्रीयुगादीशयक्षिणी साक्षाद्भूता अर्थार्थिने वरमदात्–नन्दिनी कामगवीरूपेण सायं त्वन्मन्दिरे समेताऽस्म्यहम्। त्वया कोरकुम्भे दुग्धं सुवर्णं भवितेत्युवाच तथा चकार च। यावदेकत्रिंशद् घटाः स्वर्णपूर्णा जाता देवीमुत्कलापनाय समैत्। कपर्दी जजल्प–देवि! भूरि भूरि दानेनानुगृहीतोऽहं भवत्या, परमेकदिनं धेनुरूपेणागन्तव्यं यथा तत्क्षीरं क्षैरेयीं कृत्वा राजादिकं भोजयामि। इति प्रतिपन्नं, तत् चक्रया कृतं च। द्वात्रिंशदहरन्ते सान्तःपुरपरीवारं नृपं न्यमन्त्रयत्। श्रीहेमाचार्याश्च पादावधारिताः(?)। अशनसामग्री न काऽपि। राजादीनामासनानि प्रदत्तानि। कपर्दी घटं परमान्नभृतमानैषीत्। यथारुचि परिवेषयामास। गुरूंश्च पूर्णं प्रत्यलाभयत्। राजादयः सुरसं सुरभि सुधासममाकण्ठं परमान्नं बुभुजिरे यत् पूर्वं नाभुञ्जन्। नात्रुटत् भोजनान्ते एकत्रिंशद् हाटकघटा दर्शिताः। तेन विस्मितानां तेषां पुरः स्तवमहिमा प्रकाशितः। स्वं स्वं स्वेच्छं भुङ्क्ष्वेति राज्ञोक्तम्। गुरुनृपवाग्भटादयोऽपि रञ्जिताः कपर्दिनं तुष्टुवुः। स भक्तामरस्तवप्रभावं वर्णयामास। चिरं विभवसुखसहितो जिनधर्मं प्रभावयामास ॥

॥ इति पञ्चमी कथा ॥ ५ ॥

मे०वृ०–अथ आस्तां स्तवनं, किन्तु त्वद्दर्शनमपि मनोहरमित्याह–(दृष्ट्वेत्यादि)

हे नाथ! जनस्य चक्षुः अन्यत्र तोष न उपयातीत्यन्वयः। 'उपयाति' इति क्रियापदम्। किं कर्तृ? 'चक्षुः'। कस्य? 'जनस्य'। कं कर्मतापन्नम्? 'तोषं' सन्तोषं तृप्तिमित्यर्थः। कुत्र? 'अन्यत्र' अन्यस्थाने। कथम्? 'न'। किं कृत्वा? 'भवन्तं दृष्ट्वा' (त्वां) विलोक्य। त्वद्दर्शनाल्लब्धरसं जननयनं नार्थान्तरेषु

१ 'दुग्धं जलं पीत्वा' इति क-ख-पाठः। २ 'पुरपत्तने' इति ख-पाठः। ३ सधेणुवाधम्।

तुष्टिं लभते इति भावः। किंवि० भवन्तम्? 'अनिमेषविलोकनीयं' निमेषो—नेत्रमीलनं तदभावः अनिमेषस्तेन विलोकयितुं योग्यस्तम्। दर्शने निमेषस्याप्यन्तराये महदुरस्वाद् उत्फुल्लनेत्रतया जनैर्वीक्षणीय इति भावः, यद्वा अनिमेषाः—देवास्तेषामप्यतिशायिरूपत्वाद् वीक्षणयोग्यः, अत एव त्वां दृष्ट्वा नान्यत्र चक्षुर्विश्राम्यति। अर्थान्तरन्यासमाह—दुग्धसिन्धोः पयः पीत्वा जलनिधेः क्षारं जलं रसितुं अशितुं वा क इच्छेत्? अपि तु न कोऽपीत्यन्वयः। 'इच्छेत्' इति क्रियापदम्। अभिलषेदित्यर्थः। कः कर्ता? 'जनः'। किं कर्तुम्? 'रसितुं' अशितुं—उपभोक्तुं पातुमितियावत्। किं कर्मतापन्नम्? 'जलम्'। कस्य? 'जलनिधेः' लवणसमुद्रस्य। किंवि० जलम्? 'क्षारम्'। क्षारपदसन्निधानादेव जलनिधिसामान्यपदेन लवणसमुद्रो गृह्यते। किं कृत्वा? 'पीत्वा'। किं कर्मतापन्नम्? 'पयः' दुग्धम्। कस्य? 'दुग्धसिन्धोः' क्षीरसमुद्रस्य। रसाधिक्यार्थमिदम्। किंवि० पयः? 'शशिकरद्युति' चन्द्रकिरणोज्ज्वलम्। पयःशब्देनात्र दुग्धमेव व्याख्येयं, न जलं, विशेषादान्तर्यध्वननात्॥

समासाश्च—न निमेषः अनिमेषः—निमेषाभावः। 'क्वचित् प्रसज्यप्रतिषेधे नञ्समासः' इति भाष्यकारः। अनिमेषेण विलोकनीयः अनिमेषविलोकनीयस्तम्। शशः अस्मिन्नस्तीति शशी। आधारार्थे लौकिकप्रसिद्धिः। सम्बन्धे ज्योतिःशास्त्रप्रतीतिः। यदुक्तं—

"अश्वः १ शशक २ वराहौ ३ श्येनो ४ घूक ५ स्तथा च मण्डूकः ६।
हुण्डु ७ घूक ८ कच्छपाः ९ स्यू रव्यादेर्वाहनानि पुनः॥ १॥"

शशिनः कराः शशिकराः, शशिकरवद् द्युतिर्यस्य तत् शशिकरद्युति। दुग्धस्य सिन्धुः दुग्धसिन्धुः, तस्य दुग्धसिन्धोः। जलं नितरां धीयते अत्र जलनिधिः, तस्य जलनिधेः। 'रस रसने' धातोः रसितुमिति। 'अशश् (?) भोजने' इत्यस्य अशितुमिति वा॥ इति एकादशवृत्तस्यार्थः॥ ११॥

*He mentions the fruit of seeing God.*

After seeing Thee worthy to be unwinkingly looked at, the eye of a person does not find pleasure elsewhere. Who would desire to taste the brackish water of the (salt–) sea, when once he has drunk the milk of the milk–ocean shining like the rays of the moon?–11

* * * *

अथ भगवद्रूपवर्णनमाह—

यैः शान्तरागरुचिभिः परमाणुभिस्त्वं
निर्मापितस्त्रिभुवनैकललामभूत!।
तावन्त एव खलु तेऽप्यणवः पृथिव्यां
यत् ते समानमपरं नहि रूपमस्ति॥ १२॥

गु० वि०—हे त्रिभुवनैकललामभूत!—हे त्रिलोकाग्र्यशिरोग्रवर्तिमाल्यतुल्य! पुरो न्यस्तं पुष्पाभरणं ललाममुच्यते। यैः परमाणुभिः—दलिकैर्निर्माणकर्मणा त्वं निर्मापितः—कृतः।

किंभूतैः ? शान्ताः–प्रशमं गता रागस्य–अनुरागस्य रुचिः–कान्तिर्येभ्यस्ते तथा तैः। रागसहचरितत्वाद् द्वेषपरिग्रहः। अथच (वा) शान्तनामा नवमो रसस्तस्य रागो–भावस्तस्य रुचिः–छाया येषु तैः। खलु–निश्चितं तेऽपि अणवः–परमाणवस्तावन्त एव –भगवद्रूपनिर्माणप्रमाणा एव वर्तन्ते। यद्–यस्मात् कारणात् पृथिव्यां–भूपीठे ते–तव समानं–तुल्यमपरम्–अन्यद् रूपं नहि अस्ति–न विद्यते। जिनरूपज्ञानगुणा अनुत्तरसूरेष्वपि न प्राप्ता औपम्यार्थं कविभिः तीर्थकृद्रूपं चिकीर्षवोऽमरा अपि न शक्ताः। उक्तं च (आवश्यक–निर्युक्त्यां गा० ५६९)—

"सव्वसुरा जइ रूवं, अंगुट्ठपमाणयं विउव्विज्जा।
जिणपायंगुट्ठं पइ, न सोहए तं जहिंगालो ॥ १ ॥"

अथ यैः परमाणुभिः तेऽप्यणव इति पौनरुक्त्यम्। तत्रेयं व्याख्या—औदारिकवर्गणायामभव्येभ्योऽनन्तगुणाणुनिष्पन्नाः स्कन्धा अनन्ताः सन्ति, तेषु स्कन्धेष्वणवः–स्तोका एव जिनरूपपरमाणवः। अणुशब्दः स्तोकवाची। अथवा महाकविप्रयुक्तत्वात् मन्त्राम्नायेन स्तुतिवशादन्यार्थापादनाद् वा न पौनरुक्त्यम्। उक्तं च—

"सज्झायज्झाणतवो–सहेसु उवएसथुइपयाणेसु।
संतगुणकित्तणेसुं, न हुंति पुणरुत्तदोसाओ ॥ १ ॥"

इति ॥

मन्त्रश्चात्र–

ॐ ह्रीं चउद्दसपुव्वीणं ॐ ह्रीं पयाणुमारीणं ॐ ह्रीं एगारसंगधारीणं ॐ ह्रीं उज्जुमईणं ॐ ह्रीं विउलमईणं नमः स्वाहा ॥ सारस्वती विद्या ॥ इति वृत्तार्थः ॥

महिमकथा यथा—

त्रयीरूपं विधायोच्चै–र्बहुरूपो व्यजृम्भत।
जिनरूपं चिकीर्षुस्तु, देव्याऽऽहत्य विडम्बितः ॥ १ ॥

अङ्गदेशे चम्पापुरि कर्णो राजा। जिनधर्मरक्तो भक्तामरस्तवजापसक्तो मन्त्री सुबुद्धिः। अन्यदा कश्चिच्चेटकी बहुरूपो भूपसदः समासदत्। स चेटकबलेन शङ्ख–गदा–चक्र–शार्ङ्गशालिभुजं कृष्णवर्णं ताक्ष्र्यपत्रं लक्ष्मीनाथं विष्णुमकार्षीत्। ततो धवलवृषवाहनं धवलवर्णं चन्द्रशेखरं गङ्गाधरं जटामण्डितमौलिं सर्वाङ्गभुजङ्गाभरणं भस्मलिप्तकरणं शिवाकान्तं शिवमदर्शयत्। तदनु राजहंसयानं चतुर्मुखं श्रुतिपवित्रवाचं सावित्रीसनाथं विरञ्चिं व्यरचयत्। अन्येऽपि (ग्रं० ४००) स्कन्द–बुद्ध–गणपतिप्रभृतयः सुरा नृत्यन्तो दर्शितास्तेन। सर्वा पर्षद्

१ सर्वे सुरा यदि रूप, अङ्गुष्ठप्रमाण विकुर्वीरन्।
जिनपादाङ्गुष्ठं प्रति, न शोभते तद् यथाऽङ्गारः ॥
२ स्वाध्यायध्यानतपऔषधेषु उपदेशस्तुतिप्रदानेषु।
सन्तगुणकीर्तनेषु न भवन्ति पुनरुक्तदोषाः ॥
३ अथवाथ इति क–पाठः। ४ गात्रम्।

विलयं गता। पुनरुवाच चेटकी—भो सुबुद्धे! त्वद्देवं जिनं शिवपदादानयामीति भणित्वा यावत् तीर्थकृद्रूपं कर्तुं लग्नः, तावन्मन्त्रिप्रारब्धद्वादशवृत्तगुणनेनाविर्भूतचक्रेश्वर्या चपेटयाऽऽहत्य धरायां क्षिप्तः। तस्य नष्टा देवकला। कपटं प्रकटं जातं बहितापेन हीनरूप्यवत्। आह स्म देवी—रे रे मूर्खशेखर! दुष्टाशय! निरञ्जनं वागगोचरचारित्ररूपं परालक्ष्यस्वरूपं सर्वसुरोत्कृष्टं जिनरूपं चिकीर्षुः कथं प्राणिषि?। यदि जीविताशा तदा सुबुद्धिं दैवतमिव भजस्व। इति भणनानन्तरमेव महामात्यक्रमयोरपतच्चेटकी। तुष्टा भूपादयः। मन्त्री भक्तामरस्तवमहिमानमवर्णयद् धर्मं च।

> "विद्या विवादाय धनं मदाय
> प्रज्ञाप्रकर्षः परवञ्चनाय।
> अभ्युन्नतिर्लोकपराभवाय
> येषां प्रकाशस्तिमिराय तेषाम् ॥ १ ॥"—इन्द्रवज्रा

तथा—

> "धम्मम्मि नत्थि माया, न य कवडं नाणुवत्तिभणियं वा।
> फुडपागडमकुडिलं, धम्मवयणमुज्जुयं जाण ॥ २ ॥"—आर्या[1]

किञ्च—

> "हिंसामङ्गिषु मा कृथा वद गिरं सत्यामपापावहां
> स्तेयं वर्जय सर्वथा परवधूसङ्गं विमुञ्चादरात्।
> कुर्विच्छापरिमाणमिष्टविभवे क्रोधादिदोषांस्त्यज
> प्रीतिं जैनमते विधेहि च परां धर्मे यदीच्छाऽस्ति ते ॥ ३ ॥"—शार्दूल०

इत्याकर्ण्य बहुरूपो जिनधर्ममादृतवान्। चक्रेश्वरी तिरोऽभूत्। सर्वे परमदैवतमन्त्रमिव स्तोत्रं पेठुः। सुबुद्धिः सद्बुद्धिः सकलसंसारसुखभाजनं सर्वलोकमान्योऽभूत् ॥

॥ इति षष्ठी कथा ॥ ६ ॥

मे० वृ०—अथैतादृग् रूपातिशयः कुत इत्याशङ्कानिरासाय प्राह—( यैः शान्तेत्यादि )

हे त्रिभुवनैकललामभूत!—हे जगत्त्रितयाद्वैततिलकोपमान! यैः परमाणुभिस्त्वं निर्मापितः असि इत्यन्वयः। 'असि' इति क्रियापदम्। कः कर्ता? 'त्वम्'। किंवि० ? 'निर्मापितः' सम्पादितः। कैः कर्तृभिः? 'परमाणुभिः'। कः कर्मरूपः? 'त्वम्'। किंविशिष्टैः परमाणुभिः? 'शान्तरागरुचिभिः' व्यपगतरागकान्तिभिः। 'खलु' निश्चितम्। ते अणवः पृथिव्यामपि तावन्त एव सन्तीत्यन्वयः। 'सन्ति' इति क्रियापदम्। के कर्तारः? 'अणवः' सूक्ष्मा निर्विभागा भागाः। किंविशिष्टा अणवः? 'तावन्तः' तत्परिमाणाः, त्वद्देहनिर्माणपरिमेयाः। कस्याम्? 'पृथिव्यां' भूमौ। कथम्? 'अपि'। अत्र हेतुमाह यद्—

---

[1] धर्मे नास्ति माया न च कपटं मानुवृत्तिभणितं वा।
स्फुटप्रकटमकुटिलं धर्मवचनमृजुकं जानीहि ॥

यस्मात् कारणात् ते–तव समानं अपरं रूपं हि–निश्चितं न अस्ति इत्यन्वयः। 'अस्ति' इति क्रियापदम्। किं कर्तृ? 'रूपम्', आकृतिविशिष्टः पिण्डः। किंविशिष्टं रूपम्? 'समानं' तुल्यम्। कस्य? 'ते' तव। यदि च त्वद्देहनिर्माणहेतुपरमाणुभ्योऽधिका अणवो भवेयुस्तर्हि तन्निर्मितमन्यदपि रूपं भवेत्, न चैतदस्ति, तस्मात् ते अणवोऽपि तावन्त एवेत्यनुमानालङ्कारः[1]॥

समासा यथा–त्रयाणां भुवनानां समाहारस्त्रिभुवनं, पात्रादित्वान्न ईप्, द्विगुसमासः, एकं च तल्ललाम च एकललाम, त्रिभुवने एकललाम त्रिभुवनैकललाम, त्रिभुवनैकललाम्नो भूतः–तुल्यस्त्रिभुवनैकललामभूतः, भूतशब्द उपमार्थे, तस्यामन्त्रणे हे त्रिभुवनैकललामभूत!। रागस्य रुचिः रागरुचिः, शान्ता रागरुचिर्येषु ते शान्तरागरुचयस्तैः, यद्वा शान्तो नाम नवमरसस्तस्य रागः–परमा प्रीतिस्तस्य रुचिर्येषु ते तथा तैः। परमाश्च ते अणवश्च परमाणवस्तैर्निर्मापित इत्यत्र ण्यन्तत्वेन परमाणुभिरित्यत्र करणे तृतीयाव्याख्यानादीश्वरकर्तृकत्वं यद्यप्याक्षेपाल्लभ्यते, तथापि संवाहयतीत्यादिषु स्वार्थेऽपि ण्यन्तत्वस्य उचितत्वात् तत्तद्द्रव्यक्षेत्रकालभावानां साचिव्येनैव कार्यद्रव्योपपत्तेरीश्वरकल्पनाया अन्यथासिद्धत्वाच्च, अत एव शान्तरागरुचिभिरित्यत्र न ण्यन्तत्वम्, ईश्वरकर्तृकत्वे तु तत्रापि ण्यन्तत्वप्रसङ्गादित्यन्यत्र विस्तरः। ललामेति तिलकस्थानीयं माल्य ललाम उच्यते। "प्रभ्रष्टकं शिखालम्बि, पुरोन्यस्तं ललामकं" (अभि० का० ३, श्लो० ३१६) इति श्रीहेमसूरयः।

"ललाम च ललामं च, लाञ्छनध्वजवाजिषु।
मृगे प्रधाने भूषायां, रम्ये वालधिपुण्ड्रयोः॥ १॥"

इति विश्वः। इति द्वादशवृत्तस्यार्थः॥ १२॥

*He describes God's beauty.*

Oh unique ornament of the forehead of the three worlds! Certainly, in the universe there are only as many atoms possessing the sentiment of quietude as Thou art formed of, for, there is no other ( being having ) elegance like Thine.

* * * *

अथ मुखवर्णनमाह—

वक्त्रं क्व ते सुरनरोरगनेत्रहारि
निःशेषनिर्जितजगत्रितयोपमानम्।
बिम्बं कलङ्कमलिनं क्व निशाकरस्य
यद् वासरे भवति पाण्डुपलाशकल्पम्॥ १३॥

गु०वि०–अत्र क्वशब्दौ महदन्तरं सूचयतः। हे सौम्यवदन! क्व ते–तव वक्त्रं-सकलमङ्गल-

[1] अनुमानालङ्कारस्य लक्षणम्—
"हेतोः साध्यावगमोऽनुमानम्"
—काव्या० (अ० ६)

मुखं मुखं वर्तते ? क्व निशाकरस्य–चन्द्रस्य बिम्बं–मण्डलं विद्यते ? यत् त्वन्मुखस्येन्दोः साम्य-मुच्यते तत्र महदन्तरालं पश्यामः । किंभूतं वक्त्रम् ? सुरनरोरगाणां नेत्राणि हर्तुं शीलमस्येति विग्रहः । उरगा–भवनवासिनः । निःशेषेण–सामस्त्येन निःशेषाणि (वा) कमलदर्पणचन्द्रादीनि सर्वाणि निर्जितानि–तर्जितानि जगत्रितयस्योपमानानि येन । तच्च चन्द्रबिम्बं किंभूतम् ? 'कलङ्कमलिनं' मृगशशगुरुशापलाञ्छनकश्मलम् । यत् चन्द्रबिम्बं वासरे–दिने पाण्डुपलाशकल्पं–जीर्णपक्वपाण्डुरवर्णसवर्णं भवति । मुखस्य तेनोपमा कथं घटते ? । इति वृत्तार्थः ॥१३॥

मन्त्राश्चात्र—

ॐ ह्रीं पूर्वं आमोसहिलद्धीणं विप्पोसहिल० खेलोसहिल० जल्लोसहिल० सव्वोसहिल० नमः स्वाहा । रोगापहारिणी विद्या ॥

मे० वृ०–अथ भगवद्वक्त्रैकदेशेनापि उपमानामसाम्यमाह–(वक्त्रमित्यादि)

द्वौ कशब्दौ महदन्तरं सूचयतः । हे नाथ[1] ते–तव वक्त्रं–मुखं क्व ? च–पुनः तत् निशाकरस्य बिम्बं क्व वर्तते ? इत्यन्वयः । अनयोः सर्वथा सामान्यं लौकिकप्रतिपादितं युक्त्या न घटते एवेति वाक्यार्थः । 'वर्तते' इति क्रियापदम् । किं कर्तृ ? 'वक्त्र' वदनम् । कस्य ? 'ते' तव । किंविशिष्टं वक्त्रम् ? 'सुरनरोरगनेत्रहारि' सुरा–देवा नरा–मनुष्या उरगा–नागकुमारा देवाः, उपलक्षणाद् भवनपति-व्यन्तर-ज्योतिष्कादयः, तेषां नेत्राणि–नयनानि हरति–आक्षिपति–रञ्जयतीत्येवंशीलम् । पुनः किंवि० वक्त्रम् ? 'निःशेषनिर्जितजगत्रितयोपमान' वक्त्रस्य उपमानानि कमल-चन्द्र-दर्पणादीनि सर्वाणि तानि निर्जितानि–अवगणितानि, तेभ्योऽधिकशोभाकारित्वात् । द्वितीयान्वयेऽपि 'वर्तते' (इति) क्रियापदम् । कि कर्तृ ? 'बिम्बं' मण्डलम् । कस्य ? 'निशाकरस्य' चन्द्रस्य । किंवि० बिम्बम् ? 'कलङ्कमलिनं' श्यामतारूपदूषितम् । तदिति किं तत् ? बिम्बं वासरे पाण्डुपलाशकल्पं भवतीत्यन्वयः । 'भवति' इति क्रियापदम् । किं कर्तृ ? 'बिम्बम्' । किंवि० बिम्बम् ? 'पाण्डुपलाशकल्पं' जीर्णपत्रतुल्यम् । कदा ? 'वासरे' दिवसे ॥

**अथ समासाः**–सुराश्च नराश्च उरगाश्च सुरनरोरगाः, सुरनरोरगाणां नेत्राणि सुरनरोरगनेत्राणि, तानि हरतीति सुरनरोरगनेत्रहारि । अत्र उद्गीर्ण-यष्टि-उपलादिशब्दवत् हृञ्धातोरपि मनोहरेत्यादौ अर्थविशेषप्रत्यायकत्वेन औदार्यगुणकारित्वान्न दुष्टता । त्रयोऽवयवा अस्य त्रितयं, जगतस्त्रितयं जगत्त्रितयं, जगत्त्रितये उपमानानि जगत्त्रितयोपमानानि, निर्गतं शेषादिति निःशेषं तत्पुरुषः, निःशेषं निर्जितानि जगत्त्रितयोपमानानि येन तन्निःशेषनिर्जितजगत्त्रितयोपमानम् । कलङ्केन मलिनं कलङ्कमलिनम् । कलङ्केतिपदं दोषाभिप्रायसूचकम् । निशां करोतीति निशाकरः, 'संख्याहर्०' इत्यादि सिद्धहेम(अ० ५, पा० १, सू० १०२)सूत्रात् टप्रत्ययः, तस्य निशाकरस्य । पाण्डु च तत् पलाशं च पाण्डुपलाशं, ईषद्–असमाप्तं पाण्डुपलाशं पाण्डुपलाशकल्पम् । ईषदसमाप्तौ कल्पप्प्रत्ययः । "पलाशं छदनं बर्ह पत्रं" (अभि० का० ४ श्लो० १८९) इति हेमसूरयः ॥ इति त्रयोदशकाव्यार्थः ॥ १३ ॥

1 '०मानिनः' इति क-पाठः ।

*He praises God's face.*

Where is Thy face which attracts the eyes of the celestials, the human beings and the serpent-gods and which far excels all the standards of comparison to be found in the three worlds? And where is the disc of the moon which is stained with a blot and which grows pale-white like a leaf of the *Palás'a* tree by day-break?—13

* * * *

अथ च गुणव्याप्तिमाह—

सम्पूर्णमण्डलशशाङ्ककलाकलाप-
शुभ्रा गुणास्त्रिभुवनं तव लङ्घयन्ति ।
ये संश्रितास्त्रिजगदीश्वर ! नाथमेकं
कस्तान् निवारयति सञ्चरतो यथेष्टम् ? ॥ १४ ॥

गु०वि०—हे त्रिजगदीश्वर !–त्रिजगन्नाथ ! तव गुणाः–क्षमावैराग्यादयस्त्रिभुवनं लङ्घयन्ति–अतिक्रामन्ति, त्रिलोकीमाक्रम्य तिष्ठन्तीत्यर्थः । किंभूताः ? सम्पूर्णमण्डलः–आश्विनपूर्णिमासम्बन्धी शशाङ्कः–चन्द्रस्तस्य कलाकलापः–करनिकरस्तद्वच्छुभ्रा–धवलाः । विश्वव्यापे हेतुं दर्शयन्ति । ये गुणा एकं–नरान्तरपरिहारेण अद्वितीयं नाथं संश्रिताः–अशिश्रियन् । कः पुरुषो यथेष्टं–स्वेच्छया सञ्चरतः–परिभ्रमतः तान् गुणान् निवारयति–निषेधयति ? अपितु न कश्चन । त्रिजगदपि भवद्गुणग्रहणपरायणं दृश्यते । तथाच समर्थे प्रभौ सति सेवाश्रितानां सर्वत्र प्रचारो युक्त एव । अथ त्रिजगदीश्वरनाथं सम्पूर्णपदं त्रिजगदीश्वराणां सुरेन्द्रनरेन्द्रचमरेन्द्रादीनां नाथं परमपदप्राप्तौ योगक्षेमकारित्वात् । इति वृत्तार्थः ॥ १४ ॥

अथ मन्त्रः—

ॐ ह्रीं आसीविसलद्धीणं ॐ ह्रीं खीरासवलद्धीणं ॐ ह्रीं महुयासवलद्धीणं ॐ ह्रीं अमिआसवलद्धीणं नमः स्वाहा । विषापहारिणी विद्या ॥ अथवा ॐ ह्रीं श्रीं क्लीं असिआउसा चुलु चुलु कुलु कुलु मुलु मुलु इच्छियं मे कुरु कुरु स्वाहा ॥ त्रिभुवनस्वामिनी विद्या सर्वसमीहितदा ॥

महिमकथा—

सत्यकस्य कनी डाही, भृगुकच्छेऽथ सुव्रतम् ।
उपोषिता स्रजं दिव्यां, लब्ध्वा जिनमपूजयत् ॥ १ ॥–अनु०

श्रीअणहिल्लवाटके पत्तने सत्यकः श्रेष्ठी । तस्य गुरवः श्रीहेमचन्द्राचार्याः । सत्यकस्य बालककामिर्यथार्थनामधेया डाहीति कन्याऽभूत् । अष्टवार्षिकी सा पञ्चासरश्रीपार्श्वनाथं पुरुषं नमस्कृत्वाऽभुङ्क्त । शुचिर्भक्तामरस्तवं त्रिसन्ध्यं ध्यायति स्म । श्रेष्ठिना कन्या भृगुकच्छे

१ '०श्वरनाथ०' इत्यपि पाठः । २ 'व्याप्ति' इति क–पाठः ।

दत्ता। क्रमेणोद्वाहो जातः। जन्ययात्रा भृगुपुरं प्रत्यच(व)लत्। सर्वे भद्रका देवाधिदेवप्रतिमां नानिन्युः समम्, जिनवन्दनां विना डाही नाभुङ्क्त। चिन्तापरा ऊचुः श्वशुरादयः–वत्से! प्सोहि, दुःखं कर्तुं न युक्तम्, (यतः) कन्याः शालिसधर्माणोऽन्यत्र आयन्तेऽन्यत्र वर्धन्ते। सा मौनमालम्ब्यास्थात्। उक्तं च—

"कलाकलापसम्पन्ना, जल्पन्ति समये परम्।
घनागमविपर्यासे, केकायन्ते न केकिनः॥ १॥"–अनु०

भक्तामरस्तवं गुणयति स्म। एषा पितृगृहविरहव्यथामुद्वहनीति खिन्नाः सर्वे निरशनाः, पन्थानं याता यामिनी जाता। स्थिता जन्ययात्रा। त्रयोदशचतुर्दशवृत्ते गुणयन्त्यास्तस्याश्चक्रेश्वरी पुरः प्रादुर्भूता भीतीसमये, उवाच च–भद्रे! प्साहि, तव किं न्यूनम्? अहमादिदेवसेवापरा चक्रा। डाही जगाद–मद्व्रतं पूरयेति। ततो देवी चन्द्ररोचिःशुचितरं विषघ्नं हारमदाद् दिव्याममम्लानां कुसुममालां गुरूणां पादुके च। एषा स्रक् मुनिसुव्रतकण्ठे स्थाप्या, नित्यं रत्नमालेव स्थाता। तस्मिन्नर्चिते वन्दिते श्रीपार्श्वोऽर्चितो वन्दित एव। जिनास्तुल्यगुणास्तुल्यफलदाः सर्वे। पादुकयोर्नतयोर्हेमाचार्यो नत एव। हारः स्वकण्ठाभरणीकरणीयः। विभाते मदर्पितहारमध्यमणिमध्यात् प्रादुर्भूतं प्रभूतमहिमानं श्रीपार्श्वबिम्बं सर्वसमक्षं नत्वा भोक्तव्य चेत्युक्त्वा चक्राऽदृश्याऽभूत्। प्रातः सर्वं श्वशुरादीनां मार्गेऽऽची(च)कथत् अदीदृशच्च अवसरज्ञा सा। उक्तं च—

"यत्र स्ववचनोत्कर्षो, भाषन्ते तत्र साधवः।
कलकण्ठः सदा मौनी, वसन्ते वदति स्फुटम्॥ १॥"–अनु०

पारणं कृतम्। तुष्टाः सर्वे विस्मिताश्च। क्रमाद् भृगुपुरं प्राप्ताः। तया श्रीसुव्रतकण्ठे स्रगारोपिता। माला तादृगेवातिष्ठत्। गुरुपादुके नित्यं ननाम। हारादनेकशो विषापहारः कृतः। सत्यककन्यायाः सर्वं सत्यं प्रभावं दृष्ट्वा श्वशुरपक्षो दृढधर्मो जातः। स्तवमहिमा प्रकाशितस्तया। चिरं सुखभोगभागभूत् डाही सुश्राविका॥

॥ इति सप्तमी कथा॥ ७॥

मे० वृ०–अथ गुणसम्पदं वर्णयन्नाह–(सम्पूर्णेत्यादि)।

हे त्रिजगदीश्वर!–हे त्रिभुवनस्वामिन्! तव गुणास्त्रिभुवनं लङ्घयन्ति इति सम्बन्धः। 'लङ्घयन्ति' इति क्रिया, अतिक्रामन्ति इत्यर्थः। के कर्तारः? 'गुणाः', स्वभावजा ज्ञानादयोऽपि विभावजा औदार्यादयो धर्माः। किं कर्मतापन्नम्? 'त्रिभुवनं' जगत्त्रयम्। किंवि० गुणाः? 'सम्पूर्णमण्डलशशाङ्ककलाकलापशुभ्राः' सम्पूर्णमण्डलः–पूर्णिमासमुद्गत शशाङ्कः–चन्द्रस्तस्य कला–अंशास्तेषां कलापः–समूहः

१ 'देवप्रतिमां' इति क-पाठः। २ भोजनं कुरु। ३ रात्रिसमये। ४ मुनिसुव्रतकण्ठे।

तद्वदुज्ज्वलाः। अत्र अन्योक्तिहेत्वलङ्कारयोः सङ्करेणाह्–ये एकं नाथं संश्रिताः इत्यन्वयः। 'संश्रिताः' इति क्रियापदम्। के कर्तारः? 'ये' जनाः। कं कर्मतापन्नम्? 'नाथं' स्वामिनम्। किंवि० नाथम्? 'एकं' अद्वितीय–असाधारणम्। यत्तदोर्नित्याभिसम्बन्धात् तान् जनान् को निवारयति? इत्यन्वयः। 'निवारयति' इति क्रियापदम्। कः कर्ता? 'कः' पुरुषः। कान् कर्मतापन्नान्? 'तान्'। किं कुर्वन्तस्तान्? 'यथेष्टं' यथेच्छया 'सञ्चरतः' प्रसरतः। तथाच समर्थस्वामिसेवकानां न कोऽपि कुत्रापि प्रतिरोधकः स्यादिति भवद्गुणानां स्वैरं प्रचारो युक्तः, सर्वोऽपि जनस्त्वद्गुणलिप्सुरिति भावः॥

समासाश्च–सम्पूर्णं मण्डलं यस्य स सम्पूर्णमण्डलः, स चासौ शशाङ्कश्च सम्पूर्णमण्डलशशाङ्कः, तस्य कलाः सम्पूर्णमण्डलशशाङ्ककलाः, तासां कलापः सम्पूर्णमण्डलशशाङ्ककलाकलापः, तद्वत् शुभ्राः सम्पूर्णमण्डलशशाङ्ककलाकलापशुभ्राः। त्रयाणां भुवनानां समाहारस्त्रिभुवनं, पात्रादित्वान्न ईप्। लङ्घयन्तीत्यत्र 'प्रायः सर्वे चुरादयः' इति न्यायात् ण्यन्तत्वम्। संश्रिता इत्यत्र श्रिञ्श्च(?)कितः नेट्। त्रयाणां जगतां समाहारस्त्रिजगत् द्विगुः, त्रिजगत ईश्वरस्त्रिजगदीश्वरस्तस्य सम्बोधने हे त्रिजगदीश्वर! । 'एकशब्दः सङ्ख्यान्यासहायाद्वितीये(यादि)षु वर्तते' इति बृहद्वृत्तिः। निवारयतीत्यत्र 'वृञ् निवारणे' धातुः स्वार्थे ण्यन्तः। सञ्चरत इत्यत्र तृतीयोपपदाभावान्नात्मनेपदम्। अत्र शशाङ्कशुभ्रा इत्यनुक्त्वा कलाकलापशुभ्रा इत्युक्तिः शशाङ्के श्यामलतासद्भावात् कलाकलापे तदसम्भवेनातिधवलत्वज्ञापनायेति। इष्टं अनतिक्रम्येति यथेष्टम्। 'यथाशब्दोऽसादृश्ये' इत्यव्ययीभावः। इति चतुर्दशवृत्तार्थः॥ १४॥

*He considers the extent of God's virtues*

Oh master of the three worlds! Thy virtues shining like the collection of the digits of the moon having a complete disc are not contained in the three worlds. Who can prevent from walking freely those that have chosen Thee as their sole master?—14.

✾ ✾ ✾ ✾

---

१ अन्योक्ति-लक्षणम्—

"सामान्यविशेषे कार्ये कारणे प्रस्तुते तदन्यस्य तुल्ये तुल्यस्य चोक्तिरन्योक्तिः"

—काव्या० (अ० ६).

२ हेतु-लक्षणम्—

"यत्रोत्पादयतः किञ्चिदर्थं कर्तुः प्रकाश्यते।
तद्योग्यतायुक्तिरसौ हेतुरुक्तो बुधैर्यथा॥"

—वाग्भटालङ्कारे (प० ४, श्लो० १०५)

३ सङ्कर-लक्षणम्—

"स्वातन्त्र्याङ्गत्वसंशयैकपद्यैरेषामेकत्र स्थितिः सङ्करः"

—काव्या० (अ० ६).

४ 'श्र्युकः किति' इति पाणिनीये (७।२।११)।

५ 'यथाऽसादृश्ये' इति सारस्वते (सू० ४७४)।

अथ भगवद्वीरागतामाह—

चित्रं किमत्र यदि ते त्रिदशाङ्गनाभि-
र्नीतं मनागपि मनो न विकारमार्गम् ।
कल्पान्तकालमरुता चलिताचलेन
किं मन्दराद्रिशिखरं चलितं कदाचित् ? ॥ १५ ॥

गु० वि०—हे सकलविकारनिकारपर ! यदि त्रिदशाङ्गनाभिः–नरस्त्रीभ्योऽधिकरूपलावण्यशृङ्गारादिभिरधिकमोहनचेष्टाभिर्देवीभिस्ते मनः–अन्तःकरणं मनागपि–अल्पमात्रमपि विकारमार्गं–कामोत्कोचपथं न नीतं–न प्रापितं अत्र–अस्मिन्नर्थे किं चित्रं–किमाश्चर्यम् ? । यतोऽन्यैरप्युक्तम्—

एको रागिषु राजते प्रियतमादेहार्धहारी हरो
नीरागेषु जिनो विमुक्तललनासङ्गो न यस्मात् परः ।
दुर्वारस्मरघस्मरोरगविषव्यासङ्गमूढो जनः
शेषः कामविडम्बितो न विषयान् भोक्तुं न मोक्तुं क्षमः ॥१॥"–शार्दूल०

अत्र दृष्टान्तः—कदाचित्–कस्मिंश्चित् क्षणे चलिताचलेन– कम्पितान्यपर्वतेन कल्पान्तकालमरुता–प्रलयसमयपवनेन मन्दराद्रिशिखर–मेरुशृङ्गं किं चलितं–स्वस्थानात् किं धूतम् ? यतो युगान्ते सर्वपर्वतानां क्षोभो भवति, न सुमेरोः । तथा देवीभिरिन्द्र-चन्द्र-गोपेन्द्र-रुद्रादयः क्षोभिताः, न जिनेन्द्रः । इति वृत्तार्थः ॥ १५ ॥

मन्त्रो यथा—

चउवीस तीर्थंकरतणी आण । पञ्चपरमेष्ठितणी आण । चउवीस तीर्थंकरतणइ तेजि पञ्चपरमेष्ठितणइ तेजि । ॐ अर्हं उत्पत्तये स्वाहा । शुचिश्चतुर्दिक्षु कायोत्सर्गेऽष्टोत्तरशतजापे कृते स्वप्ने शुभाशुभं लभते । धनधान्यऋद्धिमहामहिमप्रभृतयः स्मरणाद् भवन्ति । ॐ ह्रीं पूर्वं जिणाणं ओहिजिणाणं परमोहिजिणाणं अणंतोहिजिणाणं सामन्नकेवलीणं भवत्थकेवलीणं अभवत्थकेवलीणं नमः स्वाहा । [1]बन्धमोक्षिणी विद्या ।

प्रभावे कथा—

अचेष्टं नृपतिं गाढं, योगिनीदोषतो मुनिः ।
मन्त्र्यानीतो मल्लनामा, सज्जनं नीरुजं व्यधात् ॥ १ ॥–अनु०

श्रीअयोध्यायां पुरि यथार्थनामा सज्जनो राजा । अन्यदा राज्ञो दुष्टयोगिनीदोषो लग्नः । सर्वाङ्गव्यथयाऽचेष्टनोऽजनि नृपः । मन्त्रिसामन्तादिभिर्बहवो रुक्प्रतिक्रियाः कारिताः, (परन्तु) प्रतीकारः कोऽपि न जातः । ततो मन्त्रिणस्तत्रस्थं श्रीगुणसेनसूरिं व्यजि-

१ 'बन्धमोक्षे विद्या' इति क पाठः ।

ज्ञपन्-राजानं सज्जीकुरुध्वमिति। गुरुभिरुक्तम्—द्रक्ष्यामः किमपि। निशि भक्तामरस्तवमन्त्रं ध्यायतां तेषां पञ्चदशवृत्तगुणनक्षणे कयाचिद् देव्या मल्लर्षिपदोदकाभिषेकः सज्जनस्य सज्जताहेतुरुक्तः । प्रातर्मन्त्रिपुरो गुरव ऊचुः—गूर्जरदेशान्निशि नित्यकायोत्सर्गस्थास्नुं दुर्गोपसर्गजिष्णुं महामहिमानं मल्लनामानं मुनीन्द्रमानाययध्वं यथा राजदोषो याति। इति श्रुत्वा चेलुः प्रधानानि(?)। तत्र गत्वांऽह्री नत्वाऽत्यर्थमभ्यर्थ्य चक्रादिदेवताव्रातसेवितः समानीतो मल्लर्षिः। चरणोदकेन राजा गतदोषोऽभूत्। समन्तान्मुनिमाहात्म्यमुदजृम्भत्। उक्तं च—

"न व्योमयानं न हिरण्यसिद्धि-
र्न पादनीरेण गदोपशान्तिः ।
न काऽपि लब्धिर्न च काऽपि सिद्धिः
कोऽयं विशेषो व्रतिनां तपस्सु ? ॥ १ ॥"—उपजातिः

मल्लमुनिर्धर्ममुपादिशत्—

"यथा चतुर्भिः कनकं परीक्ष्यते
निघर्षणच्छेदनतापताडनैः ।
तथैव धर्मो विदुषा परीक्ष्यते
श्रुतेन शीलेन तपोदयागुणैः ॥ १ ॥"—उपेन्द्रवज्रा

सर्वथा जीवरक्षा कार्येति जैनानां मुष्टिः ।

"दीर्घमायुः परं रूप—मारोग्यं श्लाघनीयता ।
अहिंसायाः फलं सर्वं, किमन्यत् कामदैव सा ॥ १ ॥"

इत्याकर्ण्य जीवदयाधर्मं प्रपन्नः सज्जनः परमजैनोऽजनि राजा। सर्वेऽपि मन्त्रिणोऽर्हद्धर्मपरा अभूवन् ॥

॥ इत्यष्टमी कथा ॥ ८ ॥

मे० वृ०—अथ प्रथमतो रागस्य दुर्जयत्वात् तज्जयमाह–(चित्रं किमत्रेत्यादि)

हे वीतराग! चित्रं किमत्र यदि ते–तव मनस्त्रिदशाङ्गनाभिर्विकारमार्गं न नीतं इत्यन्वयः। 'नीतं' इति अशुद्धं क्रियापदम्। काभिः कर्त्रीभिः? 'त्रिदशाङ्गनाभिः' देववधूभिः। किं कर्म? 'मनः' चित्तम्। पुनः किं कर्म? 'विकारमार्गं' विषयरूपकुपथं, तद्वशं इत्यर्थः। द्विकर्मको 'णी प्रापणे' धातुः, तत्रापि मन इत्यत्र प्रथमा, 'न्यादीनां कर्मणो मुख्यस्योक्तत्वं प्रत्यया'दिति वचनात्। हे वीतराग! अत्र–अस्मिन् अर्थे किं चित्रं भवति? न किमप्याश्चर्यम्। 'भवति' इति क्रियापदम्। किं कर्तृ? 'चित्रम्'। कथम्? 'मनागपि' अल्पमपि। "उषा निशान्ते। अल्पे किञ्चिन्मनागीषच्च किञ्चन" इति

हैमकोषः (का० ६, श्लो० १७२)। अत्रार्थे सन्देहपूर्वकं दृष्टान्तालङ्कारेण[1] उपमां योजयति—कल्पान्तकालमरुता किं मन्दराद्रिशिखरं कदाचिच्चलितम्? अपितु न चलितमित्यन्वयः । 'चलितम्' इति क्रियापदम् । किं कर्तृ? 'मन्दराद्रिशिखरं' मन्दरनाम्नः पर्वतस्य शृङ्गम् । केन करणेन? 'कल्पान्तकालमरुता' युगान्तवायुना । करणे तृतीया, 'गत्यर्था०' (सा० सू० १२७१) इति सूत्रेण, 'गत्यर्थाकर्मकपिबभुजेः' इति हैम(अ० ५, पा० १, सू० ११)सूत्रेण चलधातोर्गत्यर्थत्वेन कर्तरि क्तप्रत्ययः प्राप्तः । कथंभूतेन कल्पान्तकालमरुता? 'चलिताचलेन' कम्पितान्यपर्वतेन । यथा कल्पान्तवातेन मेरुशिखरं कदाचिदपि—कस्मिन्नप्यवसरे न क्षोभमेति, तथा तवापि मनो देवीभिर्न योगमार्गात् क्षोभितमित्यर्थः ॥

समासो यथा—त्रिदशानां अङ्गनाः त्रिदशाङ्गनास्ताभिः । विकारस्य मार्गः विकारमार्गस्तम् । कल्पस्य अन्तः कल्पान्तः, स चासौ कालश्च कल्पान्तकालः, तस्य मरुत् कल्पान्तकालमरुत् तेन । चलिता अचला यस्मात् स चलिताचलस्तेन । मन्दरश्चासौ अद्रिश्च मन्दराद्रिः, तस्य शिखरं मन्दराद्रिशिखरम् । कस्मिन् काले कदा, सामान्ये चित्प्रत्ययः । अत्र मरुतेत्यत्र कर्तरि तृतीया, तथा चलिता अचला येनेति अन्तर्भूतण्यन्तविवक्षया तृतीयाबहुव्रीहिणा व्याख्या कौशल्यां[2] वर्तते । इति पञ्चदशकाव्यार्थः ॥ १५ ॥

*He describes God's complete mastery over passions.*

What is there to wonder at, if the celestial nymphs could not divert Thy mind towards the path of passions even in the least? Can the peak of the *Mandara (Meru)* mountain be ever moved by the wind blowing at the time of the destruction of the universe—the wind which shakes the other mountains? 15

✱ ✱ ✱ ✱

अथ भगवतो दीपेनोपमानिरासमाह—

निर्धूमवर्तिरपवर्जिततैलपूरः
　कृत्स्नं जगत्त्रयमिदं प्रकटीकरोषि ।
गम्यो न जातु मरुतां चलिताचलानां
　दीपोऽपरस्त्वमसि नाथ! जगत्प्रकाशः ॥ १६ ॥

---

१ दृष्टान्तालङ्कारस्य लक्षणम्—

"अन्वयस्थापनं यत्र, क्रियया स्वतदर्थयोः ।
दृष्टान्तं तमिति प्राहु-रलङ्कारं मनीषिणः ॥"
—वाग्भटा० (प० ४, श्लो० २)

२ कुशललाभान्तर्गतसूरिसूत्रितवृत्तावित्यर्थः, एष एव अभिप्रायः प्रागपि काव्यवृत्तावेतच्छब्दे ।

गु० वि०—हे त्रिभुवनभवनैकदीप! त्वं अपरः–अपूर्वो दीपः–कज्जलध्वजोऽसि–वर्तसे। यतो दीपो धूमवान् सवर्तिस्तैलेनोद्द्योतको गृहमात्रप्रकाशो वातेन विध्याता चैकस्थानस्थः स्यात्। त्वमपूर्वदीपः। किंभूतः? नितरां गते निर्गते धूमवर्ती यस्मादसौ निर्धूमवर्तिः। धूमो द्वेषः, वर्तिः कामदशाश्चेति। अपवर्जितः–त्यक्तस्तैलपूरो येन स तैलपूरः–स्नेहप्रकारः। अन्यच्च त्वं कृत्स्नं–सम्पूर्णं पञ्चास्तिकायात्मकं जगत्त्रयं–विश्वत्रयमिदं–प्रत्यक्षगतं प्रकटीकरोषि–केवलोद्द्योतेन प्रकाशयसि। (ग्रं० ५००) अन्यत् त्वं जातु–कदाचित् चलिताचलानां–धुतगिरीणां मरुतां–वातानां न गम्यो–न वशः। अथवा परीषहोपसर्गेषु चलिताचलानां–कम्पितपृथ्वीकानां मरुतां–देवानां न गम्यो–नाकलनीयः। जगत्प्रकाशो–जगद्विश्रुतः। अथवा जगच्चरिष्णुः–सर्वत्र प्रसारी प्रकाशो–ज्ञानालोको यस्य सः, अत एवापरः–अन्यो दीपस्त्वम्। इति वृत्तार्थः॥ १६॥

अत्र मन्त्रः—

ॐ ह्रीं पूर्वकं वीयबुद्धीणं कुट्ठबुद्धीणं सम्भिन्नसोआणं अक्खीणमहाणसीणं सव्वलद्धीणं नमः स्वाहा। श्रीसम्पादिनी विद्याऽत्र वृत्ते ज्ञेया॥

मे० वृ०—अथ रागपराजयं उक्त्वा द्वेषपराजयमाह (–निर्धूमेत्यादि)

हे नाथ! त्वं अपरः दीपः असि इति अन्वयः। 'असि' इति क्रियापदम्। कः कर्ता? 'त्वम्'। किंविशिष्टस्त्वम्? 'दीपः'। किंविशिष्टो दीपः? 'अपरः' अपूर्वः–अन्यदीपेभ्यो विसदृशधर्मा। कथमित्याह–किंवि० त्वम्? 'निर्धूमवर्तिः' धूमः–कार्ये कारणोपचाराद् धूमहेतुः अग्निः, स च बाह्यो वह्निः, आन्तरः क्रोधः, अग्निर्माणवक इति प्रतीतेः, क्रोधितस्य मुखेऽपि श्यामलिकादेर्दर्शनाच्च, अत एव तेजोलेश्यावता मुखाद् धूमनिर्गमोऽप्यागमे गीयते, वर्तयः–कामदशा दश कामशास्त्रप्रसिद्धाः—

अभिलाष १ श्चिन्ता २ स्मरणे ३ गुणकीर्तनं ४ तथोद्वेगः ५।
प्रलपन ६ मुन्मादो ७ रुग् ८ जडता ९ मृत्यु १० स्मरदशा १० स्ताः॥ १॥

तद्रहितः। पुनः किंवि० त्वम्? 'अपवर्जिततैलपूरः' तैलं चात्र स्नेहः, "तैलं स्नेहोऽभ्यञ्जनं च" (का० ३, श्लो० ८१) इति हेमसूरयः, स्नेहश्चात्राध्यात्मिकः पितृमातृभ्रात्रादिषु सांसारिकोऽनुरागस्तस्य पूरः–समूहस्तद्रहितः। पुनर्हे नाथ! त्वं कृत्स्नं जगत्त्रयं इदं प्रकटीकरोषि इत्यन्वयः। 'प्रकटीकरोषि' इति क्रियापदम्। प्रकाशयसीत्यर्थः। कः कर्ता? 'त्वम्'। किं कार्यम्? 'जगत्त्रयं' त्रिभुवनं–ऊर्ध्वाधस्तिर्यग्लोकलक्षणम्। किं० जगत्त्रयम्? 'कृत्स्नं' सकलम्। पुन. किं० जगत्त्रयम्? 'इदं' प्रत्यक्षम्। तथा पुनर्हे नाथ! त्वं जातु–कदाचित् मरुतां न गम्योऽसि। 'असि' इति क्रियापदम्। कः कर्ता? 'त्वम्'। किंविशिष्टस्त्वम्? 'गम्यो न' न आक्रमणीयः–पराभवनीयः। केषाम्? 'मरुतां' दुष्टोपसर्गकारिदेवानाम्। किं० मरुताम्? 'चलिताचलानां' कम्पितगिरीणां, बलवतामित्याशयः। लोकप्रसिद्धो

१ 'पूर्वं' इति क–पाठः। २ 'वाणं' इति ख–पाठः।

हि दीपो धूमवर्तियुक्तः, तैलपूरसहितः, किञ्चित्स्थानभागस्य प्रकाशकः, अन्यच्च मरुतां-वातानां गम्यो-विनाश्यः स्यात्; त्वं तु एतादृशो नासि, तथापि "[1]लोगपईवाणम्" (शक्रस्तवे) इत्यागमिकैः स्तूयसे। पुनः किं० त्वम्? 'जगत्प्रकाशः' भुवनावभासी॥

समासा यथा—धूमश्च वर्तिश्च धूमवर्ती, धूमवर्तिभ्यां निर्गतः निर्धूमवर्तिस्तत्पुरुषः, 'प्रात्यव०' इति (अ० ३, पा० १, सू० ४७) सिद्धहैमसूत्रात् समासः, तैलस्य पूरस्तैलपूरः, अपवर्जितस्तैलपूरो येन सः अपवर्जिततैलपूरः। जगतां त्रयं जगत्त्रयम्। अप्रकटं प्रकटं करोषि प्रकटीकरोषि, अभूततद्भावे च्विप्रत्ययः। गन्तुमर्हो गम्यः। चलिता अचला यैन ते चलिताचलास्तेषाम्। जगत्सु प्रकाशो यस्य स जगत्प्रकाशः। अत्र केषाञ्चिन्नेत्रोपनेत्रादीनां वस्तुप्रकटताकारित्वेऽपि न तादृक् प्रकाशकत्वं भावतोऽपि श्रुतज्ञानिनां जगत्प्रकटताकारित्वेऽपि न केवलप्रकाशवत्त्वम्, भगवति तु जगत्प्राकट्यहेतुत्वं केवलज्ञानित्वेन जगत्प्रकाशकत्वमित्युभयमस्तीति न पुनरुक्तिः, यद्वा स्तुतौ तस्या न दोष इति बोध्यम्॥ इति षोडशकाव्यार्थः॥ १६॥

*He hereby illustrates that God cannot be described in the light of the usual standards of comparison.*

Oh Lord! Thou art the supernatural lamp, the light of the world—the lamp which is free from smoke (of aversion), wherein there is no wick (of lust), which does not require to be filled up with oil (of attachment), which completely illumines the three worlds (in virtue of omniscience) and which is unassailable by the winds (or gods) that move the mountains. (16)

* * * *

अथ सूर्येणौपम्यनिरासायाह—

नास्तं कदाचिदुपयासि न राहुगम्यः
स्पष्टीकरोषि सहसा युगपज्जगन्ति।
नाम्भोधरोदरनिरुद्धमहाप्रभावः
सूर्यातिशायिमहिमाऽसि मुनीन्द्र! लोके॥ १७॥

गु० वि०—हे मुनीन्द्र!-मुमुक्षुप्रभो! लोके-भुवने त्वं सूर्यातिशायिमहिमा असि-वर्तसे। सूर्यादतिशायी-सविशेषः-अपूर्वो महिमा-माहात्म्यं यस्य सः। यतो रविरस्तं प्रयाति राहुणा परिभूयते लक्षमात्रं विश्वं प्रकाशयति मेघच्छन्नो निस्तेजाश्च स्यात्। त्वं तु अपूर्वः पूषा कदाचिद् रजन्यादौ नास्तमुपयासि-क्षयं न गच्छसि, केवली नक्तंदिवं-सदाऽऽलोकः, न राहुगम्यः-न सैंहिकेयग्रसनीयः। अथ राहुशब्देन कृष्णवर्णत्वाद् दुष्कृतं न

[1] लोकप्रदीपेभ्यः।

तद्व्यासः। सहसा–झटिति–शीघ्रं युगपत्–समकालं जगन्ति–भुवनानि स्पष्टीकरोषि–प्रकटयसि। ननु केवलिनः प्रथम(?)समये सामान्योपयोगलक्षणं दर्शनं द्वितीय(?)समये विशेषोपयोगरूपं ज्ञानं, तत् कथं युगपद्ग्रहणम्? उच्यते—द्विसमययोरतिसूक्ष्मत्वात् निरन्तरप्रभवत्वात् केवलिगम्यत्वाद् युगपद्ग्रहणं न्याय्यमिति। अथ "जुगवं दो नत्थि उवओगा"[1]। तत्र भगवत एकस्मिन् समये दर्शनमन्यस्मिन् ज्ञानं, तत् कथम्? सत्यम्। तद् द्वयं वचनक्षणे एकीभावोपगतमिति युगपद्ग्रहणम्। न अम्भोधरोदरेण–घनगर्भेण निरुद्धः–छन्नो महाप्रभावो–गुरुप्रतापो यस्य सः। अत्राम्भोधरशब्देन मतिश्रुतावधिमनःपर्ययकेवलानामावरणानि गृह्यन्ते। पञ्चभिरेतैरावरणैर्न तिरोहितज्ञानोद्द्योतः, अत एव सहस्रकिरणादधिकमाहात्म्योऽसि॥ इति वृत्तार्थः॥

अत्र[2] मन्त्रः—

ॐ ह्रीं उग्र(ग्ग?)तवचरणचारीणं ॐ ह्रीं दित्ततवाणं ॐ ह्रीं तत्ततवाणं ॐ ह्रीं पडिमापडिवन्नाणं नमः स्वाहा॥ परविद्योच्छेदिनी विद्या॥

कथा यथा—

चैक्रा[3] बहुदेवीयुग्, नरके गुरुभूपजौ।
नीत्वा तां पुनरानीय, कृतो धर्मोद्यतः सुतः॥ १॥

सङ्करपुरे निर्जितानेकानेकपसङ्करो[4] निःस्वताधीनदीनजनधनसङ्करः[5] सत्यसङ्करः[6] सङ्करो राजा परमार्हतः। तस्य गुरवो धर्मदेवाचार्याः। अन्यदा राज्ञो गृहे पुत्रजन्म। स नाम्ना क्रियया च केलिप्रियः यौवनस्थः सकलाः कला जग्राह। धर्मं नाकरोत्। व्यसनी भक्ष्याभक्ष्यपेयापेयगम्यागम्यसममतिः। राजा पुत्रं प्रबोधयतेति गुरूनगदत्। गुरवः केलिप्रियमुपादिक्षन्—भो कुमार!

"ब्रह्महत्या सुरापानं, स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहु—रेभिश्च सह सङ्गमः॥ १॥–अनुष्टुप्

यदि सत्सङ्गनिरतो, भविष्यसि भविष्यसि।
तदा[7] सज्जनगोष्ठीषु, पतिष्यसि पतिष्यसि॥ २॥–अनुष्टुप्

यः प्राप्य दुष्प्रापमिदं नरत्वं
धर्मं न यत्नेन करोति मूढः।
क्लेशप्रबन्धेन स लब्धमब्धौ
चिन्तामणिं पातयति प्रमादात्॥ ३॥"–इन्द्रवज्रा

---

१ युगपद् द्वौ न स्त उपयोगौ। २ 'अत्र वृत्ते' इति क–पाठः। ३ छन्दःशास्त्रप्रवीणैरिदं चरणं विचारणीयम्। ४ सङ्ग्रामः। ५ धनदः। ६ प्रतिज्ञः। ७ 'अथ सज्जन' इति क–पाठः।

आगमे (स्थानाङ्गे ४,४) अपि—

महारम्भयाए महापरिग्गहयाए कुणिमाहारेणं पंचंदियवहेणं जीवा निरयाउअं कम्मं पगरंति ॥

इत्यादिष्टोऽप्यभापिष्ट स निकृष्टः—नास्ति धर्मः तत्साधकजीवाभावात्, घनाघनाभावे गिरिसरित्पूराभाववत्। पञ्चमहद्(हा)भूतोत्पन्नां चेतनां मुक्त्वाऽन्यः कोऽपि देहे नास्त्यात्मा। तदभावान्नरकाद्यभावः, ग्रामाभावे सीमाभाववत्। वाचाटश्चार्वाकोऽयं पठितग्रन्थो दुर्बोध इत्यचिन्ति गुरुभिः।

"विद्ययैव मदो येषां, कार्पण्यं विभवेष्वहो।
तेषां दैवाभिभूतानां, सलिलादग्निरुत्थितः ॥ १ ॥"

ऊचुस्ते पुनस्तम्—

"धर्माद् धनं सुखं भोगा, आरोग्यं राज्यसम्पदः।
अधर्माद् दुःस्थता दुःखं, दास्यदुःकीर्तयो रुजः ॥ १ ॥"

इत्यादि धर्मवाक्यवार्यभिन्नमध्यं मुद्गशैलवत् तं मत्वा जोषमवकलयन् श्रीधर्मदेवसूरयः।

उक्तं च—

"वचस्तत्र प्रयोक्तव्यं, यत्रोक्तं लभते फलम्।
स्थायीभवति चात्यन्तं, रागः शुक्लपटे यथा ॥ १ ॥"

पुनरेकदा क्षणदायां राजपुत्रप्रबोधोपायं चिन्तयन्तो गुरवः स्तवषोडशसप्तदशवृत्ताम्नायगुणनक्षणे नरकदर्शनात् केलिप्रियप्रबोधो भावीति चक्रयोक्ताः सूरयोऽवदन्-तथा कुरु यथाऽस्मद्युतो नरकं पश्यति राजसूः। ततो बहुदेवीसहितया तया गुरुराजपुत्रौ नीतावधोमेदिनीम्। तत्र वक्तुमशक्या बहुविधाः शीतातपादिवेदनाः क्षेत्रजसहजा दृष्टाः। छेदन-भेदन-ताडन-त्रपुपाना-ऽग्निपुत्तलिकालिङ्गना-ऽङ्गव्यथनादीनि कृच्छ्राणि पूर्वभवपातकं स्मारंस्मारं कुर्वतां परमाधार्मिकाणां पुरः पटुबटुशतानि वितन्वन्तस्तथापि चौरा इवं कदर्थ्यमाना नैरयिकाश्च। ततो भीतो नृपसुतः पातकफलदर्शनात् प्रापितः कम्पमानः स्वपुरं गुरुयुतोः देव्या। गुरुभिर्भणितश्च—भद्र! दृष्टं पापफलं न वा?। केलिप्रियेणोक्तम्—भगवन्! बाढं दृष्टम्। कौरकुम्भवद् भिन्नं नृपसूनुहृदयं धर्मतत्त्वाम्भसा, गुरूणां पदमूले सम्यक्त्वमूलश्रावकव्रतान्यङ्गीचकार। पापेभ्योऽबिभ्यदतिदुष्टव्याघ्रदर्शनादज इव चिरं धर्मं पालयामास राज्यसुखं चेति।

॥ इति नवमी कथा ॥ ९ ॥

---

१ महारम्भेण महापरिग्रहेण मांसाहारेण पञ्चेन्द्रियवधेन जीवा नरकायुष्कं कर्म प्रकुर्वन्ति।

२ '०यं कम्मं' इति क-पाठ.। ३ 'वाल्' इति क-पाठः। ४ तूष्णीम्। ५ 'बहु' इति क-पाठः।

मे० वृ०—अथ जगत्प्रकाशकत्वमेव सूर्योपमाया निरासेन प्रकटयन्नाह(—नास्तमित्यादि)

हे मुनीन्द्र!—ऋषीणां स्वामिन्! लोके त्वं सूर्यातिशायिमहिमाऽसि इत्यन्वयः। 'असि' इति क्रियापदम्। कः कर्ता? 'त्वम्'। अकर्मको धातुः। किंवि० त्वम्? 'सूर्यातिशायिमहिमा' आदित्यादधिकमाहात्म्यधरः। तत् कथमित्याह—हे मुनीन्द्र! यद्—यस्मात् कारणात् त्वं कदाचित् न अस्तं उपयासि—प्राप्नोषि। 'उपयासि' इति क्रियापदम्। कः कर्ता? त्वम्। किं कर्म? 'अस्तं' मरणम्। "दिष्टान्तोऽस्तं कालधर्मः" (अभि० का० २, श्लो०२३८) इति हैमपादाः। कथम्? 'कदाचित्' कस्मिंश्चिदपि समये, सिद्धत्वेन जरामरणरहितत्वात्। पुनः कथमित्याह—हे मुनीन्द्र! त्वं सहसा युगपत् जगन्ति स्पष्टीकरोषि इति संबन्धः। 'स्पष्टीकरोषि' इति क्रियापदम्। प्रकटानि कुरुषे इत्यर्थः। कः कर्ता? त्वम्। कानि कर्माणि? 'जगन्ति' सर्वभुवनानि। किंवि० त्वम्? 'न राहुगम्यः' राहुरत्र लक्षणया तमः—पापं ग्राह्यं, तस्य जातावेकवचनं, तेन न गम्यः—आक्रमणीयो नैव। पुनः किंवि० त्वम्? 'अम्भोधरोदरनिरुद्धमहाप्रभावः' अम्भोधरा अत्र स्नेहधारिणः स्वजनास्तेषां उदरे—मध्येऽपि निरुद्धो—व्यपगतः प्रभावः—तेजःस्वरूपं यस्य स ईदृशो नैव, संसारमध्ये वसन्नपि न कर्मलिप्तः, "पुरिसवरपुंडरीयाणम्"[1] इति (शक्रस्तव)वचनात् इति भावः। सूर्यस्तु सदैव अस्तं याति, राहुगम्यो भवति, क्रमेण जगदेकदेशं प्रकाशयति, अम्भोधरोदरनिरुद्धमहाप्रभावः—मेघपटलव्यालुप्तप्रकाशो भवति, हे मुनीन्द्र! त्वं तु ततोऽन्यस्वरूप इत्यतः सूर्यादधिक इत्यर्थः॥

समासाश्चात्र—अस्तमित्यव्ययं नाशार्थे। राहोर्गम्यो राहुगम्यः। अस्पष्टानि स्पष्टानि करोषि स्पष्टीकरोषि, केवलज्ञानेन सर्वलोकालोकप्रकाशकत्वात्। सहसा शीघ्रार्थे, युगपत् समकालार्थेऽव्ययम्। अम्भो धरन्तीति अम्भोधराः, तेषा उदरं अम्भोधरोदर, तत्र तेन वा निरुद्धः अम्भोधरोदरनिरुद्धः, महांश्चासौ प्रभावश्च महाप्रभावः, अम्भोधरोदरनिरुद्धः महाप्रभावो यस्य स तथा। सूर्यं अतिशेते इत्येवंशीलः सूर्यातिशायी, सूर्यातिशायी महिमा यस्य स तथा, समासान्तविधेरनित्यत्वात् नात्र समासान्तः। मुनीनां इन्द्र इव इन्द्रः मुनीन्द्रः, तत्सम्बोधनं हे मुनीन्द्र! ॥ इति सप्तदशकाव्यार्थः॥ १७॥

Oh Lord of the ascetics! in this world Thou surpassest the Sun in greatness For, neither dost Thou ever set, nor art Thou accessible to *Rāhu*, (moreover) all of a sudden Thou illuminest all the worlds simultaneously and Thy immense prowess is not obstructed by the intervention of the clouds. (17)



---

१ पुरुषवरपुण्डरीकेभ्यः।

अथ विशेषादिन्दूपमां निरस्यन्नाह—

नित्योदयं दलितमोहमहान्धकारं
गम्यं न राहुवदनस्य न वारिदानाम् ।
विभ्राजते तव मुखाब्जमनल्पकान्ति
विद्योतयज्जगदपूर्वशशाङ्कबिम्बम् ॥ १८ ॥

गु०वि०—हे देववृन्दवन्द्य ! तव मुखाब्जं—वदनकमलं अपूर्वं शशाङ्कबिम्बं—नवेन्दुमण्डलं विभ्राजते—भाति । किंभूतम् ? नित्योदयं—शाश्वतशोभोल्लासम् । चन्द्रबिम्बं तु प्रातरस्तमेति । दलितं—ध्वस्तं मोहः—अज्ञानं—मोहनीयं कर्मैव महान्धकारं येन तत् । त्वन्मुखं मोहमहातमो हन्ति । चन्द्रबिम्बं त्वल्पान्धतमसनिरासे न क्षमम् । राहुवदनस्य न गम्यं—राहुसम-दुर्वादिवादस्यागोचरः । वारिदानां च न गम्यं—मेघसमदुष्टाष्टकर्मणां न वशं, तानि जिन-मुखेक्षणात् क्षयं यान्ति । चन्द्रबिम्बं राहोर्मेघानां च गम्यं स्यात् । पुनः किंभूतम् ? अन-ल्पकान्ति—गुरुतरद्युति । चन्द्रबिम्बं चाल्पप्रभं, कृष्णपक्षे क्षीणतेजस्त्वात् । मुखं जगद्-विश्वं विद्योतयत्—प्रकाशयत् । शशिबिम्बं भूखण्डप्रकाशेऽप्यसमर्थम् । अथ नित्यं—सदा उत्—उल्लसत् अयः—शुभं भाग्यं यस्य तन्नित्योदयं, सदोल्लसच्छुभभागधेयमित्यर्थः । अत-श्चन्द्रमण्डलादत्यद्भुतं भवन्मुखम् ॥ इति वृत्तार्थः ॥ १८ ॥

अत्र मन्त्रः—

ॐ ह्रीं जङ्घाचरणाणं ॐ ह्रीं विज्झाचरणाणं ॐ ह्रीं वेउव्वियइड्ढिपत्ताणं ॐ ह्रीं आगास-गामीणं नमः स्वाहा ॥ दोषनिर्नाशिनी विद्या ॥

प्रभावे कथा—

आम्बडो मन्त्रिराड् ध्यायन्, लेभे चन्द्राश्मनिर्मितम् ।
बिम्बं विषहरं नाग—वल्लीपत्राणि चान्वहम् ॥ १ ॥

श्रीअणहिल्लपुरे श्रीश्रीमालकुलतिलकः श्रीउदयनपुत्रः श्रीआम्बडः श्रीकुमारपाल-देवेन राज्ञा लाटदेशाधिपतिः कृतः । स भक्तामरस्तवं जपति स्माहर्निशम् । एकदा भृगु-कच्छात् पल्लीवनं सिषाधयिषुर्निरसरत् । महान्धकारे गिरिकान्तारे निशि स्तवस्याष्टा-दशं वृत्तं स्मरंश्चक्रयोक्तः—वत्स ! शुचितया स्तवस्मरणैकतानतया चाहं तुष्टाऽस्मि । विषघ्नं विघ्नहरं चन्द्रकान्तमयं चान्द्रप्रभं बिम्बं गृहाण, वरं च वृणीष्वेति । आम्बडो दण्डेशो निःस्पृहोऽपि सदाऽभीष्टनागवल्लीदलानि याचितवान् । नमस्कृता देवी प्रतिश्रु-त्यान्तर्दधे । बिम्बमपूजयन्नित्यं पल्लीवनमसाधयत् । क्रमेण राजादेशाद् राजपितामहं मल्लि-कार्जुनं नृपं छलेन हत्वा शृङ्गारकोटिशाटिका १ गरलहरसिप्रा २ श्वेतो हस्ती ३ पात्रा-

णामष्टशतं ४ द्वात्रिंशन्मूटका मौक्तिकानां ५ घटीशतमितः कनककलशः ६ अग्निधौतोत्तरपटः ७ मल्लिकार्जुनशिरः ८ चेत्यष्टौ वस्तूनि श्रीकुमारपालभूपालायाढौकयत् । शूरो वीरो राजपितामहबिरुदभाग् विषदोषमुक्तोऽभूत् । जननीपादौ नमोऽकरोत् । माता नाऽरज्यत । पृष्टे कारणे सोवाच–किं भृगुकच्छे शकुनिकादिविहारोद्धारं कृत्वा समेतोऽसि येनाहं तुष्यामि?, राजहत्ययोत्सेकवान् भवान् । स कृतनिश्चयः श्रीहेमचन्द्रसूरिसान्निध्यादुद्धारं चकार । प्रतिष्ठाक्षणे तस्य दानोत्कर्षं दृष्ट्वा गृहिस्तुतिविमुखश्रीहेमसूरिभिर्वर्णना चक्रे—

"किं कृतेन न यत्र त्वं, यत्र त्वं किमसौ कलिः ।
कलौ चेद् भवतो जन्म, कलिरस्तु कृतेन किम् ॥ १ ॥"

माता नितान्तमरज्यत । दुर्लभताम्बूलिकेऽपि देशे ताम्बूलं बुभुजे । सर्वदा सर्वदो भोगभागी जातः श्रीआम्बडदण्डाधिपतिः ।

॥ इति दशमी कथा ॥ १० ॥

**मे० वृ०**—अथ चन्द्रादपि भगवतोऽतिशयमाह(–नित्योदयमित्यादि)

हे मुनीन्द्र[1] तव मुखाब्जं अपूर्वशशाङ्कबिम्बं विभ्राजते इत्यन्वयः । 'विभ्राजते' शोभते इति क्रियापदम् । किं कर्तृ ? 'मुखाब्जं' वदनकमलम् । कस्य ? 'तव' भवतः । किंविशिष्टम् ? 'नित्योदयं' अहर्निशं सश्रीकम्, यद्वा उत्–प्राबल्येन अय.–शुभभाग्यं तद्युक्तम् । पुनः किंवि० ? 'दलितमोहमहान्धकारं' निरस्तं अज्ञानरूपं तिमिर (येन तत्) । पुनः किं० ? 'राहुवदनस्य' राहुशब्देन अत्र कालः, अथ(वा) दुर्वादिवादः तस्य मुखस्य न आक्रमणीयं, कर्तरि षष्ठी, तथा 'वारिदाना न गम्यं,' वारिदाश्चात्र कामस्नेहदृष्टिरागाख्ययोऽपि ग्राह्याः, तेषामपि परवशो नैव । पुनः किं० ? 'अनल्पकान्ति' प्रबलप्रकाशम् । तथा मुखाब्जं किं कुर्वत् ? 'जगत् विद्योतयत्' (विश्वं) प्रकाशयत् । अत एव पुनः किं०वि० ? 'अपूर्वशशाङ्कबिम्बं' लोके दृश्यमानचन्द्रबिम्बादन्यस्वरूप चन्द्रबिम्बं, तत्तुल्यमित्यर्थः, दृश्यमानं हि चन्द्रबिम्बं नित्योदयं न, नापि मोहतिमिरपराकरणसमर्थ, तथा राहुवदनं(नस्य)पराभवनीयं, लोकैकदेशप्रकाशकं चेति युक्त अपूर्वत्वम् ॥

**समासा यथा**—नित्यं उदयो यस्य स तत् नित्योदयं, 'नेर्ध्रुवे' इत्यनेन त्यप्रत्ययः सिद्धहैमे (अ० ६, पा० ३, सू० १७) । महांश्चासौ अन्धकारश्च महान्धकारः, मोह एव महान्धकारः मोहमहान्धकारः, दलितो मोहमहान्धकारो येन तद् दलितमोहमहान्धकारम् । राहोर्वदनं राहुवदनं, तस्य राहुवदनस्य । वारि ददत इति वारिदास्तेषाम् । मुखमेव अब्जं मुखाब्जम् । न अल्पा अनल्पा, (अनल्पा) कान्तिर्यस्य तत् । न पूर्वं अपूर्वं, शशाङ्कस्य बिम्बं शशाङ्कबिम्बं, अपूर्वं च तत् शशाङ्कबिम्बं च अपूर्वशशाङ्कबिम्बम् ॥ इति अष्टादशकाव्यार्थः ॥ १८ ॥

1 सत्ययुगेन ।

Thy lotus-like face shines like the disc of an extraordinary Moon, for, it has a perpetual rise ( as it never sets ), has destroyed the pitchy darkness of infatuation, is never within the reach of *Rāhu* or clouds, possesses immense lustre and illuminates the world. ( 18 )

* * * *

किञ्च—

किं शर्वरीषु शशिनाऽह्नि विवस्वता वा ?
युष्मन्मुखेन्दुदलितेषु तमस्सु नाथ ! ।
निष्पन्नशालिवनशालिनि जीवलोके
कार्यं कियज्जलधरैर्जलभारनम्रैः ? ॥ १९ ॥

गु०वि०–हे नाथ ! शर्वरीषु–रजनीषु शशिना–चन्द्रेण किम् ? । अह्नि–दिवसे विवस्वता–सूर्येण वा किं कार्यं भवति ? तमस्सु–अन्धकारेषु युष्मन्मुखेन्दुदलितेषु–भवद्वदनचन्द्रविनाशितेषु सत्सु । अथ(वा) तमस्सु–पातकेषु । अत्र दृष्टान्तः—जीवलोके–भूपीठे निष्पन्नशालिवनशालिनि सति जलभारनम्रैः–सलिलभरनतैर्जलधरैः–घनैः कियत् कार्यं स्यात् ? । न किमपीत्यर्थः । निष्पन्नैः–पाकं प्राप्तैः शालिवनैः–कलमादिकेदारैः शालते–शोभत इत्येवंशीलः तस्मिन् निष्पन्नशालिवनशालिनि । यथा तृणवल्लीधान्यादिषूत्पन्नेषु मेघाः केवलक्लेशकर्दमशीतहेतुत्वात् निष्फला एव, तथा त्वन्मुखेन्दौ ध्वस्तदुरिततिमिरे शैत्यसन्तापपीडाकारित्वाच्चन्द्रसूर्याभ्यां न कोऽप्यर्थः सिद्धः । यत आगमेऽपि चोक्तम्[1]—

"चंदाइच्चगहाणं, पहा पयासेइ परिमियं खित्तं ।
केवलियं पुण नाणं, लोयालोयं पयासेइ ॥ १ ॥"[2]–आर्या

इति वृत्तार्थः ॥ १९ ॥

अत्र मन्त्रः—

ॐ ह्रीं पूर्वं मणपज्जवनाणीणं सीयलेसाणं तेउलेसाणं आसीविसभावणाणं दिट्ठीविसभावणाणं चारणभावणाणं महासुमिणभावणाणं तेयग्गिनिसग्गाणं नमः स्वाहा ॥ अशिवोपशमनी विद्या ॥

---

१ आवश्यकनिर्युक्तौ लोगस्साधिकारे ।
२ छाया—
चन्द्रादित्यग्रहाणां प्रभा प्रकाशयति परिमितं क्षेत्रम् ।
कैवलिकं पुनर्ज्ञानं लोकालोकं प्रकाशयति ॥
३ 'केवलियमाणलंभो, लोया०' इति क–पाठः ।

कथा यथा—

रामचन्द्रोपदेशेन, लक्ष्मणः संस्मरन् स्तवम् ।
निशायां शशिनं पश्यं–स्तुष्टाऽभूच्चक्रवाहिनी ॥ १ ॥–अनु०

श्रीविशालायां विशालायां पुरि लक्ष्मणो नाम वणिगासीत् । स श्रीरामचन्द्रसूरिगुरुमुखाद् भक्तामरस्तवं साम्नायमपाठीत्, अजपच्च । शुचेरेकचित्तस्य दिनान्तस्त्रिः परिवर्तयतस्तस्याग्रे एकोनविंशवृत्तजापावसरे निशि चक्राऽऽविरभूत् । चन्द्रमण्डलं ददर्श । तुष्टा देवी प्राह स्म–यत्र महान्धकारे स्तवं स्मर्ताऽसि तत्र त्वं चन्द्रं द्रक्ष्यसि । वाञ्छितासिर्भवित्रीत्युक्त्वा तिरोहिता चक्रेश्वरी ( ग्रं० ६०० ) ॥

एकदा मालवेशो राजा महीधरनामा सीमालजयनाय गतः कान्तारं प्रविष्टः । तत्र प्रदेशे महान्धकारं दृष्ट्वा सैन्यस्य यामिनीगमने दुरवस्थां विचिन्त्य प्रभावनाचिकीः सहागतो लक्ष्मणो भूपं न्यगदत्–देव! सम्पूर्ण चन्द्रं[१] दर्शयामि, दिनसमां यामिनीं कारयामि सैनिकानाम् । राज्ञोक्तम्–कुरु, दत्स्व जलं मह्यं, तत्र वाञ्छितमहं दातेति श्रुत्वा स्तवं स्मृत्वा प्रकटितश्चन्द्रः । प्रातर्गतमचिन्तितं वैरिराजपुरं बलम् । बद्धो रिपुः । राज्ञा पुरमात्मसात्कृतम् । लक्ष्मणः सकललक्ष्मीपतीकृतश्च । स स्तवमहिमानमवादीत् । गुरुपार्श्वे लक्ष्मणो राजानं धर्ममश्रावयत्—

"जैनो धर्मः प्रकटविभवः सङ्गतिः साधुलोके
विद्वद्गोष्ठी वचनपटुता कौशलं सत्कलासु ।
साध्वी लक्ष्मीश्चरणकमलोपासना[२] सद्गुरूणां
शुद्धं शीलं मतिरमलिना प्राप्यते नाल्पपुण्यैः ॥ १ ॥"–मन्दाक्रान्ता[३]

देवगुरुधर्मरूपं रत्नत्रयं श्रुत्वा जिनधर्मभागभूत् महीधरमहीशः । लक्ष्मणो लक्ष्मीवान् सर्वार्चनीयोऽभूत् । उक्तं च—

"महिमानं महीयांसं, सङ्गः सूते महात्मनाम् ।
मन्दाकिनीमृदो वन्द्या–स्त्रिवेदीवेदिनामपि ॥ १ ॥"–अनु०

॥ इत्येकादशी कथा ॥ ११ ॥

---

१ 'पूर्णचन्द्रं' इति ख–पाठः ।　२ 'पासनं' इति ख–पाठः ।

३ मन्दाक्रान्ता–लक्षणम्—
"मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ।"

**मे० वृ०**—अथ भगवद्दर्शने जगति तन्मयत्वं पश्यन्नित्याह–( किं शर्वरीत्यादि )।

हे नाथ ! शर्वरीषु शशिना किं कार्यं भवति ? अथवा अह्नि विवस्वता–सूर्येण किं कार्यं भवति ? इति वाक्यद्वयम् । 'भवति' इति क्रियापदम । किं कर्तृ ? 'कार्यम्' । केन ? 'शशिना' चन्द्रेण । कासु ? 'शर्वरीषु' रात्रिषु । 'वा' अथवा । केन ? 'विवस्वता' सूर्येण । कस्मिन् ? 'अह्नि' दिवसे । उभाभ्यामपि न किञ्चित् कार्यमिति भावः । केषु सत्सु ? 'तमस्सु युष्मन्मुखेन्दुदलितेषु' सत्सु, तमस्सु–अन्धकारेषु युष्माकं वदनचन्द्रेण पराकृतेषु सत्सु । अत्र दृष्टान्तमाह—हे नाथ ! जलधरैः कियत् कार्यं भवति इत्यन्वयः । 'भवति' इति क्रियापदम् । किं कर्तृ ? 'कार्यम्' । किंविशिष्टं कार्यम् ? 'कियत्' किंपरिमाणम, स्तोकमपि कार्यं नैवेत्यर्थः । कैः करणैः ? 'जलधरैः' । किंवि० जलधरैः ? 'जलभारनम्रैः' अतीव जलभृतैः । कस्मिन् सति ? 'जीवलोके' प्रत्यक्षे मर्त्यलोके 'निष्पन्नशालिवनशालिनि' सम्पन्नधान्यक्षेत्रैः शोभमाने सति । धान्येषु निष्पन्नेषु न मेघप्रयोजनम्, तथा त्वन्मुखप्रभाप्रकाशिते जगति न चन्द्रेण सूर्येण (वा) कार्यमिति भावः । अत्र मुखप्रकाशेन सूर्याचन्द्रमसोर्येद्यपि वस्तुतो न निरर्थकत्वं तथापि कवेस्तथाभावोल्लासान्न दोषः,

> "तदोजसस्तद्यशसः स्थिताविमौ
> वृथेति चित्ते कुरुते यदा तदा ।
> तनोति भानोः परिवेषकैतवात्
> तदा विधिः कुण्डलनां विधोरपि ॥ १ ॥"—वंशस्थम्

इति नैषधीय (स० १, श्लो० १४)वचनात् । तथा हे नाथ ! इत्यत्रैकवचनेन युष्मन्मुखेन्दु० इत्यत्र बहुत्वेन असङ्गतिस्तथापि "सुता न यूयं किमु तस्य राज्ञः" इति महाकाव्येषु एकस्मिन्नर्थेऽपि बहुत्वस्य युक्तत्वान्न दुष्टम् ॥

**समासास्तु**–शशः अस्यास्तीति शशी, तेन । विवस–ओजो अस्यास्तीति विवस्वान्, तेन । मुखमेव इन्दुर्मुखेन्दुः, युष्माकं मुखेन्दुर्युष्मन्मुखेन्दुः, तेन दलितानि युष्मन्मुखेन्दुदलितानि, तेषु । शालीनां वनानि शालिवनानि, निष्पन्नानि च तानि शालिवनानि च निष्पन्नशालिवनानि, तैः शालते–शोभते इत्येवंशीलो निष्पन्नशालिवनशाली, तस्मिन् । जीवानां लोको जीवलोकः, तस्मिन् । जलानि धरन्तीति जलधराः, तैः । जलानां भारो जलभारः, नमनशीला नम्राः, जलभारेण नम्रा जलभारनम्राः, तैः । शशिनेत्यादौ तृतीया किमित्यव्यययोगात् ॥ इति काव्यार्थः ॥ १९ ॥

What is the use of the Moon at night and what use is there of the Sun by day, when oh Lord! Thy Moon-like face destroys darkness (of ignorance)? What necessity is there of the clouds surcharged with water (lit. bent down by the burden of water), when the (mortal) world is (already) resplendent with the fields of the fully grown *S'āli* rice? (19)

* * * *

अथ ज्ञानद्वारेणान्यदेवान् क्षिपति—

ज्ञानं यथा त्वयि विभाति कृतावकाशं
नैवं तथा हरिहरादिषु नायकेषु ।
तेजः स्फुरन्मणिषु याति यथा महत्त्वं
नैवं तु काचशकले किरणाकुलेऽपि ॥ २० ॥

गु० वि०—हे लोकालोकप्रकाशज्ञान! यथा-येन प्रकारेण कृतावकाशं—अनन्तपर्यायात्मकवस्तुनि विहितप्रकाशं ज्ञानं सम्यक् त्वयि विभाति, तथा-तेन प्रकारेण हरिहरादिषु—विष्णु-रुद्र-ब्रह्म-स्कन्द-बुद्धादिषु नायकेषु—स्वस्वमतपतिषु एवंविधं ज्ञानं न वर्तते । एवमवधारणे वा । अवधारितं त्वयि ज्ञानम्, तेष्वज्ञानमेव । ते ह्यात्मानं कयाचिद् भयदर्शनभङ्ग्या नायकत्वेन ख्यापयन्तोऽपि विभङ्गज्ञानिन एव । तेषां ज्ञानं वेदादौ व्यभिचरति यथा—"विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति, न प्रेत्य संज्ञाऽस्ति" ( बृहदारण्यके २।४।६ ) इति पञ्चमहद्भूतेभ्योऽन्यो न कोऽपि । तत्रैव—

"असुर्या नाम ते लोका, अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति, ये के चात्महनो जनाः ॥ १ ॥"—अनु०

अत्र ऋचि परलोकगत्या भूतेभ्यो जीवः पृथगुक्तः । "शृगालो वै स जायेत यः सपुरीषो दह्यते" इति कृतकर्मभोक्तृत्वाभाव इति ।

"यद् यावद् यादृशं येन, कृतं कर्म शुभाशुभम् ।
तत् तावत् तादृशं तस्य, फलमीशः प्रयच्छति ॥ १ ॥"—अनु०

इति कर्मफलभुक्तिः । क्वापि एक एवायमात्माऽन्यः सर्वो मिथ्या प्रपञ्चः । उक्तं च—

"एक एव हि भूतात्मा, भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव, दृश्यते जलचन्द्रवत् ॥ १ ॥"—अनु०

देहे देहे जीवपार्थक्येऽपि एकजीवत्वं उन्मत्तवाक्यवद् यदृच्छाप्रलापः । "न हिंस्यात् सर्वभूतानि" इति कृपास्थापना । "पुत्रकामः पशुमालभेत । अजैर्यष्टव्यम्" इति दयायां व्यभिचारः । अतो हरिहरादिज्ञानमज्ञानं पूर्वापरविसंवादि, भवज्ज्ञानं (तु) सहजमेकं सकलमव्यभिचारि इति स्थितम् । उपमामाह—स्फुरन्मणिषु—भास्वद्वज्र-वैडूर्य-पुष्परागेन्द्रनीलादिरत्नेषु तेजः—प्रभा यद्वन्महत्त्वं-गौरवं याति-प्राप्नोति तु-पुनः एवं-तद्वत् किरणाकुलेऽपि—चाकचिक्ययुतेऽपि काचशकले—क्षारखण्डे तेजो न महत्त्वं गच्छतीत्यर्थः । अत्रोप-

१ 'यावद् यद् यादृशं' इति ख-पाठ.। २ 'भगवज्ज्ञानं' इति ख-पाठः।

मायां वचनव्यभिचारालङ्कारः । अथ(त्र) "तेजो यथा व्रजति जात्यमणौ महत्त्वं, नैवं तु काचशकलेषु रुचाकुलेषु" इति वा पाठः । वचनभेदो न भवति । इति वृत्तार्थः ॥ २० ॥

अथ मन्त्रः सूरिमन्त्र एव षट्सु वृत्तेषु वक्ष्यमाणेष्विति ॥

प्रभावे कथा यथा—

त्रिलोचनाङ्गजोत्पत्त्या–दिकं विजयसूरिभिः ।
प्रोक्तं राजपुरः पृष्टै–र्यन्नोचे ब्राह्मणादिभिः ॥ १ ॥–अनु०

श्री'नागपुरे'नगरे श्रीमहीपतिर्नरेन्द्रः । राजपूज्यः पुरोधाः सोमदेवः । तत्र पुरे श्रीविजयसेनसूरयो विहारयोगेनागताः । ते निशि भक्तामरस्तवविंशवृत्तस्मरणात् तुष्टया साक्षाद्भूतया चक्रया सर्वप्रश्नविदः कृताः ॥

अन्यदा महीपतेर्देवी प्रसूतिसमयोन्मुखी बभूव । ततो राजा पुरोधःप्रभृतिद्विजान् श्वः परश्वो वा मद्गृहे किं भवितेति ज्ञानमपृच्छत् । ते सम्यगविदन्तो मौनमाश्रिताः । ततः श्रीविजयसेनसूरय आकार्य वन्दित्वा पृष्टाः । सूरयो राजद्विजसमाजसमक्षमवोचन्–महाराज ! शृणु–भवतां पट्टदेवी नेत्रत्रययुतं सुतं प्रसविष्यति कल्ये । द्वादशेऽह्नि पट्टहस्ती मरिष्यति । पुत्रस्य विकृतविलोचनं विले(ल)क्ष्यते । अतः तृतीयाक्षिभवोत्पातो यास्यति । शुभं भविष्यति इत्युदित्वोपाश्रयं ययुः । सोल्लुण्ठाः सूत्रकण्ठाः सूरिमुपहसन्तो राज्ञा निषिद्धाः । द्वितीये दिने पुत्रजन्मक्रमात् सर्वमभूत् । त्रयोदशदिने गुरूनाहूय सिंहासनमारोपयत् श्रीमहीपतिः । द्विजा मषीमलिनास्याः पातालं प्रविविक्षव इवाधोमुखाः सूरीन् प्रणेमुः । गुरवोऽवदन्नाशीर्वादम्—

"आधारो यस्त्रिलोक्या जलधिजलधरार्केन्दवो यन्नियोज्या
भुज्यन्ते यत्प्रसादादसुरसुरनराधीश्वरैः सम्पदस्ताः ।
आदेश्या यस्य चिन्तामणिसुरसुरभीकल्पवृक्षादयस्ते
श्रीमान् जैनेन्द्रधर्मः किसलयतु स वः शाश्वतीं शर्मलक्ष्मीम् ॥१॥"—स्रग्०

इति । नित्यसुखदं जैनधर्मं श्रुत्वा नरेन्द्रः श्रावकोऽभूत् । जैनप्रासादान् महीपतिरचीकरत्, महती प्रभावना प्रसृतेति । अन्यैरपि पेठे सर्वशुभकृतिनवः स्तवः ॥

॥ इति द्वादशी कथा ॥ १२ ॥

मे० वृ०—अथ दृश्यमानज्योतिर्मयपदार्थादधिकत्वं प्रतिपाद्य मतान्तरीयाभ्युपगतदेवेभ्योऽधिकत्वं दर्शयन्नाह—( ज्ञानं यथेत्यादि ) ।

हे नाथ ! त्वयि ज्ञानं विभाति इति सम्बन्धः । 'विभाति' शोभते इति क्रियापदम् । किं कर्तृ ?

१ 'अथ...भवति' इति पाठः ख–प्रत्यां नास्ति । २ मरिष्यते इति ख–पाठः ।

**'ज्ञानं'** यथार्थो वस्त्ववबोधः । कस्मिन् ? 'त्वयि' भवति । किंविं० ज्ञानम् ? **'कृतावकाशं'** ( कृतः— ) विहितः **अवकाशः**—स्थानं प्रकाशते वा येन तत् । यत्तदोरभिसम्बन्धात् तथा—तेन प्रकारेण **हरिहरादिषु** ज्ञानं न विभाति इत्यन्वयः । योजना प्राग्वत् । केषु ? 'हरिहरादिषु' **कृष्णेश्वरप्रमुखेषु** । किंवि० ? 'नायकेषु' देशाधिपत्येन प्रसिद्धेषु लोकैर्देवत्वेन स्थापितेषु । अत्रार्थान्तरन्यासमाह—तेजो यथा स्फुरन्मणिषु महत्त्वं याति—प्राप्नोति । 'याति' इति क्रियापदम् । किं कर्तृ ? 'तेजः' कान्तिजालम् । किं कर्म० 'महत्त्वं' माहात्म्यं गौरवं वा । केषु ? 'स्फुरन्मणिषु' **महारत्नेषु**—इन्द्रनीलादिषु । कथम् ? यथा—येन प्रकारेण तथा काचशकले तेजः महत्त्वं—शोभां मूल्य वा न यातीति । किंवि० काचशकले ? 'किरणाकुले' कान्तिव्याप्तमिति । 'अपि' विस्मये, एव अवधारणे, तुशब्दोऽत्यन्तवैलक्षण्यद्योतकः । अत्र केचिदज्ञाः त्वयेत्यत्र एकवचनेन हरिहरादिष्वित्यत्र बहुत्वेन उपमाभ्रमात् काचशकलेनार्हन्तं स्फुरन्मणिभिर्हरिहरादीनुपमायार्थं दूषयन्ति तदयुक्त, अर्थान्तरन्यासे तद्दोषात् । अत्रैव 'वक्तुं गुणान्' इति ( चतुर्थे )काव्ये 'गुणान्' इत्यत्र बहुत्व 'अम्बुनिधिं' इति एकत्व, तथा त्रिदशाङ्गनाभिरित्यत्र बहुत्वं मरुतेत्यत्र एकत्वं, तथा—शशिना विवस्वता वा इत्यत्र एकत्व, जलधरैरित्यत्र बहुत्वम्, **कल्याणमन्दिरस्तवे**ऽपि सामान्यतोऽपि इति अस्मादृशामिति बहुत्वं कौशिकशिशुरित्यत्र एकत्व इति महाकवीनां बहुस्थलेषु तथाप्रवृत्तेः, अथवा व्याख्यान्तर—यथा तु अयि पदच्छेदात् हे नाथ ! तुशब्दद्वयं महदन्तरे अस्ति, अयीति आमन्त्रणे, नायकेषु युष्मासु इत्यत्र बहुत्वं अनधिकारप्राप्त, प्रान्त्यकाव्ये युष्मन्मुखेन्दु० इत्यत्रोक्तयुष्मच्छब्देनान्वयान, न चैतदयुक्तं, **किरातार्जुनीय**त्रयोदशसर्गे ( श्लो० ५३ ) "चञ्चलं वसु नितान्तमुन्नता" इति काव्यवृत्तौ घण्टापथे 'अन्यश्लोकगतो भवच्छब्दोऽत्र विभक्तिपरिणामेन द्रष्टव्यः, अन्यथा मध्यमपुरुषः स्यात्' इत्येवं अन्वययोजनस्य उक्तत्वात् । एतानि च यैः शान्तरागरुचिभिरित्यादीनि ज्ञानसित्यादिकाव्यान्तानि प्रातः पठ्यमानानि बुद्धिसम्पद्वृद्धये भवन्तीति **सूरिमन्त्रकल्पे** ॥

**समासा यथा**—कृतः अवकाशो येन तत् कृतावकाशम् । हरिश्च हरश्च हरिहरौ, तौ आदौ येषां ते हरिहरादयस्तेषु । स्फुरन्तश्च ते मणयश्च स्फुरन्मणयः तेषु स्फुरन्मणिषु । महतो भावः महत्त्वम् । काचस्य शकलं काचशकलं, तस्मिन । किरणैराकुलं किरणाकुल, तस्मिन् ॥

अत्र 'तेजो मणौ समुपयाति यथा महत्त्वं नैव तु काचशकलेषु रुचाकरेषु' इत्ययमपि पाठोऽस्तीति कश्चित्, तथा च सर्वं सुस्थमिति काव्यार्थः ॥ २० ॥

*He suggests that Lord Rishabha surpasses other gods in knowledge.*

Knowledge ( which illumines all the objects ) does not shine with so great an effulgence in the case of *Hari (Vishnu)*, *Hara (S'iva)* and others, the lords ( of the followers of other systems of philosophy ) as it does when it resorts to Thee ( lit. when it finds a place in Thee) Light attains its magnificence, when it falls on the sparkling jewels, but it fails to attain the same ( sort of magnificence ), when it falls on a piece of glass, even if it be pervaded by the rays of light. ( 20 )

※ ※ ※ ※

अथ निन्दास्तुतिमिश्रमाह—

मन्ये वरं हरिहरादय एव दृष्टा
दृष्टेषु येषु हृदयं त्वयि तोषमेति ।
किं वीक्षितेन भवता भुवि येन नान्यः
कश्चिन्मनो हरति नाथ! भवान्तरेऽपि ॥ २१ ॥

गु०वि०—हे सर्वोत्कृष्ट ! देवोत्तम! प्रभावनाथ! हरिहरादय एव दृष्टा-विलोकिता वरं-प्रधानमित्यहं मन्ये । येषु सुरेषु दृष्टेषु हृदयं-चित्तं त्वयि-भवद्विषये तोषं-प्रमोदमेति-आयाति । यतस्तैर्हि तव मुद्राऽपि नाभ्यस्ता, ज्ञानं दूरे । उक्तं च—

"वपुश्च पर्यङ्कशयं श्लथं च
दृशौ च नासानियते स्थिरे च ।
न शिक्षितेयं परतीर्थनाथै-
र्जिनेन्द्र ! मुद्राऽपि तवान्यदास्ताम् ॥ १ ॥"—उपजातिः

—( अयोगव्यवच्छेदद्वात्रिंशिकायां श्लो० २० )

अतोऽपरसुरदर्शनादेव त्वयि भक्तिस्तैलाशनादाज्ये यथा प्राज्यादर इति । अथ भवता वीक्षितेन-दृष्टेन किं कार्यं येनार्हद्वीक्षणलक्षणेन हेतुनाऽन्यः-त्वदपरः कश्चिद् देवो भवान्तरेऽपि-अन्यजन्मन्यपि भुवि-लोके मनो न हरति-मानसं न गृह्णाति । यतः सर्वगुणो भवांस्तथाविधभव्यानां चित्तहरणं कुरुते । अन्ये सुरा रागद्वेषविसंस्थुलाङ्गत्वात् ज्ञानविकलत्वाच्च न मनोहरणं प्रति कारणम् । उक्तं च—

"मन्ये सर्वात्मनाऽन्येषु, दोषास्त्वयि पुनर्गुणाः ।
स्तुतिस्तवेयं चेन्मिथ्या, तत्प्रमाणं सभासदः ॥ १ ॥"—अनु०

अन्यभवे चित्ततोषः श्रेयांसादेरिव । तद् यथा—

"साधिकवर्षं चतसृषु, दिक्षु बहल्यादिमण्डलानि विभुः ।
व्यहरन्मुक्ताहारो, मुनिभिक्षामूर्खमनुजवशात् ॥ १ ॥
अवनिं पावं पावं, निरशनपानो जिनेश्वरो वृषभः ।
निजचरणक्रमणेना-शनाय गजपुरमगादग्लानः ॥ २ ॥
श्रीबाहुबलितनूजः, सोमयशाः सद्यशा नृपस्तत्र ।
रूपनिधिर्वृषभांसः, श्रेयांसस्तत्कुमारवरः ॥ ३ ॥
स्वप्ने च निशाशेषे, कज्जलकालः सुमेरुगिरिराजः ।
मयका सुधाभिषिक्तः, स्वरुचिं प्रापेति सोऽपश्यत् ॥ ४ ॥

परितो वैरिक्रान्तो, वीरः श्रेयांसविहितसाहाय्यः ।
रणभुवि विजयी जातः, स्वप्नं सोमप्रभोऽपश्यत् ॥ ५ ॥
रविमण्डलतः पतितं, करजालं गलिततेजसस्तस्य ।
श्रेयांसेन तु घटितं, स्वप्नं श्रेष्ठी ददर्शेति ॥ ६ ॥
प्रातः पर्षदि मिलिताः, स्वप्नार्थं किमपि भाव्यजानन्तः ।
ऊचे नृपतिः कश्चित्, श्रेयांसस्योदयो नूनम् ॥ ७ ॥
निजनिजसौधं जग्मुः, श्रेयांसश्रेष्ठिमन्त्रिसामन्ताः ।
युवराजो जनतानां, कलकलमशृणोद् गवाक्षस्थः ॥ ८ ॥
आसन्ननरमपृच्छत्, कोलाहलकारणं ततो युवराट् ।
सोऽचीकथच्च मत्वा, निःशेषं वृषभवृत्तान्तम् ॥ ९ ॥
रजतस्वर्णाभरण-प्रवालमुक्ताफलाश्वयानादि ।
प्रपितामहस्तवायं, कौशलिको नैव गृह्णाति ॥ १० ॥
तेनायं नगरजनः, कलकलशब्दं करोति भक्तिपरः ।
स्वामिन्नस्मिन् भक्ते, कुरु प्रसादं वदन्नेवम् ॥ ११ ॥
तच्छ्रुत्वा श्रेयांसो, निरुपानत्कस्त्वरान्वितोऽभ्यगमत् ।
तां जिनमूर्तिं दृष्ट्वा, जातस्मृतिमाप गतपापः ॥ १२ ॥
पूर्वविदेहे पुण्डरि-किण्यां पुरि वज्रसेनजिनसूनुः ।
चक्र्यजनि वज्रनाभः, सुयशास्तत्सारथिः प्रथितः ॥ १३ ॥
सह बाहुसुबाहुभ्यां, पीठमहापीठसहजसुयशोभिः ।
चक्रधरः पूर्वधरो, व्रती समर्ज्याथ चार्हन्त्यम् ॥ १४ ॥
सर्वार्थदिवो भरते, गतसुकृते नाभिभूरभूदर्हन् ।
सुयशा यतिर्गृहीता-नुत्तरवासो भवं सोऽहम् ॥ १५ ॥
तत्रेयं तीर्थकरस्य, वज्रसेनस्य वीक्षिता मुद्रा ।
भूपीठेऽनन्यसमा, ऋजुजडजीवैरविज्ञेया ॥ १६ ॥
कल्प्यमकल्प्यं सैषण-मनेषणीयं न विदन्ते यदमी ।
मुनिपतये तत् शुद्धं, कल्याणीभक्तयो ददति ॥ १७ ॥
अत्रान्तरे च कश्चिन्-नव्येक्षुरसेन सम्भृतान् कुम्भान् ।
युवराजपुरोऽढौकय-दिक्षुवंशा यद् विभोर्वंश्याः ॥ १८ ॥
भगवन् ! प्रसारय करौ, निस्तारय मां गृहाण योग्यममुम् ।
इत्युक्तेऽञ्जलिमृषभो-ऽकृत सोऽपि ददौ घटेक्षुरसम् ॥ १९ ॥

---

१ 'तत्र' इति क-पाठः । २ 'शलिकानैव' इति ग-पाठः । ३ 'इति गृही०' इति ग-पाठः ।

अच्छिद्रपाणिरर्हन्, नापतदवनौ तथेक्षुरसबिन्दुः।
याति शिखा यदि शशिनं, तीर्थकृतोऽतिशयतो न पतेत् ॥ २० ॥
दिवि दुन्दुभयो नेदु-र्जुघुषुरहो दानमर्जुनं ववृषुः।
रत्नकुसुमादि मुमुचु-र्जहृषुर्ननृतुश्च देवगणाः ॥ २१ ॥
अन्तर्हिताशनविधौ, भगवति गतवति कृतं पदस्थाने।
तेनादिकृते मण्डल-मन्यैश्च रवेः क्रमात् प्रथितम् ॥ २२ ॥
स्वप्नत्रयं पुरोदित-मभूच्च सत्यं जिनेन्द्रपारणकात्।
सोमप्रभोऽथ हृष्टः, स्वसुतं दृष्ट्वा सुराभिनुतम् ॥ २३ ॥
आगतकच्छादीनां, मिलितजनस्याग्रतश्च जिनवृत्तम्।
आहारविधिमचीकथ-दात्मचरित्रं च युवराजः ॥ २४ ॥
ईशाने ललिताङ्गः, स्वयंप्रभा प्राणवल्लभा प्रथमम्।
राजाऽथ वज्रजङ्घः, श्रीमत्या कान्तया श्रीमान् ॥ २५ ॥
अथ युगलिनौ च देवौ, जीवानन्दश्च केशवो मित्रम्।
अच्युतसुरौ च राजेन्द्र-वज्रनाभश्च सूतश्च ॥ २६ ॥
सर्वार्थसिर्द्धि(द्ध)देवौ, मरुदेवीनाभिनन्दनो विदितः।
प्रथमजिनोऽजनि चाहं, श्रेयांसः सुयशसो जीवः ॥ २७ ॥
अष्टभवप्रतिबद्ध-स्नेहोऽहं नवमके ततो नाथम्।
दृष्ट्वा जातिस्मृत्या, ज्ञातेयं तीर्थकृन्मुद्रा ॥ २८ ॥
प्रासुकजलसिद्धान्नं, निर्बीजफलं सशुष्कमूलदलम्।
योग्यं देयमृषिभ्य-स्तेऽगुः स्वाश्रयमिति श्रुत्वा ॥ २९ ॥
पात्रं श्रीऋषभजिनः, श्रेयांसः श्रेयसाऽन्वितो दाता।
वित्तं शुद्धेक्षुरसो, न विद्यते भूतलेऽन्यत्र ॥ ३० ॥
श्रमणोपासकभावे, श्रेयांसः प्रथम एव भुवि विदितः।
मुक्तः क्रमेण राज्यं, प्रपाल्य पूर्वाणि भूयांसि ॥ ३१ ॥
इति येऽन्यभवालोकात्, पुनरपि ददृशुर्जिनं गुणावासम्।
तोषं भेजुस्ते पर-देवैर्दृष्टैरपि प्रथमम् ॥ ३२ ॥

॥ इति वृत्तगर्भार्थः ॥ २१ ॥

अथ महिमकथा—

श्रीजीवदेवसूरीन्द्रा, विहृता देवपत्तने।
पौराणां दर्शिता यैस्तु, शिवब्रह्माच्युतादयः ॥ १ ॥

* सुवर्णम्।

म० ८

पुरा श्रीवायडमहास्थाने परकायप्रवेशविद्याविदः श्रीजीवदेवसूरयः स्तवैकविंशं वृत्तं साम्नायं क्षपायां जपन्तोऽप्रतिचक्रया सर्वदेवप्रकटनशक्तयः कृताः । ते श्रीगूर्जरात्रतः (?) सुराष्ट्रासु देवपत्तनं जग्मिवांसः (ग्रं० ७००) । तत्र श्रीसोमनाथमहिमा महीयान् । तद्भक्तो जनो यात्रिका अहमहमिकया नमन्ति शिवम् । श्रावकाः कङ्कटुकप्रायाः केचन । ते गुरुसंमुखं गताः । प्रभुभिर्धर्मनिर्वाहप्रश्नः कृतः । ते ऊचुः–अत्र मिथ्यादृग्मतस्यैकच्छत्रता, कथं धर्मनिर्वाहः ? । श्रीजीवदेवसूरयः श्रावकैः साकं सोमनाथप्रासादमासदन् । हृष्टास्तद्भक्ताः । अहो श्वेताम्बरा अपि शिवनमनायाजग्मुः । सूरिभिश्चक्रां चेतसि कृत्वा सोमेश ! आगच्छेत्युक्तम् । प्रकटः शिवोऽचालीत् । अग्रे ब्रह्मविष्णू प्रासादाच्चलितौ । सूर्य-गणेश-स्कन्दादयश्चलिताः । सकलप्रकटितसुरैर्विस्मितैः पौरैः शिवार्चकैश्च सह चन्द्रप्रभप्रासादे जिनेशो नतः, सोमेशादष्टमजिनार्चनाय करो याचितः । तेनाङ्गीकृतः । विसृष्टाः स्वस्थानगमनाय हरादयोऽन्तर्दधुः । आचार्या उपाश्रयं जग्मुः । महती शासनोन्नतिर्जाता । लिङ्गभरटकाः चन्द्रप्रभस्य करदीभूताः जिनं महादेवममन्यन्त । दृष्टप्रत्ययः को मुह्यति ? अमूदृशोऽल्पीयांसो भुवि । उक्तं च—

"परोलक्षेषु देवेषु, ख्यातिरेकस्य कस्यचित् ।
द्रुमेष्वेकैव सा जम्बू-र्जम्बूद्वीपो यदाख्यया ॥ १ ॥"–अनु०

इति । पूजा पुष्पसहस्रदशकं मासे पञ्चसेरमिता श्रीखण्डिका नित्यं तैलसेरत्रयं नैवेद्ये माणकद्वयं केसरकुङ्कुमपलद्वयं कर्पूरस्य माषकमेकं कस्तूरिकायाश्च करं दत्ते सोमेशोऽष्टमजिनस्येति ।

॥ इति त्रयोदशी कथा ॥ १३ ॥

मे० वृ०–अथान्यदेवेभ्य एवाधिकत्वं रचनान्तरेणाह—( मन्ये वरमित्यादि ) ।

हे नाथ ! अहं तद् वरं मन्ये । 'मन्ये' इति क्रियापदम् । कः कर्ता ? 'अहम्' । किं कर्मतापन्नम् ? 'तत्' हरिहरादिदर्शनम् । किंवि० ? 'वरं' प्रधानम् । तच्छब्देन यच्छब्दापेक्षयाऽऽह–यत् मया हरिहरादय एव दृष्टाः । 'दृष्टाः' इति क्रिया० । केन कर्त्रा ? 'मया' । के कर्मतापन्ना ? 'हरिहरादयः' कृष्णेश्वरादयो देवाः । कथम् ? 'यत्' यदिति अव्ययम् । अत्रार्थे हेतुमाह—हे नाथ ! येषु दृष्टेषु हृदयं त्वयि तोषमेति–प्राप्नोति इत्यन्वयः । 'एति' इति क्रिया० । किं कर्तृ ? 'हृदय' मनः । क कर्मतापन्नम् ? 'तोषं' हर्षम् । कस्मिन् ? 'त्वयि' भवति । केषु सत्सु ? 'येषु हरिहरादिषु दृष्टेषु' सत्सु पूर्वं विलोकितेषु सत्सु । पूर्वं हरिप्रमुखान् दृष्ट्वा त्वद्दर्शने मम महत् प्रमोदकारणं सम्पन्नं, तेभ्यः सातिशयगुणत्वात्, लोहाभ्यासवतः स्वर्णदर्शनवत् इति भावः । इदमेव भङ्ग्यन्तरेण द्रढयति–हे नाथ ! भवता

१ 'यात्रिकया' इति क-पाठ. । २ 'माटन्' इति ख-पाठः । ३ 'लक्षेष्वपरेषु' इति क-पाठः । ४ 'पलार्धं' इति क-पाठः ।

वीक्षितेन किं स्यादिति सम्बन्धः। 'स्यात्' इति क्रियापदम्। किं कर्तृ ? 'किं' हर्षकारणं विशेषतः। केन ? 'भवता' त्वया। किंविशिष्टेन ? 'वीक्षितेन' दृष्टेन। तत् कथमित्याह—येन कारणेन भवान्तरेऽपि न अन्यः कश्चिन्मनो हरति—वशीकुरुते इत्यन्वयः। 'हरति' इति क्रियापदम्। कः कर्ता ? 'कश्चित् अन्यः' अपरो देवनाथोऽपि। किं कर्मतापन्नम् ? 'मनः' चित्तम्। कस्मिन् ? 'भवान्तरेऽपि' परभवेऽपि, त्वत्तोऽधिकसौन्दर्यादिगुणवतस्त्रैलोक्येऽपि अभावादिति भावः॥

**समासा यथा**—मन्ये इत्यव्ययं तिबन्तप्रतिरूपकम्। हरिश्च हरश्च हरिहरौ, तौ आदी येषां ते हरिहरादयः। एकस्माद् भवादन्यो भवो भवान्तर तस्मिन्, मयूरव्यंसकादित्वात् समासः। दृष्टा भवन्तमित्यादिना काव्येनास्य पौनरुक्त्यं न ज्ञेय, निन्दास्तुतित्वेन विषयभेदादिति काव्यार्थः॥२१॥

*He summarizes the result of seeing Hari and the like*

I believe that it was for the better that (first of all) I verily saw *Hari*, *Hara* and the like, (for) as I have already seen them, my heart gets complete satisfaction on seeing Thee What has been the result of seeing Thee ? (The reply is that) oh Lord! no one else in this world will be able to divert my mind from Thee even in the next birth (21)

* * * *

किञ्च—

स्त्रीणां शतानि शतशो जनयन्ति पुत्रान्
नान्या सुतं त्वदुपमं जननी प्रसूता।
[3]सर्वा दिशो दधति भानि सहस्ररश्मिं
प्राच्येव दिग् जनयति स्फुरदंशुजालम्॥ २२॥

**गु० वि०**—हे चतुर्दशस्वप्नसूचितचतुर्दशभुवनाधिपत्य! स्त्रीणां—नारीणां शतानि—बहुवचनत्वात् कोटीकोट्यः शतशः—कोटिकोटिसंख्यान् पुत्रान् जनयन्ति—प्रसुवते। तासु मध्येऽन्या—अपरा जननी—माता त्वदुपमं—भवत्समं सुतं—नन्दनं न प्रसूता—नाजीजनत्। त्वां पुत्रं मरुदेव्येव प्रासूत। अत्रोपमा—सर्वा दिशः—अष्टौ काष्ठाः [2]भानि—नक्षत्राणि तारकाणि दधति—धारयन्ति, (परन्तु) प्राच्येव—पूर्वैव दिक् स्फुरदंशुजालं—चञ्चत्करकलापं सहस्ररश्मिं—सूर्यं जनयति—प्रसूते। यथा ऐन्द्री दिक् सूर्योदये हेतुः, तथा तीर्थकृज्जन्मनि मरुदेव्यादय एव हेतुः। इति वृत्तार्थः॥ २२॥

**प्रभावे कथा**—

श्रीआर्यखपुटाचार्यै-र्यक्षो वृद्धकराभिधः।
स्कन्द-रुद्र-गणेशाद्यैः, सहितो दर्शितो नतः॥ १॥—अनु०

---

१ 'मयूरव्यंसकादयश्च' इति पाणिनीये (२।१।७२)। २ 'भानि-तारकाणि' इति क-पाठः।
३ 'सर्वादिशो' इत्यपि पाठ.।

श्री'गुडशस्त्र'पत्तने भुवनमुनिना वृद्धकरनामा बौद्धाचार्यो वादे जितः। स पराभवान्-मृत्वा यक्षीभूय सङ्घमुपद्रोतुं लग्नः। सङ्घेन स्तवद्वाविंशवृत्ताम्नायजपनमासचतुष्टयक्षदलनो-पायाः सोत्साहा वृद्धवयसो विद्यासिद्धाः श्रीआर्यखपुटाचार्या विज्ञप्य 'गुडशस्त्र'पत्तनमा-नीताः। प्रभवो यक्षायतनं गत्वा यक्षकर्णयोर्जीर्णपादुके निवेश्योरसि स्वांह्री कृत्वा वस्त्रे-णाङ्गमावृत्य सुषुपुः। यक्षार्चकः समेत्योवाच–रे दुर्विनीत! शीघ्रमुत्तिष्ठ, मरिष्यसेऽ-न्यथा। ते कपटनिद्रया स्थिताः। राजादयो यक्षं नन्तुं प्रातरागताः। राजाज्ञया राजपु-रुषास्तं हन्तुं लग्नाः। कशाघाता अन्तःपुरे लेगुः। पूत्कारका नरा आयाताः। एतस्य सिद्धस्य प्रभावोऽसौ इति मत्वा घाता निर्वर्तिता राज्ञा। स सूरिपदौ गृहीत्वा स्थितः। उत्थिता गुरवः। यक्षः स्वस्थानाद् गुरुचरणमूलमागत्यापतत्। गुरुभिर्निर्भर्त्स्य सङ्घस्य रक्षकीकृतः। प्रभवो यक्षयुताः पुरं प्रति चेलुः। अन्येऽपि शिव-विनायकाद्या यक्षगृहा-च्चेलुः। द्वे महद्दृषन्मये कुण्डिके चालिते। सर्वे पुरद्वारात् स्वस्थानं प्रति विसृष्टाः। प्रभून् नत्वा गतवन्तश्च। कुण्डिके तत्र स्थापिते तथैव तिष्ठतोऽद्यापि न कोऽपि चालयितुं क्षमः। तादृशां गुणान् कः संख्यातुं वेत्ति? । उक्तं च—

"गुणान् गुणवतां वेत्तुं, विरलाः प्रभविष्णवः।
वेत्ति रत्नपरीक्षायां, लवमेकं न वल्लवः॥ १॥"–अनु०

यक्षमहिमा चास्तं गमितः। उक्तं च—

"दत्ते विपत्तिमासत्तिः, प्रभोरत्युग्रतेजसः।
ग्रहमस्तमितं प्राहु–र्गतं मार्तण्डमण्डले॥ १॥"–अनु०

इति स्तूयमाना राजकारितप्रवेशमहामहाः पौषधागारं प्राप्ता धर्ममुपादिशन्—

"भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे
दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनाम्।
पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः
सङ्गो निःसङ्गचित्तैर्विषयविमुखता हर्म्यिणामेष धर्मः॥ १॥"–स्रग्धरा

इत्याकर्ण्य प्रबुद्धा बुद्धभक्ता नृपादयोऽर्हद्धर्मे निश्चला आसन्॥

॥ इति चतुर्दशी कथा॥ १४॥

मे० वृ०–अथ केचित् परमेष्ठिनमलक्षजन्मत्वादनादिमाहुस्तन्मतनिरासेन जिनमातरं वर्णयन्नाह–(स्त्रीणामित्यादि)।

हे नाथ! स्त्रीणां शतानि शतशः पुत्रान् जनयन्ति–प्रसुवते इति सम्बन्धः। 'जनयन्ति' इति क्रिया-पदम्। कानि कर्तॄणि? 'स्त्रीणां शतानि' बहवो नार्यस्तत्स्वभावात्। कान् कर्मतापन्नान्? 'शतशः' बहुशतानि 'पुत्रान्' तनयान्। तथापि हे नाथ! त्वदुपमं सुतं अन्या काचित् स्त्री न प्रसूता–न सुषुवे

इत्यन्वयः। 'प्रसूता' इति क्रिया०। का कर्त्री? 'अन्या' जननी—माता, तव जनन्या मरुदेव्याः इति शेषः। किं कर्म०? 'सुतम्'। किंवि०? 'त्वदुपमं' तव तुल्यम्। मरुदेव्याः पुत्रत्वं श्रीऋषभप्रभोः परसमयेऽपि प्रसिद्धं, यदुक्तं भागवते प्रथमस्कन्धे—

"अष्टमे मरुदेव्यां तु, नाभेर्जात उरुक्रमः।
दर्शयन् वर्त्म धीराणां, सर्वाश्रमनमस्कृतः॥ १॥"—अनु०

अत्रार्थे दृष्टान्तमाह—सर्वा दिशो भानि दधति—धरन्ति इति सण्टङ्कः। 'दधति' इति क्रिया०। काः कर्त्र्यः? 'दिशः सर्वाः' प्राच्यादयः सकलाः काष्ठाः। कानि कर्मतापन्नानि? 'भानि' नक्षत्राणि। तथापि सहस्ररश्मिं प्राच्येव दिग् जनयति—प्रसूते। 'जनयति' इति क्रिया०। का कर्त्री? 'प्राची दिग्' पूर्वाऽऽशा। कं कर्मतापन्नम्? "सहस्ररश्मिं' सूर्यम्। किंवि०? 'स्फुरदंशुजालं' विलसत्किरणसमूहम्। एवकारो निश्चयार्थः। प्राच्येव नान्या दिग् इत्यर्थः॥

समासा यथा—शतं शतं इति शतशः, 'बह्वादेः (कारकात्) शस्' (सा० सू० ६७८)। जनयन्तीत्यत्र 'चल्याहारार्थेङ्बुधयुधप्रुद्रुस्रुनशजनः' (अ० ३, पा० ३, सू० १०८) इति हैमसूत्रात् परस्मैपदम्। तव उपमा यस्य स त्वदुपमस्तम्। सहस्रं रश्मयो यस्य स सहस्ररश्मिस्तम्। तथा अंशूनां जालं अंशुजालं, स्फुरद् अंशुजालं यस्य स तथा तम्। अत्र सर्वाश्च ता दिशश्च सर्वादिशः कर्मधारयः, सर्वा इति पृथक् पद वा इति, तथा जनयतीत्यत्र नामधातुरिति कोशल्यां दृश्यते। इति काव्यार्थः॥ २२॥

*He suggests the natural birth of God.*

Hundreds of women give birth to hundreds of sons; but no mother (except Thine) gave birth to a son that could stand (out in) comparison with Thee. In all the directions there are (lit. all the quarters contain) constellations, but it is only the east which brings forth the Sun having a collection of resplendent rays. (22)

* * * *

परमपुंस्त्वेन स्तुतिमाह—

**त्वामामनन्ति मुनयः परमं पुमांस-**
**मादित्यवर्णममलं तमसः परस्तात्[1]।**
**त्वामेव सम्यगुपलभ्य जयन्ति मृत्युं**
**नान्यः शिवः शिवपदस्य मुनीन्द्र! पन्थाः॥ २३॥**

गु० वि०—हे मुनीन्द्र! मुनयो—ज्ञानिनः त्वां परमं पुमांसं—परमं पुरुषम् आमनन्ति—भणन्ति—अवबुध्यन्ते। वेदेऽपि—'पुरुष एवेदं ग्निं सर्वं यद् भूतं यच्च भाव्यम्, उतामृत-

[1] 'पुरस्तात्' इत्यपि पाठः।

त्वस्येशानो यदन्नेनातिरोहति' इति महिमवर्णनम् । परमपुंस्त्वं बाह्यान्तरपुंसोरपेक्षया । बाह्यः पुमान् कायः । आन्तरः पुमान् सकर्मा जीवः । परमः पुमान् निष्कर्मा सोऽनन्तचतुष्कः सिद्ध उच्यते । किंभूतम्? 'अमलं' रागद्वेषमलरहितम् । आदित्यस्येव वर्णः–कान्तिर्यस्य तमादित्यवर्णम् । तमसो दुरितस्य परस्तात्–परतो वर्तमानम् । पुराऽर्हतो रविसाम्यं क्षिप्तम्, साम्प्रतं किमित्युक्तं? भण्यते, तेजोऽंशमात्रलब्धिसाम्यात् । परमार्थतो नभोभ्रमरयोरिव समुद्रबिन्द्वोरिव मन्दराण्वोरिव महदन्तरालं परमपुरुषालोकसूर्यालोकयोरिति । भानुरपि तमसोऽन्धकारस्य परतस्तिष्ठति । अन्यच्च मुनयः सम्यग्–अन्तःकरणशुद्ध्या त्वामेव, एवशब्दो निश्चये, उपलभ्य–प्राप्य–मत्वा मृत्युम्–अत्यन्तं भयंकरं मरणं जयन्ति–स्फोटयन्ति च । अत्र ॐ जुं सः मृत्युंजयाय नमः इति मृत्युंजयरक्षा । अन्यच्च शिवपदस्य–मोक्षस्थानस्य अन्यः–त्वत्तोऽपरः शिवः–प्रशस्तो निरुपद्रवो वा पन्था–मार्गो नास्ति । मुक्तिकारणं त्वमेव अतः श्रयणीयः । इति वृत्तभावार्थः ॥ २३ ॥

महत्त्वे कथा—

चण्डिका चालिता गले, कृतं च करजक्षतम् ।
मुञ्चमानाऽश्रु चक्षुर्भ्यां, देवताऽभूद् वरप्रदा ॥ १ ॥–अनु०

पूर्वं श्रीआर्यखपुटसूरयः स्तोत्रत्रयोविंशप्रवृत्तादिदेवमन्त्रस्मृत्या प्रसन्नसर्वानुभूतिचक्रादत्तवराः प्राप्तदुष्टव्यन्तरसाधनोपायाः श्रीउज्जयिनी ययुः । पुरोद्याने चण्डीभवने[2] उषायामूषुरुँषर्बुधज्वलद्विद्याप्रतापाः[1][3] । सा मिथ्यादृष्टिर्दुष्टा वसतिजने कुप्यति विशेषतः श्वेताम्बरेषु । अतो विकृतरूपा पीतमदिरेवाताम्रमुखी प्रभुपार्श्वं प्राप्ता । प्रभवो ध्यानमापूर्योपविष्टाः । दृष्टा सा क्रुध्यन्ती । गले नखक्षतं दत्तम् । तत् कुलिशकर्कशं जातम् । देवी दृग्भ्यामश्रूणि मुञ्चन्ती वरं ददौ । गुरुभिर्वधनिषेधः कारितः । जनोपसर्गो वारितः । शान्तीकृता सा । प्रत्यूषे प्रभुपुरःसरा पौरैः सहोपाश्रयं प्रति प्रस्थिता । पुरद्वाराद् व्यावर्तिता पूज्यांह्रीं नत्वा स्वायतनं गता । कपोले नखरेखा तथैव स्थिता । लोकः सम्यगाराध्यवचनमाराधयत् । सम्यक्त्वं बहवः प्रपेदिरे । गुरुगुणान् स्मरन्तः स्वमन्दिरमीयुर्जनाः । उक्तं च—

"गुणिनः स्वगुणैरेव, सेवनीयाः किमु श्रिया? ।
कथं फलर्द्धिवन्ध्योऽपि, नानन्दयति चन्दनः? ॥ १ ॥"–अनु०

॥ इति पञ्चदशी कथा ॥ १५ ॥

---

१ 'ह्रीं' इति ग–पाठः । २ 'भुवने' इति ख–पाठः । ३ उषर्बुधः अग्नि. ।

**मे० वृ०**—अथ लब्धजन्मत्वेन ऋषभस्य भगवतो न परमपुरुषत्वं, किन्तु परमपुरुषस्य अंशावतारोऽयं हयग्रीवादिवदिति परमतं दूषयन्नाह—( त्वामेत्यादि )।

हे मुनीन्द्र!—योगिनां स्वामिन्! त्वां मुनयः परमं पुमांसमामनन्ति इत्यन्वयः । 'आमनन्ति' अभ्यस्यन्ति इति क्रियापदम्। के कर्तारः? 'मुनयः' । कं कर्म०? 'त्वाम्' । किंवि० त्वाम्? 'परमं पुमांसं' सत्त्वरजस्तमोगुणातीतं त्रिजगद्ध्येयं निर्विकारम् । पुनः किंवि० त्वाम्? 'आदित्यवर्णं' सूर्यप्रभं ( भगवतोऽपि सुवर्णवर्णत्वात् ) । कथम्? 'पुरस्तात्' ( अग्रे ) । कस्य? 'तमसः' अस्पष्टातिनिबिडान्तरान्धकारस्य अज्ञानस्य ( परस्तादिति पाठे तमोविपयात् दूरे इत्यर्थः ) । पुनः किं० त्वां? 'अमलं' निर्मलज्योतिष्मन्तम् । योगिनो ध्यानान्तस्त्वामेव सम्यग् उपलभ्य मृत्युं जयन्तीति संबन्धः । 'जयन्ति' इति क्रिया० । के कर्तारः? 'मुनयः' योगभाजः । क कर्मतापन्नम्? 'मृत्यु' कालम् । अजरामरा भवन्ति इति भावः। किं कृत्वा? 'त्वां सम्यग् उपलभ्य' त्वत्स्वरूप यथार्थतया ज्ञात्वा, त्वद्ज्ञानाभावे योगस्यापि विफलत्वान् नाजरामरत्वं मुनीनां स्यान्, अत एवोक्तमन्यैः—

"ज्ञानिनो धर्मतीर्थस्य, कर्तारः परमं पदम् ।
गत्वाऽऽगच्छन्ति भूयोऽपि, भवं तीर्थनिकारतः ॥ १ ॥"—अनु०

तेनात्र एवोऽवधारणे । अत्र व्यतिरेकमाह—हे मुनीन्द्र! भवतः अन्यः शिवपदस्य पन्था नास्ति । 'अस्ति' इति क्रिया० । कः कर्ता? 'पन्थाः' मार्गः । कस्य? 'शिवपदस्य' मोक्षस्थानस्य । किंवि०? 'शिवः' निरुपद्रवः। कथंभूतः? भवतः 'अन्यः' अपरः, अतो मुक्तिकारणत्वेन त्वमेव परमः पुमान् इति निर्णयः, न च जन्यरूपत्वान्न तथेति वाच्यं, परैरपि 'मनुष्यजन्माऽपि सुरासुरान् गुणैर्भवान् भवोच्छेदकरैः करोत्यधः' इति **माघ**काव्ये पुराणपुरुषस्य तथैवोक्तेः ॥

**समासाश्च**—'म्ना अभ्यासे' धातुः । मन इत्यादेशः । परा मा—ज्ञानं यस्य स परमः तम् । आदित्य(स्येव) वर्णो यस्य स तम । न विद्यते मलो यस्मिन् सः अमलः तम । शिवं च तत् पदं च शिवपद तस्य । मुनीन्द्र इति प्राग्वत् । तमस इत्यत्र 'रिरिष्टास्तात्' ( अ० २, पा० २, सू० ८२ ) इति **हैम**सूत्रान पष्ठी ॥ इति काव्यार्थः ॥ २३ ॥

*He designates Lord Rishabha as the Supreme Being.*

Oh Lord of the ascetics! the sages give Thee the noble appellation of the Supreme Being having the colour of the sun, bright and inaccessible to darkness and free from blemishes. They conquer death by duly realizing Thee alone, (for) there is no other beneficial path leading to the auspicious abode (liberation). (23)

* * * *

अथ सर्वदेवनाम्ना जिनं स्तौति—

त्वामव्ययं विभुमचिन्त्यमसङ्ख्यमाद्यं
ब्रह्माणमीश्वरमनन्तमनङ्गकेतुम् ।
योगीश्वरं विदितयोगमनेकमेकं
ज्ञानस्वरूपममलं प्रवदन्ति सन्तः ॥ २४ ॥

गु० वि०—हे सर्वदर्शिन्! सन्तो–विचक्षणा यतयः त्वां एवंविधं प्रवदन्ति-प्रकर्षेण ब्रुवते, जानन्तीत्यर्थः। किंविशिष्टम्? न व्येति–न चयापचयं गच्छतीत्यव्ययस्तं सर्वकालस्थिरैकस्वभावम्। विभाति–परमैश्वर्येण शोभत इति विभुस्तम्। विभवति कर्मोन्मूलने समर्थो भवतीति वा विभुस्तं, इन्द्रादिप्रभुं वा। आध्यात्मिकैरपि न चिन्तितुं शक्यस्तमचिन्त्यम्। अत्यद्भुतगुणयुतं वा। गुणानां न सङ्ख्या–इयत्ता यस्य तमसङ्ख्यं, संसारस्यानादित्वादनन्तज्ञानोऽपि निःशेषतया जीवानां भवान् न सङ्ख्याति–न आचष्टे इत्यसङ्ख्यं, अनन्तार्थान्–अकारादीन् वर्णान् न सङ्ख्यातीत्यसङ्ख्यम्। अनन्तार्थत्वमागमे—

"[1]सव्वनईणं जा हुज्ज, वालुया सव्वउदहि(सव्वोदहीण[2]?) जं तो[3]यम्।
तत्तो अणंतगुणिओ, अत्थो इक्कस्स सुत्तस्स ॥ १ ॥"

गुणतः कालतो वा सङ्ख्यातुमशक्यस्तमसङ्ख्यम्। आदौ भव आद्यः, लोकव्यवहारसृष्टिहेतुत्वात् तम्। नमो अ[4]रहंताणमिति पञ्चपरमेष्ठिष्वर्हतां प्रथमतया आद्यम्। चतुर्विंशतिजिनेष्वाद्यं वा प्रथमतीर्थंकरं स्वस्वतीर्थस्यादिकरत्वात्, सर्वजिनगण आद्यो वा सोपायेन सिद्धं वा। बृंहति–अनन्तानन्देन वर्धत इति ब्रह्मा तं, ब्रह्म–निर्वाणं तद्योगाद् ब्रह्माणम्। तेजोरव्योरिव सिद्धसिद्ध्योरभेदात् सर्वकर्ममुक्तं वा। सकलसुरेषु ईशितुं शीलमस्य तमीश्वरं कृतार्थं वा। अनन्तज्ञानदर्शनयोगादनन्तम्। न अन्तो मृत्युरूपो यस्य तम्। अनन्तचतुष्टयसमृद्धं वा। अनङ्गस्य–कामस्य केतुरिव तम्। यथा केतुरुदितो जगत्क्षयं कुरुते, तथा भगवान् कन्दर्पस्य क्षये हेतुः। न अङ्गानि–वैक्रियौदारिकाहारकतैजसकार्मणान्येव केतुः–चिह्नं यस्य तमनङ्गकेतुम्। योगिनां–मनोवचःकायजितां चतुर्ज्ञानिनां ध्यानिनां वा ईश्वरं–नाथम्। अथवा योगिनां–सयोगकेवलिनां मान्यत्वादीश्वरम्। विदितः–अवगतः सम्यग्ज्ञानदर्शनचारित्ररूपो योगो येन। अथवा विदितो योगो ध्यानिभिर्यस्मात् तम्। अथ च विशेषेण दितः–खण्डितो योगो–जीवेन सहायःपिण्डाग्निनीरक्षीरन्यायेनात्यन्तं लग्नः कर्मसम्बन्धो येन तम्। अनेकं ज्ञानेन सर्वगतत्वात्। अथवा सिद्धानामनेकेषां एकत्रावस्थानात्। उक्तं च—

1 छाया—
सर्वनदीनां यावत्यो भवेयुर्वालुकाः सर्वोदधीनां यत् तोयम्।
ततोऽनन्तगुणितोऽर्थ एकस्य सूत्रस्य ॥

2 'सव्वोदहीण ज उदय' इति पाठः सुबोधिकायां प्रथमे व्याख्याने।

3 'नीरं' इति क–पाठः। 4 'अरिह०' इति ग–पाठः।

"जत्थ य एगो सिद्धो, तत्थ अणंता भवक्खयविमुक्का।
अन्नुन्नमणावाहं, चिट्ठंति सया सुही सिद्धा ॥ १ ॥"–आर्या

अनेकं गुणपर्यायापेक्षया वा, ऋषभादिव्यक्तिभेदाद् वा।

"नामजिणा जिणनामा, ठवणजिणा [3]हुंति देवपडिमाओ।
दव्वजिणा जिणजीवा, भावजिणा समवसरणत्था ॥ १ ॥"–आर्या

इति व्यक्त्या वा। एकम्–अद्वितीयमुत्तमोत्तमं, एकं जीवद्रव्यापेक्षया वा। ज्ञानं–क्षायिकं केवलं स्वं–स्वकीयं रूपं यस्य तं ज्ञानस्वरूपम्। सर्वकर्मक्षयादात्मस्वभावो यस्य तं ज्ञानस्वरूपं–चिद्रूपं वा। न मलानि–अष्टादश दोषा यस्य तममलम्। अथैतानि पञ्चदश विशेषणानि परदर्शनिषु तत्तद्देवाभिधानत्वेन प्रसिद्धानीति तर्कापोहः स्वबुद्ध्याऽत्र प्रामाणिकैः प्रमाणकोटिं प्रापणीयः। ( ग्रं० ८०० ) इति वृत्तार्थः ॥ २४ ॥

मे० वृ०—अथ सर्वदेवस्वरूपेणापि परमपुरुषत्वमेव द्रढयति—( त्वामव्ययमित्यादि )।

हे मुनीन्द्र!–भगवन्! सन्तः–पण्डिताः सत्पुरुषा वा त्वां अव्ययं प्रवदन्ति इत्येव एकैकं विशेषणं गृहीत्वा अन्वयः। 'प्रवदन्ति' पारम्पर्येण प्रतिपादयन्ति। 'प्रवदन्ति' इति क्रियापदम्। के कर्तारः? 'सन्तः'। कं कर्मतापन्नम्? 'त्वाम्'। किंविशिष्टं त्वाम्? 'अव्ययं' क्षयरहितं, नित्यमित्यर्थः, द्रव्यार्थिकनयापेक्षया जीवस्वरूपेण नित्यत्वात्, 'भाविनि भूतोपचार' इति न्यायेन चरमशरीरभाजः सिद्धत्वेन विवक्षणाद् वा। पुनः किंविशिष्टम्? 'विभुं' तव ज्ञानस्य विश्वप्रकाशकत्वात्, "इयत्तानवच्छिन्नपरिमाणयोगित्वं विभुत्वं" इति **नैयायिकाः**, ज्ञानस्य घटादेर्वस्तुनो ग्रहणरूपपरिणामेन केनचित् प्रकारेण साकारत्वेन विश्वव्यापकत्वस्वीकारेण जैनमतेऽपि तल्लक्षणं न दुष्टमिति, यद्वा विभवति –कर्मोन्मूलने समर्थो भवति (इति) विभुस्तम्। पुनः किंविशिष्टं त्वाम्? 'अचिन्त्यं' अनाकलनीयस्वरूपं, लोकोत्तरलिङ्गधारित्वात्, परमयोगिभिरपि तव यथास्थितस्वरूपानवधारणात्। पुनः किंविशिष्टं त्वाम्? 'असङ्ख्यं' न विद्यते सङ्ख्यं–युद्धं यस्य स तम्, यद्वा सङ्ख्यया–गुणानां गणनया रहितम्। पुनः किंविशिष्टं त्वाम्? 'आद्यं' आदिपुरुषतया प्रसिद्धं, "आदिविद्वान् सिद्धः" इति **कापिलाः**, तीर्थङ्करेष्वाद्यं–प्रथमं वा। पुनः किंविशिष्टं त्वाम्? 'ब्रह्माणं' तीर्थादिकरत्वेन धर्मसृष्टिप्रणयनाद् विधातारम्। पुनः किंविशिष्टम्? 'ईश्वरं' त्रैलोक्यपूजनीयत्वेन अनन्यतुल्यैश्वर्यधारिणं, जटाशालि-

---

१ छाया—

यत्र चैकः सिद्धस्तत्रानन्ता भवक्षयविमुक्ताः।
अन्योन्यमनाबाधं तिष्ठन्ति सदा सुखिनः सिद्धाः॥

२ छाया—

नामजिना जिननामानि स्थापनाजिना भवन्ति देवप्रतिमाः।
द्रव्यजिना जिनजीवा भावजिनाः समवसरणस्थाः॥

३ 'पुण हुंति जिणिंदपडिमाओ' इति पाठो देववन्दनभाष्ये (गा० ५१)। ४ 'प्रमाणीयः' इति ग-पाठः।

त्वेन महाव्रतित्वेन वृषभाङ्कितत्वेन **सुमङ्गला**पतित्वेन वा **ईश्वर**मिव प्रतीयमानं वा। पुनः किंविशिष्टं त्वाम्? 'अनन्तं' अन्तो—मृत्युस्तद्रहितं अनन्तं बलं **बलभद्र**माहचर्याद् **विष्णु**रूपमित्यर्थः, **रामकृष्णयो**रैक्यत्वेन प्रतीतत्वात्, अत एव—

"वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्वते।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते **कृष्णा**य तुभ्यं नमः॥ १॥"—शार्दूल०

इत्य**ष्टपद्या**मप्युक्तम्। पुनः कि० त्वाम्? 'अनङ्गकेतुं' कन्दर्पस्य नाशकत्वेन केतुतुल्यं, **बुद्ध**देवमित्यर्थः, **बुद्ध**स्य मारलोकजयित्वेन प्रसिद्धत्वात्। अत एव—

"सुगत एव विजित्य जितेन्द्रिय-
स्त्वदुरुकीर्तितनुं यदनाशयत्।
तव तनूमवशिष्टवती ततः
समिति भूतमयीमहरद् धरः॥ १॥"—द्रुतविलम्बितम्

इति **नैषधीये** (स० ४, श्लो० ८०) अपि प्रोक्तम्। पुनः किं०? 'योगीश्वरं' योगिना ध्येयं, **साङ्ख्य**मते परमर्षितया प्रसिद्धम्। पुनः कि० त्वा? 'विदितयोगं' ज्ञाताष्टाङ्गयोगमार्गं, **नैयायिक**मते **गौतमं**, **पातञ्जलि**मते **पतञ्जलिं** वा, योगमार्गवनवीथीनामुपदेशकत्वेन प्रसिद्धत्वात्। पुनः किं० त्वाम्? 'अनेकं' अनेकगुणसंयुक्तं, सृष्टिकारक**मन्वा**दिकं वा, केषाञ्चिन्मते सृष्टिकारकाणां **मन्वादी**नां अनेकत्वात्, इत्यनेन **मीमांसक**मतममतिर्दर्शिता। पुनः कि० त्वाम्? 'एकं' सङ्ग्रहनयापेक्षया जीवद्रव्यस्य एकत्वात्, अत एव "एगे आया" इति **स्थानाङ्गसूत्रम्**, परमतेऽपि—

"एक एव हि भूतात्मा, देहे देहे व्यवस्थितः।
एकधा बहुधा चैव, दृश्यते जलचन्द्रवत्॥ १॥"—अनु०

इति, अनेन **वेदान्ति**ना मतं सूचितम्। पुनः कि० त्वाम्? 'ज्ञानस्वरूपं' केवलज्ञानमयं इति, अनेन ज्ञानाद्वैतमतं दर्शितं, तेषां मते ज्ञाता ज्ञेयं च नास्ति, केवलं ज्ञानमेवेति, यद्वा शुद्धबुद्धस्वभाव इत्यौ**पनिषद**मतं ज्ञापितम्। पुन. कि० त्वाम्? 'अमलं' निर्मलं अष्टादशदोषरहितं निर्लेपमात्रं वा इति, अनेन लोकवेदविरुद्धैरपि निर्लेपः स्वतन्त्रश्चेति **महापाशुपत**मतं सूचितम्। सर्वेष्वपि दर्शनेषु तत्तन्नाम्ना तत्तथारूपाध्यवसायेन त्वामेव देवत्वेन तीर्थान्तरीयाः प्रपन्नाः सन्तीति भावः॥

**अथ समासाः**—न विद्यते व्ययो यस्य सः अव्ययस्तम्। चिन्तयितुं योग्यश्चिन्त्यः, न चिन्त्योऽचिन्त्यस्तम्। न विद्यते सङ्ख्यं सङ्ख्या वा यस्य सः असङ्ख्यस्तम्। "युद्धं तु सङ्ख्यं कलिः" (**अभि०** का० ३, श्लो० ४६०) इति **हेम**पादाः। आदौ भव आद्यस्तम्। बृहति—अनन्तानन्देन वर्धते इति

१ 'गीतगोविन्द'नाम्नाऽस्याः ख्यातिः।

ब्रह्मा तम् । न विद्यते अन्तो यस्य स अनन्तस्तम् । अनङ्गस्य केतुरिव केतुरनङ्गकेतुस्तम् । केतुर्धूमकेतुरित्युच्यते, पदैकदेशे पदसमुदायोपचारात्, धूमकेतुग्रहस्तु विनाशाय स्यादिति । योगिनामीश्वरो योगीश्वरस्तम् । विदितो योगो येन स तम् । न एकः अनेकस्तम । ज्ञानमेव स्वरूपं यस्य स तम् । न विद्यते मलः—कर्मलेपो यस्य सः अमलस्तम । गभीरार्थं च इदं काव्यं विशेषज्ञेभ्यो ज्ञेयम् ॥ इति काव्यार्थः ॥ २४ ॥

*He substantiates the supremacy of Lord Rishabha*

The good declare Thee as unperishable, omnipresent ( or powerful ), incomprehensible, innumerable ( or free from wars ), first ( in position and time ), *Brahman*, *Īśvara*, infinite, the comet in destroying the Cupid, the master of *Yogins*, well-versed in *Yoga*, many, one the embodiment of knowledge and pure. ( 24 )

* * * *

किञ्च—

बुद्धस्त्वमेव विबुधार्चितबुद्धिबोधात्
त्वं शङ्करोऽसि भुवनत्रयशङ्करत्वात् ।
धाताऽसि धीर ! शिवमार्गविधेर्विधानाद्
व्यक्तं त्वमेव भगवन् ! पुरुषोत्तमोऽसि ॥ २५ ॥

गु० वि०—हे विबुधार्चित!—शक्रमहित! बुद्धः—सप्तानामन्यतमः सुगतस्त्वमेव । कस्मात्? पदार्थेषु बुद्धिबोधात्—मतिप्रकाशात्, यतो 'बुद्धिर्भवति बौद्धेषु'। अथ सत्यार्थो बुद्धस्त्वमेव, धर्मे बुद्धिप्रकटनाद्, वा विबुधा—विशिष्टपण्डिता—गणधरास्तैरर्चितस्तीर्थंकरस्तस्य बुद्धिः—केवलज्ञानं तया बोधो—वस्तुस्तोमस्य परिच्छेदस्तस्माद् विबुधार्चितबुद्धिबोधात् त्वमेव बुद्धो—ज्ञाततत्त्वो भवसि । यतो बुद्धः स्वमांसदानेन वृथा कृपालुरिति । हे देव! शं—सुखं करोतीति शङ्करः, स यथार्थनामा त्वमसि, भुवनत्रयशङ्करत्वात्—त्रिलोकीसुखकारित्वात् । स शङ्करो रुद्रः कपाली नग्नो भैरवः संहारकृत्, ( अतः ) न शङ्करः । हे धीर! दधातीति धाता—स्रष्टा त्वमेव कृतार्थनामा, शिवमार्गविधे रत्नत्रयरूपनियोगस्य विधानात्—करणात् । स ब्रह्मा जडो वेदोपदेशात् नरकपथमुदजीघटत् । हे भगवन्! व्यक्तं—प्रकटं पुरुषोत्तमस्त्वमेवासि शक्तिमति (त्?) प्रकृष्टपुरुषेषूत्तमः। यत आजन्मासौ परार्थव्यसनी उचितक्रियावान् अदीनमनाः कृतज्ञो दृढप्रतिज्ञो गम्भीर इति । स विष्णुः पुरुषोत्तमत्वं कृतार्थं न धत्ते, क्वापि क्वापि कपटप्रकटनाद् बलिच्छलनादिषु गोपीषु च । इति वृत्तार्थः ॥ २५ ॥

१ '०धार्चित ! बुद्धि०' इत्यपि पदच्छेदः ।

अत्र गरिमोद्गिरणं यथा—

"जितशत्रुस्त्रियोऽभूवन्-न साध्या व्यन्तरैश्च याः।
ताश्च सज्जीकृताः स्वांह्रि-वारिणा शान्तिसूरिणा ॥ १ ॥"

तथाहि—

"पुरा शौर्यपुरस्थाने, जितशत्रुरभून्नृपः।
नीतिकन्दो भुजावीर्य-पराजितपराहवः ॥ १ ॥-अनु०
द्वासप्ततिरभूद् रम्भा-प्रभाऽसुरसुरश्रियाम्।
पुरजिद्दाररूपाणां, तस्यान्तःपुरयोषिताम् ॥ २ ॥
आक्रीडे क्रीडितु पुष्पा-पीडाः क्रीडाचले ययुः।
मेराविवोर्वशीमुख्याः, सर्वास्ताः शर्वरीशभाः ॥ ३ ॥
छलं लब्ध्वा क्षुद्रभूतै-र्ग्रस्ता अस्तात्मचेतनाः।
सौधमानिन्यिरे राज्ञा, यानारूढा गतप्रभाः ॥ ४ ॥
दुष्टव्यन्तरदोषेण, सकला विकलाङ्गकाः।
निश्चेष्टाः समकालं ता, आसन् पाञ्चालिका इव ॥ ५ ॥
त्वरितं त्वरितं राजा-ऽचीकरद् रुक्प्रतिक्रियाः।
वैद्यानां मान्त्रिकाणां च, तान्त्रिकाणां विपश्चिताम् ॥ ६ ॥
बौद्धा आकारिताः शैवाः, सांख्या वैशेषिकास्तथा।
वैदिका विदुराश्चक्रुः, स्वस्वाम्नायप्रकाशनम् ॥ ७ ॥
न जातः कोऽपि तैः सर्वे-रुपकारो नृपौकसि।
भाग्यनाशे यथाऽऽरब्धो, व्यवसायोऽफलो नृणाम् ॥ ८ ॥
मास्येकस्मिन् व्यतिक्रान्ते, शान्तिसूरिर्गणी गुणी।
विहृतस्तां पुरीं पौरै-रभिगम्य प्रवेशितः ॥ ९ ॥
प्रभुर्भक्तामरस्तोत्र-चतुर्विंशादिवृत्ततः।
सिद्धचक्रेश्वरीक्लृप्त-महाशक्तिसमन्वितः ॥ १० ॥
विचेताश्चिन्तया भूपो, न चाकारयति स्म तान्।
प्रभावनां कर्तुकामा-नपि राज्ञीचिकित्सया ॥ ११ ॥
ततोऽवधूतवेषेणा-भ्राम्यन्नृपगृहान्तिके।
निर्दोषं नीरुजं ग्लास्नुं, करोमीति वदन् विभुः ॥ १२ ॥
आकर्ण्य तद्वचो राजा, सूरीनाकार्य कार्यवित्।
हैमे पीठे निवेश्योच्चै-रन्तःपुरमदीदृशत् ॥ १३ ॥

१ 'प्रभासुरपुर०' इति ख-पाठ.। २ 'पुरजिद्दर०' इति ग-पाठ.।
३ गृहोद्याने। ४ चन्द्रकान्तयः। ५ ग्लानियुक्तम्।

प्रसद्य भगवन्! सद्यो, राज्ञीजीवितदानतः ।
मम जीवसमुद्धारं, कुरु राज्यं गृहाण च ॥ १४ ॥
इति विज्ञापितः सूरि-र्दूरीकृत्य पुराकृतान् ।
रक्षौषधिमणीयन्त्र-कण्डकांस्तत्तनुस्थितान् ॥ १५ ॥
आनाय्य नीरं प्रक्षाल्य, स्वांह्री गुरुभिरर्पितम् ।
राज्ञोपात्तं प्रहृष्टेन, दुःस्थितेनेव शेवधिः ॥ १६ ॥
अम्बुनः सेवनात् पाना-चक्रायाश्च प्रभावतः ।
प्रणेशुर्व्यन्तराः क्रूराः, सूरादिव दिवाऽन्धकाः ॥ १७ ॥
द्वासप्ततिः स्फुरद्वेष-भूषणा गतदूषणाः ।
निर्मिता नृपसुन्दर्यः, शान्तिसूरिमुनीन्दुना ॥ १८ ॥

(ततः) गुरुपार्श्वे धर्ममश्रौषीत् सपरिवारो नृपः । यथा—

ज्ञानादित्रितयोच्चशालकलितं शीलाङ्गसंज्ञैः पुरः
सत्सूत्रैः कपिशीर्षकैः परिगतं दानादिसद्गोपुरम् ।
क्षान्त्याद्युच्चदशप्रकारविलसद्यन्त्रं शमाम्भोनिधिं
भीताः कर्मरिपोः श्रयध्वमधुना सद्धर्मदुर्गं जनाः ! ॥ १९ ॥–शार्दूल०
इति श्रुत्वा नरेन्द्रेण, जैनो धर्मः समादृतः ।
सकले मण्डले क्लृप्ता, जीवरक्षा शुभावहा ॥ २० ॥–अनु०
राज्ञीभिश्च गुरोः पार्श्वे, प्रपेदे धर्ममार्हतम् ।
विशुद्धभावनाराजि-चेतोभिः पञ्चमीतपः ॥ २१ ॥
प्रासादान् कारयामास, जैनानुत्तुङ्गतोरणान् ।
जिनार्चानां प्रतिष्ठाश्च, गुरुवाक्याज्जनेश्वरः ॥ २२ ॥
प्रभावनां जैनमतस्य कृत्वाऽ-
सौ साधवीं धर्मधुरं च धृत्वा ।
दिवं ययौ शुद्धसमाधिभव्यः
श्रीशान्तिसूरिः सुरराजसेव्यः ॥ २३ ॥–उपजातिः

॥ इति षोडशी कथा ॥

मे० वृ०—अथ बाहुल्येन प्रसिद्धदेवस्वरूपेण वर्णयन्नाह—(बुद्धस्त्वेत्यादि)।

हे धीर! त्वमेव बुद्धोऽसि इत्यन्वयः । 'असि' इति क्रिया० । कः कर्ता ? 'त्वम्' । किंविशिष्टः ? 'बुद्धः' बुद्धनामा बौद्धानां देवः, कृष्णस्य बुद्धावतारो वा । एवकारो अत्र निर्णये । कस्मात् ?

१ 'प्रसादतः' इति ख-पाठः । २ 'तयोच्चशाल०' इति ग-पाठः । ३ 'गतदूषणं' इति ग-पाठः ।

'विबुधार्चितबुद्धिबोधात्' विबुधैः—पण्डितैर्देवैर्वा अर्चिता—सम्मानिता या बुद्धिः—ज्ञानं तस्य (बोधात्—) प्रकाशात्, यथार्थतया बुद्धत्वं त्वयि एव घटते इत्यर्थः । हे धीर! त्वं **शङ्करोऽसि** इत्यन्वयः प्राग्वत् । [ किंविशिष्टः शङ्करः ईश्वरः ]। कस्मात्? 'भुवनत्रयशङ्करत्वात्' जगत्त्रितयसुखकारित्वात् । हे धीर! त्वं धाताऽसि । कस्मात्? 'शिवमार्गविधेर्विधानात्' मोक्षमार्गरूपो यो विधिः—धर्माचारः तस्य निष्पादनात् । हे भगवन्! त्वं पुरुषोत्तमः व्यक्त—प्रकटमेव असि, सर्वपुरुषेषु त्वत्तो नान्यः पुरुषोत्तमः, जगद्वन्द्यत्वेन त्वं पुरुषोत्तमो निश्चीयत एवेति न तत्र हेतोरपेक्षा इति, अनेन **शिव** इति **शैवाः**, **पुरुषोत्तम** इति **वैष्णवाः**, **पितामह** इति **पौराणिकाः**, **सर्वज्ञो बुद्ध** इति **बौद्धा** इत्युपासते, तेऽपि त्वामेव प्रपन्नाः सन्तीति सूचितम् ॥

**समासा यथा**—विबुधैरर्चिता विबुधार्चिता, सा चासौ बुद्धिश्च विबुधार्चितबुद्धिस्तस्य बोधो विबुधार्चितबुद्धिबोधस्तस्मात् । शं—सुखं करोतीति शङ्करः, भुवनानां त्रयं भुवनत्रयं, तस्य शङ्करो भुवनत्रयशङ्करस्तस्य भावो शङ्करत्वं तस्मात् । शिवस्य मार्गः शिवमार्गः, तस्य विधिः शिवमार्गविधिस्तस्य । भगो—ज्ञानं अस्यास्तीति भगवान्, तस्यामन्त्रणं हे भगवन्! । पुरुषेषु उत्तमः पुरुषोत्तमः ॥ इति काव्यार्थः ॥ २५ ॥

*He gives out his decision*

Thou alone art *Buddha*, because the gods have worshipped the enlightenment of Thy knowledge. There is no other *Sankara* than Thee, for Thou (alone) bestowest happiness to the three worlds. Oh Intelligent Being! Thou alone art the Creator (*Brahman*), for, Thou hast pointed out the path leading to liberation. Oh Divine Being! it is quite evident that Thou alone art the best of men (*Purushottama* i. e. *Nārāyana*) (25)

❀ ❀ ❀ ❀

अथ पुनर्जिनं नमन्नाह—

तुभ्यं नमस्त्रिभुवनार्तिहराय नाथ!
तुभ्यं नमः क्षितितलामलभूषणाय ।
तुभ्यं नमस्त्रिजगतः परमेश्वराय
तुभ्यं नमो जिन! भवोदधिशोषणाय ॥ २६ ॥

गु० वि०—हे नाथ! तुभ्यं—भवते नमः । तुभ्यमत्रैकवचनकरणात् सर्वदेवपरिहारेण भगवते एकस्मै नमः—नमस्कारोऽस्तु । नतौ नमम्शब्दोऽव्ययः । किंभूताय? त्रिभुवनार्तिहराय—सद्वचःकरणाभ्यां विश्वत्रयपीडानाशनाय । यः सर्वेषां कृच्छ्रहन्ता स एव वन्द्यः। हे स्वामिन्! तुभ्यं नमोऽस्तु । क्षितितलस्य—भूपीठस्य अमलभूषणाय—निर्मलालङ्काराय ।

यो विमलकलया भुवनमलङ्कुरुते स नमस्यः। अथ (वा) क्षितिः-पृथ्वी तलं-पातालं अमलं-स्वर्गस्तेषां त्रयाणां लोकानां भूषणाय। हे ईश! तुभ्यं नमोऽस्तु। त्रिजगतः-त्रैलोक्यस्य परमेश्वराय-प्रकृष्टनाथाय। यो जगदीशः स नम्य एव। हे जिन! तुभ्यं नमोऽस्तु। भवोदधिशोषणाय-संसारसागरसन्तापनाय। यो दुरन्तं संसृतिजलधिं शोषितवान् स नमस्कारार्ह एव इति। वृत्तार्थः॥ २६॥

मन्त्रोऽपि—

ॐ श्रीं ह्रीं क्लीं महालक्ष्म्यै नमः। सुरभिमद्यस्कपीतपुष्पैर्लक्षजापात् सिद्धिः।

महिम्नि कथा—

श्रेष्ठी चनिकनामा यः, पत्तने दुर्गतोऽभवत्।
'तुभ्यं नमो'नमस्कारा-च्छ्रिया स्वर्णपतीकृतः॥ १॥-अनु०

श्रीअणहिल्लवाटके श्रीमालवंश्यो निःस्वो वणिगवसत्। स परिसरग्रामेभ्यः शिरःपुट्टलकैश्चनकविक्रयणाचनिक इति प्रतीतः। तस्यैकदा ग्रामं गच्छतो मार्गे श्रीउद्योतनसूरयो गुरवो मिलिताः। तेन भक्तिपूर्वं वन्दिताः। गुरुभिर्धर्मपृच्छा कृता। तेनोक्तम्-प्रभो! दौःस्थ्ये को धर्मनिर्वाहः? सर्वत्र पराभूयते दरिद्रः। उक्तं च—

"पंथ[१]समा नत्थि जरा, दारिद्दसमो पराभवो नत्थि।
मरणसमं नत्थि भयं, छुहासमा वेयणा नत्थि॥ १॥"-आर्या

गुरुभिरूचे—

"धर्माद् धनं धनत एव समस्तकामाः
कामेभ्य एव सुखमिन्द्रियजं समग्रम्।
कार्यार्थिना हि खलु कारणमेषणीयं
धर्मो विधेय इति तत्त्वविदो वदन्ति॥ १॥"-वसन्त०

इति स्तवस्य षड्विंशं वृत्तं भाणंभाणं पञ्चासरपार्श्वदेवो नमस्करणीयः। शक्तितस्त्यागतपसी भवतः। शीलमित्याङ्गिको गुणः पालनीयः। महालक्ष्मीमन्त्रश्च जप्य इति। सोऽवदत्-सर्वमेतत् करिष्ये। गुरून् नत्वा स्वकृत्ये लग्नः। 'तुभ्यं नमो'भणनपूर्वं पार्श्वं नित्यं ववन्दे। नमस्काराष्टशतमजपत्। परजनीं जननीभगिनीवदमंस्त। यत्र ग्रामे चनकार्थं वव्राज तदन्तरा युगादिदेवभक्ता महालक्ष्मीमूर्तिः। आगच्छन् गच्छन् तां नमोऽकरोत्। एवं कुर्वतः षण्मासी गता। अन्येद्युर्मध्याह्ने श्रीप्रासादे दिव्याभरणवसनां सहसनां कुङ्कुमादिकृताङ्गरागां सरागामङ्गनामपश्यत्। सा तमाह-भो पोट्टलिक! किं करोषि?। स आह-

१ छाया—

पन्थसमा नास्ति जरा दारिद्र्यसमः पराभवो नास्ति।
मरणसमं नास्ति भयं क्षुधासमा वेदना नास्ति॥

देवीं नमस्करसि। साऽऽह–किं मोघेन श्रीनमनेन? स्वयंवरां मामङ्गीकुरु, भज भोगान्, त्यज दौःस्थ्ययोगान्। स आह स्म–त्वं मे माता, एतन्नर्मणाऽपि न वाच्यम्, कर्मणा किमुच्यते? । परस्त्रियो जनन्यो मे व्रतमस्ति । पुनः पुनरुक्त्या प्रत्युक्त्या स उक्तोऽपि नाचलच्छीलात्। श्रीः साक्षाद्भूयाभाषत–वत्स! तुभ्यं नमोवृत्तजपनतुष्टचक्रायाः सख्या वचनात् परीक्षितोऽसि, वरं वृणु। तेनोचे–नैःस्व्यं निर्गमय। देव्योक्तम्–अद्य सन्ध्यां यावच्चनकाः क्रीत्वा कोष्ठिकासु स्थाप्याः प्रातः (ते) कनकीभविष्यन्ति । इत्युक्त्वाऽन्तरधत्त श्रीः। तेन सञ्चिताश्चनकाः। गृहमागतेन कोष्ठिकात्रयं भृतम्। विभाते स्वर्णमया बभूवुः। स स्थालं भृत्वा वृद्धभीमदेवराजस्य प्राभृतीचक्रे। विस्मितेन राज्ञा पृष्टः–किमर्थं कनकचनकघटनम्? । चनिकोऽवोचत् श्रीवरदानादिप्रबन्धम् । राज्ञा तत् तस्य प्रसादीकृतम्। सौधार्थं भूर्लब्धा। नव्यं गृहं कारितं चक्रायुतश्रीयुगादीशप्रासादश्च । लक्ष्मीप्रासादोऽप्युद्धृतः । क्रमेण तीर्थयात्रामसूत्रयत् । नित्यं त्यागभोगयुतः सुखभाजनमभूच्चनिकः श्रेष्ठिमुख्यः॥

॥ इति सप्तदशी कथा ॥

मे० वृ०—सर्वदेवस्वरूपत्वं व्याख्याय भगवतो नमस्कारं कुर्वन् निर्णयमुद्घोषयति—(तुभ्यमित्यादि)।

हे नाथ! तुभ्यं नमः। अस्त्विति शेषः। 'अस्तु' इति क्रिया०। किं कर्तृ? 'नमः' प्रणामः। कस्मै? 'तुभ्यं' भवते। नमःशब्दयोगे चतुर्थी। किंलक्षणाय तुभ्यं? 'त्रिभुवनार्तिहराय' त्रिजगतः पीडानिवारकाय, बाह्या–रोगादयः आन्तराः–कर्मोद्भवाः पीडास्तासां तव नाम्ना विनाशात् । पुनः हे नाथ! तुभ्यं नमः । किंविशिष्टाय तुभ्यम्? 'क्षितितलामलभूषणाय' भूलोकालङ्करणाय । पुनः हे नाथ! तुभ्यं नमः। किंविशिष्टाय? 'त्रिजगतः परमेश्वराय' त्रैलोक्यनायकाय । पुनः हे जिन! तुभ्यं नमः। कथंभूताय? 'भवोदधिशोषणाय' संसारसागरलाघवकारकाय। एतद्विशेषणचतुष्टयेन अर्हतोऽसाधारणधर्मरूपं लक्षणं निवेदितं, परमताङ्गीकृतदेवेषु तथास्वरूपाभावात्॥

समासा यथा—त्रयाणां भुवनानां समाहारः त्रिभुवन, पात्रादित्वान्न ईप्, त्रिभुवनस्य आर्तिस्त्रिभुवनार्तिस्ता हरतीति त्रिभुवनार्तिहरस्तस्मै। क्षितेस्तलं क्षितितलं, अमलं च तद् भूषणं च अमलभूषणं, क्षितितले अमलभूषणमिव क्षितितलामलभूषणं तस्मै। 'मिहाद्यैः पूजायाम्' (अ० ३, पा० १, सू० ८९) इति हैमवचनात् तत्पुरुषः। त्रयाणां जगतां समाहारस्त्रिजगत्, द्विगुः (तस्य)। परमश्चासावीश्वरश्च परमेश्वरस्तस्मै । उदधिरिव उदधिः, भवश्चासौ उदधिश्च भवोदधिः, उपमितिसमासः, 'उपमेयं व्याघ्राद्यैः' (अ० ३, पा० १, सू० १०२) इति हैमवचनात्। भवोदधेः शोषणं यस्मात् स भवोदधिशोषणः, तस्मै॥ इति काव्यार्थः॥ २६॥

---

१ 'रुक्मिग्रस्तु०' इति क–ग–पाठः। २ 'गृहागतेन' इति क–पाठः।

*He conclusively bows to God.*

Oh Lord ! obeisance to Thee, the destroyer of the miseries of the three worlds. Obeisance to Thee, the pure jewel on the surface of the earth (or the unsullied ornament of the mortal, nether and celestial worlds ). Obeisance to Thee, the Supreme Lord of the three worlds Oh *Jina* ! adoration to Thee that hast dried up the ocean of mundane existence ( 26 )

* * * *

पुनर्युक्त्या गुणान् स्तौति—

को विस्मयोऽत्र यदि नाम गुणैरशेषै-
स्त्वं संश्रितो निरवकाशतया मुनीश ! ।
दोषैरुपात्तविविधाश्रयजातगर्वैः
स्वप्नान्तरेऽपि न कदाचिदपीक्षितोऽसि ॥ २७ ॥

गु० वि०—हे मुनीश ! यदीत्यङ्गीकारे । नामेत्यामन्त्रणे । हे सकर्णा ! अस्माभिरङ्गीकृतोऽयमर्थः, निरवकाशतया-पञ्चास्तिकायरुद्धलोकमध्यवर्त्तिरन्तर्येण सर्वाङ्गव्यापकतया पुरुषान्तरेऽनवस्थानतया अशेषैः–सर्वगुणैः त्वं संश्रितः–आशिश्रियिषे । अत्रार्थे को विस्मयः ?–किं कुतुकम् ? । अन्यच्च दोषैः–दूषणैः स्वप्नान्तरेऽपि–स्वप्नावस्थायामपि कदाचिदपि–कस्मिंश्चिदपि क्षणे नेक्षितोऽसि–न दृष्टोऽसि–न विलोकितोऽसि । अत्रापि को विस्मयः ?–किमाश्चर्यम् ? यतो गरुडदर्शनाद् भुजगा इव सूर्येक्षणात् तमश्चया इव तीर्थकराद् दूरतो नेशुर्दोषाः । किंभूतैः दोषैः ? उपात्तैः–गृहीतैः–प्राप्तैर्विविधैः–नानारूपैराश्रयैर्जात–उत्पन्नो गर्वः–वयं सर्वजनाश्रयाः गुणा जिनाश्रया एवेतिरूपो दर्पो येषां तैः । अथच(वा) उपात्तः–स्वीकृतो विविधानाम्–अनेकेषां विबुधानां–देवानां वा आश्रयः–आश्रयणं तस्माज्जातो–भूतो गर्वः–अहङ्कारो येषां तैः । भगवद्अङ्गे गुणानां निरन्तराश्रयाद् दोषाणामभावात् कवेरित्युक्तिः । पूर्वं 'सम्पूर्णमण्डल'वृत्ते गुणानां त्रिभुवनव्यापकत्वं कीर्त्तिद्वारेणोक्तम् । साम्प्रतं त्वदाश्रया एव गुणाः ( इति ) न पौनरुक्त्यम् । इति वृत्तार्थः ॥ २७ ॥

मन्त्रोऽयम्—

ॐ नमो ऋषभाय मृत्युंजयाय सर्वजीवशरणाय परमब्रह्मणेऽष्टमहाप्रातिहार्यसहिताय नागभूतयक्षवशंकराय सर्वशान्तिकराय मम शिवं कुरु कुरु स्वाहा । वार २१ स्मरणात् क्षुद्रोपद्रवनाशो वाञ्छितलाभश्च ॥

प्रभावे कथा यथा—

रुद्रोऽप्यदृश्यतां यातः, स्वप्नेऽपि ददृशे नहि ।
शातवाहनभूपस्य, पुत्रोऽभूज्जिनसेवया ॥ १ ॥–अनु०

१ '०त्तविबुधाश्रय०' इत्यपि पाठः ।

'गोदावरी'रोधसि दक्षिणस्यां
दिशि 'प्रतिष्ठानपुरं' समस्ति ।
श्रीहालभूपोऽजनि तत्र वीर-
स्त्यागी गुणी सर्वकलश्च भोगी ॥ २ ॥–उपजातिः

तस्यावरोधेऽपि महत्यपत्यं
नासीत् ततोऽखिद्यत भूमिपालः ।
बहूनुपायान् मणिमूलमन्त्रान्
व्यरीरचन्नाप सुतोद्भवं तैः ॥ ३ ॥

पुरोधसोक्तः कुशसंस्तरस्थः
स्नातो व्रती त्रिंशदहानि भूपः ।
हरं समाराधयदर्चनाद्यै-
र्दृष्टो न स स्वप्नगतोऽपि तेन ॥ ४ ॥

हरार्चनाद् राजमनो निवृत्तं
पुरा कृते कर्मणि च प्रवृत्तम् ।
परेद्यविर्जैनमुनिं प्रणम्य
पप्रच्छ पुत्रो भविता न वा मे ॥ ५ ॥ (ग्रं० १००)

भक्तामरस्तोत्रजपं तपस्वी
समादिदेशादिविभुप्रभावात् ।
चक्रेश्वरी ते च वरं सुतार्थं
प्रदास्यति क्षोणिप! मा विषीद ॥ ६ ॥

अथादिदेवं कमलादिपुष्पै-
रानर्च चक्रां विरचय्य चित्ते ।
को विस्मयोऽत्र स्मरणक्षणे श्री-
हालो वरं प्राप दिनत्रयान्ते ॥ ७ ॥

पुष्पस्रजं लाहि महीशराज्ञी-
कण्ठे निवेश्या सुतजन्मनेऽसौ ।
चक्रावचोऽश्रदस्तनिताच्छिखीवा-
मुष्मात् तुतोषान्तरधाच्च देवी ॥ ८ ॥–इन्द्रवज्रा

पूजाविधेर्ढौकनिकागतायै
स्रजं प्रियायै व्यसृजत् प्रजेशः ।

तद्धारणाद् दोहदलक्षणं सा
मुक्ताफलं शुक्तिमिवाशु दध्रे ॥ ९ ॥—उपजातिः
प्राचीव भानुं नरदेवदेवी
प्रासूत सूनुं समये सुदीप्तम् ।
व्यधान्नृपो जन्ममहं च चक्रा-
दासं च नाम्नेति समं वरासेः ॥ १० ॥

कलाः स शुक्लप्रतिपच्छशीव
गृह्णन् विवृद्धिं वपुषा च पुष्णन् ।
मुष्णंस्तमस्तापततिं जगत्या
रराज सद्वृत्ततया कुमारः ॥ ११ ॥

तरंस्तरण्याऽथ नृपस्तरङ्गिण्यीं
ददर्श मीनं प्रहसन्तमुच्चकैः ।
अपृच्छदार्तश्चतुरांस्त ऊचिरे
प्रजाभिये स्याद् विकृतस्य दर्शनम् ॥ १२ ॥—उपेन्द्रवज्रा

न तद्गिरा मोऽथ धृतिं दधार
नितान्तमन्तर्विभयाञ्चकार ।
अन्येद्युरुद्यानमसौ ससार
जैनं मुनिं तत्र नमश्चकार ॥ १३ ॥—उपजातिः

पृष्टोऽथ राज्ञा झषहास्यहेतु-[2]
मुवाच वाचंयमसत्तमस्तम् ।
उभावभूतामिह दारुभार-
वाहौ पुरे निर्धन-तद्धनाह्वौ ॥ १४ ॥

तावेकदा काष्ठकृते वनं गतौ
मैत्रीयुतौ सक्तुकमात्रशम्बलौ ।
मूर्त्या कृशं धर्मतपोऽकृशं भृशं
श्वेताम्बरं साधुमथो अपश्यताम् ॥ १५ ॥—[3]इन्द्रवंशा

मासोपवासव्रतपारणार्थिने-
ऽमुष्मै वितीर्णं तनु सक्तुभोजनम् ।
बीजं सुभूमाविव भावपाथसा
सिक्तं महत्पुण्यकणाय जायते ॥ १६ ॥—इन्द्रवंशा

---

१ अत्र समस्तपादान्तेऽनुप्रासः । २ मत्स्यहास्यकारणम् । ३ इन्द्रवंशालक्षणम्—"तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ" ।

स निर्धनस्तद्धनमित्युवाच
  स स्माह चैनं मम नात्र भावः ।
कष्टादुपात्तं निजवस्तु दत्तं
  प्रत्यक्षहानिः कथमेष लाभः? ॥ १७ ॥-युग्मम

तत् सर्वथाऽहं निजसक्तुभाग-
  मस्मै न दास्यामि शरीरपुष्टयै ।
भोक्ष्ये स्वयं दानगुणेन कीर्ति
  लभेत लक्ष्मीपतिरेव नान्यः ॥ १८ ॥–उपजातिः

इति ध्वनन्तं तमुपेक्ष्य तद्धनं
  स निर्धनस्तस्य निपत्य पद्द्वये ।
तपस्विने स्वीयविभागसक्तुकान्
  ददे सुभक्त्या मुमुदे च चेतसा ॥ १९ ॥–वंशस्थम्

वनान्तवर्ती किल कश्चनामर-
  स्तदा मुदाऽश्लाघत साधु साध्वहो! ।
प्रदानमेतेन कृतं प्रणम्य तौ
  ततो गतौ सञ्चितपुण्यपातकौ ॥ २० ॥–वंशस्थम

यत उक्तं च—

समानेऽपि हि दारिद्र्ये, चित्तवृत्तेरहोऽन्तरम् ।
अदत्तमिति शोचन्ते, न लब्धमिति वाऽपरे ॥ २१ ॥-अनु०

निर्धनो दानमभूषयत् । उक्तं च —

आनन्दाश्रूणि रोमाञ्चो, बहुमानं प्रियं वचः ।
किं वाऽनुमोदना पात्र-दानभूषणपञ्चकम् ॥ २२ ॥–अनु०

कालक्रमान्मृत्युमवाप्य भद्र-
  स्वभावधीर्निर्धनधार्मिकाग्र्यः ।
दानावनीशादधनत्वबन्दे-
  र्मुक्तः क्षणेन क्षितिपत्वमाप ॥ २३ ॥-उपजातिः

पृथ्वीपतिश्रीधनवाहनात्मजः
  पाथोधिरोधोगतवाहवाहनः ।
स त्वं प्रभुत्वोदयमेघवाहनः
  क्षोणीश्वरोऽभूर्भुवि ज्ञातवाहनः ॥ २४ ॥–इन्द्रवंशा

---

१ अत्रोपजातिश्छन्दः । २ पाथोधितटे गत वाहानाम्-अश्वानां वाहनं यस्य सः ।

विक्रीय दारूण्युदरम्भरिर्यः
स तद्धनस्तद्धनतां दधानः ।
ध्यानेन चार्तेन मृतस्तिमित्वं
गोदाजले प्रापदसातधाम ॥ २५ ॥–उपजातिः

बेडाधिरूढं चिरकालदृष्टं
भवन्तमारादवलोक्य जाता ।
जातिस्मृतिस्तस्य झषस्य दान-
साक्षी सुरो बाढमहासयत् तम् ॥ २६ ॥–उप०

आस्तां समौ पूर्वभवेऽल्पकस्य
दानाददानादधुना युवां तौ ।
एको नृपोऽन्यश्च तिमिस्तदेषा
पुण्यांहसोर्व्युष्टिरिति प्रतीता ॥ २७ ॥–उप०

ज्ञातं त्वया यत् क्षितिपाल! सत्यं
स संञ्चारी मम कष्टकारी ।
आत्माशिहास्यात् तदहो न ते भी-
र्न देशमैन्यादिभयं कदाचित् ॥ २८ ॥–उप०

अन्यैरप्युक्तं च—

मीनानने प्रहसिते भयभीतिमाह
श्रीशातवाहनमृषिर्भवताऽत्र नद्याम् ।
यत्सक्तुभिर्मुनिरकार्यत पारणं प्राक्
दैवाद् भवन्तमुपलभ्य झषो जहास ॥ २९ ॥–वसन्त०

सुपात्रदानस्य फलं विशालं
विभाव्य नित्यं तदिदं प्रदेयम् ।
अदत्तदानाश्च जनाः पृथिव्यां
न रूपसौभाग्यसुखादिभाजः ॥ ३० ॥–उपेन्द्रवज्रा

उक्तं च—

दानं महिमनिदानं, कुशलनिधानं कलङ्ककरिसिंहः ।
श्रीकलकण्ठीचूतः, सिद्धिवधूसङ्गमे दूतः ॥ ३१ ॥–आर्या

अन्यच्च—

पूजामाचरतां जगत्त्रयपतेः सङ्घार्चनं कुर्वतां
तीर्थानामभिवन्दनं विदधतां पुण्यं वचः शृण्वताम् ।

१ मत्स्यत्वम् । २ फलम् । ३ मत्स्यः । ४ मत्स्यहास्यात् । ५ उपेन्द्रवज्रालक्षणम्–"उपेन्द्रवज्रा जतजास्ततो गौ" ।

सद्दानं ददतां तपश्च चरतां सत्त्वानुकम्पाकृतां
येषां यान्ति दिनानि जन्म सफलं तेषां सुपुण्यात्मनाम् ॥ ३२ ॥–शार्दूल०

इत्थं महामुनिमुखादुपदेशमालां
श्रुत्वा च पूर्वभवसङ्कृतमात्मवृत्तम् ।
सम्यक्त्वशोभितमुपासकशुद्धधर्मं
श्रीशातवाहननृपो नितरामुवाह ॥ ३३ ॥–वसन्त०

श्रीसिद्धाद्रौ श्रीयुगादीशवेश्मो-
द्धारं चक्रे तीर्थयात्रां च चित्राम् ।
श्रीहालाह्वो जैनभूपस्ततोऽभूत्
चक्रादासः क्षोणिचक्राधिराजः ॥ ३४ ॥–शालिनी[1]

महाराष्ट्रेषु देशेषु, प्रतिष्ठानपुरे निजे ।
मुनिसुव्रतचैत्यस्यो–द्धारं चक्रे स जैनराट् ॥ ३५ ॥–अनु०

॥ इत्यष्टादशी कथा ॥

**मे० वृ०**—अथ जन्मभाजो गुणदोषसाहचर्यात् कथं परमपुरुषत्वं वृषभजिने भवतीत्याशङ्कां निरस्यन्नाह—( को विस्मयोऽत्रेत्यादि ) ।

हे मुनीश ! नामेति कोमलामन्त्रणे, यदि त्वं अशेषैः गुणैः संश्रितः–आश्रितः इत्यन्वयः । 'संश्रितः' इति क्रिया० । कैः कर्तृभिः ? 'गुणैः' विशुद्धधर्मैः । कः कर्मतापन्नः ? 'त्व' भगवान् । किंविशिष्टैः गुणैः ? 'अशेषैः' समस्तैः स्वभावजैः ज्ञानादिभिः विभावजैरौदर्यादिभिः । कया ? 'निरवकाशतया' निःस्थानकभावेन, तव तुल्यस्य अन्यस्य अभावात्, स्थानं विना तादृशा गुणाः क तिष्ठन्तीति भावः । हे मुनीश ! दोषैः रागद्वेषमोहादिभिः स्वप्नान्तरेऽपि कदाचिदपि न ईक्षितः असि इत्यन्वयः । 'असि' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । किंविशिष्टः ? 'ईक्षितः' । कैः कर्तृभिः ? 'दोषैः' । किं० दोषैः ? 'उपात्तविविधाश्रयजातगर्वैः' प्राप्तनानास्थानसमुत्पन्नदर्पैः । कस्मिन् ? स्वप्नान्तरेऽपि' स्वापावस्थायामपि । कथम् ? 'कदाचिदपि' कस्मिन्नपि काले । दोषरूपाः पुरुषास्त्वां निद्रायामपि न अपश्यन्नित्यर्थः । द्वौ अपिशब्दौ निर्णये स्तः । हे मुनीश ! अत्र वार्ताद्वयेऽपि विस्मयः कः स्यात् ? अपि तु न कोऽपि स्यादित्यन्वयः । 'स्यात्' इति क्रियापदम् । कः कर्त्ता ? 'विस्मयः' आश्चर्यं, प्रागुक्तलक्षणे वीतरागे त्वयि वार्त्ताद्वयस्य प्रमाणसिद्धया(स्थित्या) प्रतीतेरिति भावः, **ऋषभो** भगवान् परमः पुमान् तमोनाशकत्वमृत्युंजयत्वादिगुणयुक्तत्वात् सम्प्रतिपन्नवदित्यनुमाने जन्यत्वोपाधेः परैर्दत्तस्य व्याप्तिविघटनाय पुनरनुमानान्तरमत्र सूचितम्—**ऋषभो** भगवान् परमः पुमान् सकलज्ञानादिगुणवत्त्वाद् निर्दोषत्वाद् वेति, जन्यत्वमुपाधिः संदिग्ध इति ज्ञेयं, तथा च **ऋषभो**

---

1 शालिनीलक्षणम्—
"मा तौ गौ चेच्छालिनी वेदलोकैः" ।

न परमपुरुषः अम्पत्वादिति प्रत्यनुमानं तुच्छं, विपक्षे बाधकतर्काभावात्, वर्द्धमानो न सर्वज्ञः वक्तृत्वात् रथ्यापुरुषवदित्यनुमानप्रयोगवदित्यन्यत्र विस्तरः ॥

**समासा यथा**—न विद्यते शेषं येषां ते अशेषाः तैः । अवकाशान् निर्गता निरवकाशाः, तेषां भावो निरवकाशता तया । मुनीनां ईशो मुनीशः, तस्यामन्त्रणे हे मुनीश ! । विशिष्टा विधाः—प्रकारा येषां ते विविधाः, ते च ते आश्रयाश्च विविधाश्रयाः, उपात्ताश्च ते विविधाश्रयाश्च उपात्तविविधाश्रयाः, तैर्जातो गर्वो येषां ते तथा तैः । स्वप्नस्य अन्तरं स्वप्नान्तरं तस्मिन् । "नामप्राकाश्यकुत्सयोः" इत्यनेकार्थः । अत्र केचित् स्वप्नस्य भगवति सम्बन्धं विधाय स्वप्ने सत्यपारमैश्वर्यादिभिः अर्थं दूषयन्ति तदसत्, दोषाणामेव पुरुषधर्मारोपात्, अत एव गर्वोल्लासोऽपि संगच्छते, यद्वा छाद्मस्थ्योऽपि त्वं दोषैः—लोकविरुद्धभावैर्न स्पृष्टः, तर्हि सार्वस्यैतत्प्राप्तिः कुत इति व्याख्येयम् । इति काव्यार्थः ॥ २७ ॥

*He declares Lord Rishabha as the sole abode of virtues*

Oh Lord of the ascetics ! what wonder is there, if Thou art wholly resorted to by all the virtues and that Thou art not seen even in a dream by vices which are puffed up with pride owing to the manifold shelter that they found elsewhere ? ( 27 )

* * * *

अथ वृत्तचतुष्टयेन प्रातिहार्यचतुष्कमाह—

उच्चैरशोकतरुसंश्रितमुन्मयूख-
माभाति रूपममलं भवतो नितान्तम् ।
स्पष्टोल्लसत्किरणमस्ततमोवितानं
बिम्बं रवेरिव पयोधरपार्श्ववर्ति ॥ २८ ॥

**गु० वि०**—हे सेवकजनकल्पवृक्षसदृक्ष ! भवतः—तव रूपं—वपुः नितान्तम्—अत्यर्थम् आभाति—शोभते । किंभूतम् ? उच्चैः—अतिशयेन जिनदेहाद् द्वादशगुणोच्चः, यथा—प्रथमतीर्थकृतस्त्रिक्रोशमानोऽन्येषां क्रमेण किञ्चिद्धीयमानो महावीरस्य द्वात्रिंशद्धनुर्मितो योऽशोकतरुः—कङ्केल्लिवृक्षस्तं संश्रितम्—आश्रितं, केवलोत्पत्तेरनन्तरं अशोकवृक्षस्य सदा विद्यमानत्वात्; उत्—उल्लसिता मयूखाः—किरणा यस्य यस्माद् वा तद् उन्मयूखं; अमलं—स्वेदपङ्करहितत्वात् निर्मलम् । किमिवाभाति ? रवेर्बिम्बमिव । यथा रवेर्बिम्बं पयोधरपार्श्ववर्ति—मेघसमीपस्थं भाति । तदपि किंभूतम् ? स्पष्टाः—प्रकटा उल्लसन्तः—उद्गच्छन्तः किरणा यस्य यस्माद् वा तत्, अस्ततमोवितानं—क्षिप्तान्धकारप्रकरम् । सूरमण्डलरूपं जिनरूपं मेघतुल्यो नीलदलोऽशोक इति युक्तं साम्यं च । इति वृत्तगर्भार्थः ॥ २८ ॥

**मे० वृ०**—अथ निश्चयनयेन स्तुत्वा व्यवहारनयेन स्तोतुं प्रातिहार्याण्याह—(उच्चैरशोकेत्यादि)।

हे मुनीश! भवतो रूपं उच्चैः आभाति इत्यन्वयः । 'आभाति' शोभते इति क्रिया० । किं कर्तृ? 'रूपं' शरीराकारः । कस्य? 'भवतः' तव । कथम्? 'उच्चैः' अतिशयेन । किंवि० ? 'अशोकतरु-संश्रितं' अशोकनामके वृक्षे सामीप्येन आश्रितम् । पुनः किंवि० ? 'उन्मयूखं' प्रबलकिरणम् । पुनः किंवि० ? 'अमलं' खेदादिरहितम् । कथम्? 'नितान्तं' निरन्तरम् । अत्र उपमामाह—इवोपमीयते 'रवेर्बिम्बमिव' इव—यथा रवेर्बिम्बं आभाति। किंवि० बिम्बम्? 'स्पष्टोल्लसत्किरणं' प्रकटप्रसरत्कान्ति। पुनः किंवि० ? 'अस्ततमोवितानं' विध्वस्तान्धकारपटलम् । पुनः किंवि० ? 'पयोधरपार्श्ववर्ति' मेघस-मीपस्थम् । अशोकस्य मेघेन भगवद्रूपस्य सूर्यबिम्बेनोपमा ज्ञेया ॥

**समासा यथा**—उदञ्चति उच्चैः 'न्युद्भ्यां चकैस् ( सिद्ध० उणा० १००३ )' इति साधुः । न विद्यते शोको यस्मिन् पार्श्वस्थिते इत्यशोकः, सापेक्षकत्वेऽपि गमकत्वान् समासः, अशोकश्चासौ तरुश्च अशोकतरुः, तस्मिन् संश्रितं अशोकतरुसंश्रितम् । उत्—ऊर्ध्वं मयूखा यस्य तत् उन्मयूखम् ।

"उत् प्राधान्ये प्रकाशे च, प्राबल्याख्याख्यशक्तिषु ।
विभागे बन्धने मोक्षे, भावे लाभोदूर्ध्वकर्मणोः ॥ १ ॥"–अनु०

**इत्यनेकार्थः** । तथा रूपं तु श्लोकशब्दयोः । "पशावाकारे सौन्दर्ये, नाणके नाटकादिके" **इत्यने-कार्थः** । उल्लसन्तश्च ते किरणाश्च उल्लसत्किरणाः, स्पष्टा उल्लसत्किरणा यस्मिन् तत् तथा । तमसा वितानं तमोवितानं, अस्तं तमोवितानं येन तत् तथा ।

"वितानं कदके यज्ञे, विस्तारे क्रतुकर्मणि ।
तुच्छे मन्दे वृत्तिभेदे, सूत्रावसरयोरपि ॥ १ ॥"–अनु०

तथा "बिम्बं तु प्रतिबिम्बे स्यात्, मण्डले बिम्बिकाफले" **इत्यनेकार्थः** । पयो धरतीति पयो-धरः, तस्य पार्श्वे वर्तते इति पयोधरपार्श्ववर्ति ॥ इति काव्यार्थः ॥ २८ ॥

*He describes Lord Rishabha's grandeur*

Thy defectless (perfect) figure which has resorted to the lofty *As'oka* tree and from which lustre emanates shines in full effulgence like the disc of the Sun lying adjacent to a cloud—the disc which possesses clear and splendid beams and which has dispelled the mass of darkness. (28)

* * * *

**सिंहासने मणिमयूखशिखाविचित्रे**
**विभ्राजते तव वपुः कनकावदातम् ।**
**बिम्बं वियद्विलसदंशुलतावितानं**
**तुङ्गोदयाद्रिशिरसीव सहस्ररश्मेः ॥ २९ ॥**

**गु० वि०—हे तीर्थपते! मणिमयूखशिखाविचित्रे**—रत्नकान्तिचूलाचारुणि हैमे सिंहासने **कनकावदातं**—हेमगौरं तव **वपुः**—देहमुपविष्टं **विभ्राजते**—भाति । किमिव? **सहस्ररश्मेर्बिम्ब-**

**मिव । यथा सूर्यमण्डलं तुङ्गोदयाद्रिशिरसि–उन्नतपूर्वाचलशृङ्गे वर्तमानं भाति । किंभूतम्? वियति–आकाशे विलसन्तः–द्योतमाना येऽंशवः–करास्तेषां लतावितानं–मालाविस्तारो यस्य यस्माद् वा तत्, अथ (वा) वियति–आकाशे वियन्तः–विचरन्तो वा विलसन्तः–स्मेरा येऽंशवो नवोदयत्वाद् रक्तवर्णाः करास्त एव लतावितानं–रक्ताशोकप्रवालवल्लीमण्डपो यस्माद् यस्मिन् वा तद् वियद्विलसदंशुलतावितानम् । अत्रांशुवृन्दसमा मणिमयूखमाला, पूर्वाद्रिशिखरसमानं सिंहासनं, रविबिम्बोपमानं त्वद्वपुरित्युचिता समता । यतः प्रथमतीर्थकृतो रूपं स्वर्णवर्णं वर्ण्यते । अन्येषामपि पञ्चदशानां विदेहविहारिणां वा । इति वृत्तार्थः २९**

**मे० वृ०**—अथ अशोकं व्यावर्ण्य सिंहासनं व्यावर्णयन्नाह—( सिंहेत्यादि ) ।

हे मुनीश! सिंहासने तव वपुर्विभ्राजते इत्यन्वयः । 'विभ्राजते' शोभते इति क्रियापदम् । किंकर्तृ? 'वपुः' शरीरम् । कस्य? 'तव' । कस्मिन्? 'सिंहासने' सौवर्णपादपीठे । किंलक्षणे? 'मणिमयूखशिखाविचित्रे' रत्नकिरणाग्रैर्नानावर्णे । किंवि० वपुः? 'कनकावदातं' स्वर्णवत् पीतम् । "अवदातं तु विमले मनोज्ञे सितपीतयोः" इत्यनेकार्थः । इवोपमीयते । किमिव? 'सहस्ररश्मेर्बिम्बं इव', इव–यथा सहस्ररश्मेः–सूर्यस्य बिम्बं–मण्डलं विभ्राजते । कस्मिन्? 'तुङ्गोदयाद्रिशिरसि' उन्नतरपूर्वाचलशिखरे । किंवि० बिम्बम्? 'वियद्विलसदंशुलतावितानं' आकाशप्रसरत्किरणरूपवल्लिविस्तारम् ॥

**समासाश्च**—सिंहोपलक्षितं आसनं सिंहासनं तस्मिन् । मणीनां मयूखास्तेषां शिखास्ताभिर्विचित्रं मणिमयूखशिखाविचित्रं तस्मिन् । कनकमिव कनकं तच्च तत् अवदातं च कनकावदातम् । 'उपमानं सामान्यैः' इति हैम( अ० ३, पा० १, सू० १०१ )सूत्रात् समासः । विलसन्तश्च ते अंशवश्च विलसदंशवः, वियति विलसदंशवो वियद्विलसदंशवः, लता इव लताः, वियद्विलसदंशवश्च ता लताश्च वियद्विलसदंशुलताः, उपमितसमासः, तासां वितानं यस्य तत् । उदयत्यत्र इत्युदयः, स चासौ अद्रिः उदयाद्रिः, तुङ्गश्चासौ उदयाद्रिश्च तुङ्गोदयाद्रिः, तस्य शिरस्तस्मिन् । सहस्रं रश्मयो यस्य स सहस्ररश्मिस्तस्य ॥ इति काव्यार्थः ॥ २९ ॥

Thy body ( resting ) on the lion-throne variegated by the ( radiance of the ) pencil of rays of jewels and beautiful ( or yellow ) like gold shines like the disc of the Sun on the high summit of the sun-rise-mountain—the disc having the collection of its branch-like rays spreading in the sky. ( 29 )

* * * *

**कुन्दावदातचलचामरचारुशोभं**
**विभ्राजते तव वपुः कलधौतकान्तम् ।**
**उद्यच्छशाङ्कशुचिनिर्झरवारिधार-**
**मुच्चैस्तटं सुरगिरेरिव शातकौम्भम् ॥ ३० ॥**

**गु० वि०—हे पारगत! कलधौतकान्तं—चामीकररुचिरं तव वपुः—देहं विभ्राजते। किंभूतम्? कुन्दावदाताभ्यां—विशदाभ्यां चलाभ्यां—शक्रादिधूयमानाभ्यां चामराभ्यां—वालव्यजनाभ्यां चार्वी—मनोज्ञा शोभा—विभूषा यस्य तत्। किमिव? सुरगिरेरुच्चैस्तट-मिव—शिखरमिव। यथा शातकौम्भं—सौवर्णं उच्चैः—उच्चं सुरगिरेः—मेरोः तटं—प्रस्थं भाति। तदपि तटं उद्यन्—उद्गच्छन् शशाङ्कः—चन्द्रस्तद्वच्छुचिः—धवला निर्झरस्य वारिधारा—जल-वेणी यत्र यस्माद् वा तत्। अत्र मेरुतटसमं श्रीनाभेयदेहं, निर्झरजलधारा वरे चामरे इत्युपमा मनोरमा। इति वृत्तार्थः ॥ ३० ॥**

**मे० वृ०**—अथ चामरवर्णनमाह—(कुन्देत्यादि)।

हे मुनीश! तव वपुर्विभ्राजते इत्यन्वयः। योजना प्राग्वत्। किंरूपं वपुः? 'कुन्दावदातचलचा-मरचारुशोभं' कुन्दपुष्पवदुज्ज्वलचलाचलवालव्यजनैर्विशिष्टलक्ष्मीधरम्। पुनः किंरूपम्? 'कलधौत-कान्तं' स्वर्णवन्मनोहरम्। किमिव? 'सुरगिरेः उच्चैस्तटमिव' मेरुपर्वतस्य उन्नतं शृङ्गमिव। किंरूपं तटम्? 'उद्यच्छशाङ्कशुचिनिर्झरवारिधारं' उदयं प्राप्नुवन् यः शशाङ्कः तद्वत् शुचयः—उज्ज्वला निर्झराणां वारिधारा—जलप्रवाहा यस्मिन् तत्। पुनः किंरूपं तटम्? 'शातकौम्भं' सुवर्णमयम्। चामराणां निर्झरोपमा भगवद्वपुषो मेरुशृङ्गोपमा॥

**समासाश्च**—कुन्दस्य पुष्पाणि कुन्दानि, 'लुब् बहुलं पुष्पमूले' ( सिद्ध० अ० ६ पा० २ सू० ५७ ) इति तद्धितलुप्, कुन्दानीव कुन्दानि, तानि च अवदातानि कुन्दावदातानि, तानि च चलानि कुन्दावदातचलानि, तानि च चामराणि कुन्दावदातचलचामराणि, तैश्चार्वी शोभा यस्य तत्। कलधौत-मिव कलधौतं, तच्च तत् कान्त च कलधौतकान्तम्। उद्यंश्चासौ शशाङ्कश्च उद्यच्छशाङ्कस्तद्वत् शुचयः उद्यच्छशाङ्कशुचयः, निर्झराणां वारीणि निर्झरवारीणि, तेषां धाराः ( निर्झर० ), उद्यच्छशाङ्कशुचयो निर्झरवारिधारा यत्र तत् तथा। सुराणा गिरिः सुरगिरिस्तस्य। शातकुम्भस्य विकारः शातकौम्भम्॥ इति काव्यार्थः ॥ ३० ॥

Thy body which is lovely like gold and which possesses fascinating beauty owing to the moving chowries white like the jasamine flowers, shines like the topmost golden peak of the mountain of gods (*Meru*) from which the water-falls pure like the rising moon are gurgling. ( 30 )

* * * *

छत्रत्रयं तव विभाति शशाङ्ककान्त-
मुच्चैः स्थितं स्थगितभानुकरप्रतापम्।
मुक्ताफलप्रकरजालविवृद्धशोभं
प्रख्यापयत् त्रिजगतः परमेश्वरत्वम् ॥ ३१ ॥

गु० वि०—हे पवित्रचरित्र! उच्चैः–ऊर्ध्वं–मूर्ध्नि स्थितं–निविष्टं तव छत्रत्रयं–आतपत्रत्रितयं विभाति। किंभूतम्? स्थगितः–छादितो भानोः करप्रतापो येन, सूर्यकरोत्तापरोधकं; मुक्ताफलानां प्रकरस्य–समूहस्य जालेन–रचनाविशेषेण विवृद्धा–वृद्धिं गता शोभा यस्य तत्। तत्र भवतः स्वर्गमर्त्यपातालरूपस्य त्रिजगतः परमेश्वरत्वं–महाधिपत्यं प्रख्यापयत्–कथयत् निरूपयदिति। अत्र प्रातिहार्यप्रस्तावनाप्रस्तावेऽनुक्ता अपि पुष्पवृष्टिदिव्यध्वनिभामण्डलदुन्दुभयः स्वधियाऽवतार्याः, यथा—

"[1]विंटट्ठाइं सुरहिं, जलथलयं दिव्वकुसुमनीहारिं।
[3]पयरंति समंतेणं, दसद्धवण्णं कुसुमवासं॥ १॥"–आर्या

इत्यागमे (आवश्यकनिर्युक्तौ, गा० ५४६) सुरकृता कुसुमवृष्टिः १।

"देवा दैवीं नरा नारीं, शबराश्चापि शाबरीम्।
तिर्यञ्चोऽपि हि तैरश्चीं, मेनिरे भगवद्गिरम्॥ १॥"–अनु०

इति पञ्चत्रिंशद्गुणोपेता दिव्यध्वनिर्जिनवाणी २।

"भामण्डलं चारु च मौलिपृष्ठे, विडम्बिताहर्पतिमण्डलश्रि" ३। (अभिधानचिन्तामणौ का० १, श्लो० ५९)

देवदुन्दुभयो ध्वनन्त्याकाशे ४। एतत् सर्वं यत्राशोकतरोः प्रादुर्भावस्तत्र स्याद् देशनाक्षणे। अशोकतरुसहचरितत्वात् पृथग् नादृताः कविना। इति वृत्तार्थः॥ ३१॥

मन्त्रो यथा—

अरिहंतसिद्धआयरियउवज्झायसव्वसाहुसव्वधम्मतित्थयराणं ॐ नमो भगवईए सुयदेवयाए संतिदेवयाणं सव्वपवयणदेवयाणं दसण्हं दिसापालाणं पंचण्हं लोगपालाणं ॐ ह्रीं अरिहंतदेवं नमः। एषा विद्या १०८ जापात् पठितसिद्धा वादे व्याख्यानेऽन्येषु च कार्येषु सर्वसिद्धिं सङ्ग्रामे च जयं ददाति। व्यालतस्करभयं भिनत्ति॥

महिमनि कथा—

स्वप्ने छत्रत्रयं देवं, समीक्ष्योच्छिन्नवंशकः।
गोपालो जिनमानर्च, तुष्टा देवी ददौ वरम्॥ १॥

श्रीसिंहपुरे कश्चित् क्षीणकुलगोत्रः क्षत्रियो वसति स्म। स निर्धनत्वाद् गोधनं चारयति स्म। स भद्रकप्रकृतिर्जैनमुनिमवन्दिष्ट। स महर्षिः—

"लक्ष्मीर्वेश्मनि भारती च वदने शौर्यं च दोष्णोर्युगे
त्यागः पाणितले सुधीश्च हृदये सौभाग्यशोभा तनौ।

१ छाया—
वृन्तस्थायि सुरभि जलस्थलज दिव्यकुसुमनिर्हारि।
प्रकिरन्ति समन्ततो दशार्धवर्णं कुसुमवर्षम्॥

२ 'विटट्ठट्ठिसुरहि–जलथलयदिव्व कुसुमनीहारं' इति ग-पाठः।

३ 'पयरंतसमं०' इति ग-पाठः।

कीर्तिर्दिक्षु सपक्षता गुणिजने यस्माद् भवेदङ्गिनां
सोऽयं वाञ्छितमङ्गलावलिकृते श्रीधर्मलाभोऽस्तु वः ॥ १ ॥"

इत्थंभूतां धर्माशिषं ददौ। गोपालक्षत्रियो गुरुदेशनां सुधामिवापिबत्, भक्तामरस्तवं पञ्चपरमेष्ठिमन्त्रं चापठत्, शश्वदस्मरत्, जिनधर्मं समाराधयत्। एकदा निशि स्वप्ने छत्रत्रयादिप्रातिहार्यवर्यं श्रीयुगादिजिनं ददर्श चित्ते तुतोष च। प्रातर्धेनूश्चारयन् भूतलाजलदवृष्टिप्रकटीभूतं प्रथमजिनबिम्बं नदीतटे कुटीरके स्थापयित्वाऽऽनर्च (ग्रन्थाग्रं १०००)। तत्पुरः स्तवं त्रिसन्ध्यमजपत्। एवं षण्मास्यतिचक्राम। अन्येद्युरेकत्रिंशं वृत्तं स्मरतो गोपालस्य प्रसन्ना चक्रेश्वरी राज्यवरं ददौ। दैववशात् सिंहपुरेशो निष्पुत्रः पञ्चत्वमाप। राजवंश्यानां कलिमालोक्य मन्त्रिसामन्ताद्यैः पञ्चदिव्यान(न्य)भ्यषिच्यन्त। भ्रामं भ्रामं सर्वत्र वने गोपालाय राज्यमयच्छत्(न्)। भृङ्गारेण नीरेणाभिषिक्तः। छत्रेण शीर्षे स्थितम्। चामराभ्यां स्वयमेव लुलितम्। हयेन हेषितम्। कुम्भिना कुम्भस्थलेऽधिरोपितः। निःस्वानेषु ध्वनिरुदलसत्। देवदत्त इति नाम्ना राजाऽभूत्। सिंहासनमलंचकार। नीचोऽयमिति सीमालभूपाला न मन्यन्ते स्म तम्। एवं न जानन्ति ते यथा—

"यः प्रमाणीकृतः सद्भि-स्तस्यान्तं न विचार्यते।
अतुलेन तुलामेति, काञ्चनेन सहोपलः॥ १॥"

"[1]नरह नरिंदह रिसिकुलह वरकामिणि कमलाह।
अन्तागमणु न पुच्छियइ कह कुसलत्तणु ताह?॥ २॥"

इत्थमविमृशन्तः सामन्ताः कलहायोत्तस्थुः। सर्वरिपुबलचेष्टितं स्वं ज्ञात्वा तेन अप्रतिचक्रा स्मृता। दृग्गोचरमागतं परचक्रम्। दृषद्घटितमिव चित्रलिखितमिव मृन्मयमिव स्तम्भक्रियानिश्चेष्टं जातम्। बलवत्सङ्गेन किं न स्यात्?। उक्तं च—

"महीयसामवष्टम्भे, रेणुप्रायोऽपि कीर्तिमान्।
धृता पतन्ती शेषाद्यै-रचलेत्युच्यते क्षितिः॥ १॥"

ततो देवीप्रभावाद् भीताः सामन्ताः प्रणता निर्देशवर्तिनो जाताः। तदाज्ञां देवाधिदेवशेषामिव शीर्षे शेखरीचक्रुः। देवदत्तो राजा तेषु प्रतिकूलेष्वपि प्रसन्नोऽभूत्। उक्तं च—

"निर्गुणेष्वपि सत्त्वेषु, दयां कुर्वन्ति साधवः।
न हि संहरति ज्योत्स्नां, चन्द्रश्चाण्डालवेश्मसु॥ १॥
नह्येके व्यसनोद्रेके-ऽप्याद्रियन्ते विपर्ययम्।
जहाति दह्यमानोऽपि, घनसारो न सौरभम्॥ २॥"

---

१ छाया—

नराणां नरेन्द्राणां ऋषिकुलानां वरकामिन्याः कमलानाम्।
अन्त आगमन (च) न पृच्छ्यते कथं कुशलत्वं तेषाम् (पृच्छकानाम्)॥

क्रमेण विक्रमाक्रान्तभूचक्रशक्रः परमजैनः श्रीआदिदेवं गुरुप्रासादे न्यवेशयत् । चिरं राज्यभागभूत् ॥

॥ इति एकोनविंशी कथा ॥

**मे० वृ०—अथ छत्रस्तवनमाह—( छत्रेत्यादि )।**

हे मुनीश ! तव छत्रत्रयं विभाति–शोभते इत्यन्वयः । 'विभाति' इति क्रियापदम् । किं कर्तृ ? 'छत्रत्रयम्' । किंरूपम् ? 'उच्चैः' उपरि 'स्थितम्' । कस्य ? 'तव' । किंविशिष्टं छत्रत्रयम् ? 'शशाङ्ककान्तं' चन्द्रवन्मनोहरम् । पुनः किंरूपं छत्रत्रयम् ? 'स्थगितभानुकरप्रताप' आच्छादितसूर्यकान्तितेजस्कम् । पुनः किं० ? 'मुक्ताफलप्रकरजालविवृद्धशोभं' मौक्तिकसमूहस्य जालं–संदर्भविशेषस्तेन अतिशयितशोभाधरम् । अत्र छत्राणा त्रिमङ्ख्यायामुत्प्रेक्षामाह–किं० छत्रत्रयम् ? 'त्रिजगतः परमेश्वरत्वं' उत्कृष्टनाथत्वं 'प्रख्यापयत्' सूचयत्–कथयत्, त्रित्वादिति शेषः. भगवान् त्रयाणां जगतां स्वामी अतस्त्रीणि छत्राणि वर्तन्ते इति भावः ॥

**( समासाश्च— )** छत्राणा त्रयं छत्रत्रयम् । शशाङ्क इव शशाङ्कस्तद्व तत् कान्तं शशाङ्ककान्तम् । भानोः कराः भानुकराः, तेषां प्रतापो भानुकरप्रतापः, स्थगितो भानुकरप्रतापो येन तत् तथा । मुक्ता एव फलानि मुक्ताफलानि, तेषां प्रकरः–जाल तेन विवृद्धा शोभा यस्य तत् तथा । त्रयाणां जगतां समाहारस्त्रिजगत् तस्य । परमश्चासावीश्वरः (च) परमेश्वरः, तद्भावः परमेश्वरत्वम् ॥ इति काव्यार्थः ॥ ३१ ॥

Thy three canopies which are lying above ( Thy head ), which are beautiful like the Moon, which have (even) eclipsed the light ( or have removed the excessive heat ) of the rays of the Sun and whose beauty is enhanced by a zone of pearls and which proclaim Thy supremecy over the three worlds are resplendent. ( 31 )

* * * *

**अथातिशयद्वारेण जिनं स्तौति—**

**उन्निद्रहेमनवपङ्कजपुञ्जकान्ति-**
**पर्युल्लसन्नखमयूखशिखाभिरामौ ।**
**पादौ पदानि तव यत्र जिनेन्द्र ! धत्तः**
**पद्मानि तत्र विबुधाः परिकल्पयन्ति ॥ ३२ ॥**

**गु० वि०—**हे जिनेन्द्र ! तव पादौ–चरणौ यत्र भूमौ पदानि गमनेऽवस्थानरूपाणि न्यासन् (धत्तः?)–धारयतः विबुधा–देवास्तत्र–धरापीठे पद्मानि–कमलानि परिकल्पयन्ति–रचयन्ति, निर्मापयन्तीत्यर्थः । किंभूतौ चरणौ ? उन्निद्राणि–विकस्वराणि हेम्नः–स्वर्णस्य नवानि–नूतनानि नवसङ्ख्या(का)नि वा पङ्कजानि–कमलानि तेषां पुञ्जं–चयस्तस्य कान्तिः–द्युतिः, पर्युलसन्ती–समन्तादुच्छलन्ती या नखानां मयूखशिखा–किरणचूला,

**उन्निद्रहेमनवपङ्कजपुञ्जकान्त्या पर्युल्लसन्नखमयूखशिखया वाऽभिरामौ–रुचिरौ । कोऽर्थः ? एका नवस्वर्णकमलकान्तिः पीता, अपरा दर्पणनिभा नखप्रभा च चरणौ वर्णविचित्रौ चक्रतुरिति । पद्मानां पुञ्जत्वमागमे (आवश्यकनिर्युक्तौ गा० ५५५) अप्युक्तम्—**

**"सूरोदयपच्छिमाए, ओगाहंतीइ पुव्वओ एइ(ऽईइ) ।**
**दोसु पउमेसु पाया, मग्गेण य हुंति सत्तण्णे ॥ १ ॥"**

**। इति वृत्तार्थः ॥ ३२ ॥**

**मे० वृ०**—अथ चत्वारि प्रातिहार्याण्युक्त्वा अतिशयसम्पदं संक्षेपेणाह—( उन्निद्रेत्यादि ) ।

हे जिनेन्द्र !–जिननायक ! तव पादौ–चरणौ यत्र स्थले पदानि धत्तः इति सम्बन्धः । 'धत्तः' इति क्रियापदम् । कौ कर्तारौ ? 'पादौ' । कानि कर्मतापन्नानि ? 'पदानि' भूमौ आकारन्यासरूपाणि । यत्तदोर्नित्याभिसम्बन्धात् तत्र स्थाने विबुधाः–देवाः पद्मानि–कमलानि परिकल्पयन्ति–रचयन्ति–विकुर्वन्ति । 'परिकल्पयन्ति' इति क्रियापदम् । के कर्तारः ? 'विबुधाः' । अवसरज्ञताव्यञ्जकमेतत् । कानि कर्मतापन्नानि ? 'पद्मानि' । कुत्र ? 'तत्र' यत्र तव पादौ पदानि धत्तः । कथंभूतौ पादौ ? 'उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखशिखाभिरामौ' एतदर्थः समासादेवेति, स चैवम्—उद्गता निद्रा येषां तानि उन्निद्राणि–विकस्वराणि, सुवर्णस्य नवानि–नूतनानि नव सङ्ख्याकानि वा यानि पङ्कजानि–कमलानि हेमनवपङ्कजानि, उन्निद्राणि च तानि हेमनवपङ्कजानि च उन्निद्रहेमनवपङ्कजानि, तेषां पुञ्जः–समूहस्तस्य प्रभा तया पर्युल्लसन्तो–वृद्धिं गच्छन्तो ये नखानां मयूखाः–कराः उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखाः, तेषां शिखा–अग्राणि ताभिः अभिरामौ–मनोहरौ उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखशिखाभिरामौ । मयूखशब्दः कवर्गीयोपान्त्यः । जिनेषु इन्द्रो जिनेन्द्रः, तत्सम्बोधने हे जिनेन्द्र ! । अत्र पूर्वार्द्धे समासभूयस्त्वाद् गौडीयरीतिः, परार्द्धे न तथेति वैदर्भी रीतिः, न च रीतिभ्रंशदोषः, वस्तुतः पूर्वार्द्धस्य भिन्नत्वादेव, अत एव सन्धिकार्यमपि न, पादस्य तु रीतिभेदे न दुष्टमिति । अत्र देवकृतः अर्हत्पदस्थाने देवाः स्वर्णमयानि नव पद्मानि स्थापयन्तीत्यतिशयः सूचितः, तदुपलक्षणात् सर्वेऽपि चतुस्त्रिंशदतिशया ज्ञेयाः ॥ इति काव्यार्थः ॥ ३२ ॥

Oh Lord of the *Jinas* ! the gods create ( nine ) lotuses wherever the foot-prints are formed by Thy feet which are attractive on account of the pencil of rays issuing from Thy nails shining with the splendour of the cluster of the blooming golden fresh ( or nine ) lotuses ( 32 )

✻ ✻ ✻ ✻

---

१ छाया—

सूर्योदये पश्चिमायां ( च पौरुष्यां ) अवगाहयन्त्यां पूर्वत एति ।
द्वयोः पद्मयोः पादौ पृष्ठतश्च भवन्ति सप्तान्यानि ॥ १ ॥

२ 'सूरुदय०' इति क-पाठः । ३ 'पुव्वउइपइ' इति ग-पाठः । ४ 'दोहिं पउमेहिं' इति ग-पाठः ।

अथ संक्षिपति—

इत्थं यथा तव विभूतिरभूज्जिनेन्द्र !
धर्मोपदेशनविधौ न तथा परस्य ।
यादृक् प्रभा दिनकृतः प्रहतान्धकारा
तादृक् कुतो ग्रहगणस्य विकाशिनोऽपि ? ॥ ३३ ॥

गु० वि०—हे जिनेन्द्र ! इत्थं-पूर्वोक्तप्रकारेण यथा-यद्वद् धर्मोपदेशनविधौ-धर्मव्याख्याक्षणे तव विभूतिः-अतिशयरूपा समृद्धिरभूत् तथा तद्वत् परस्य-ब्रह्मादिसुरस्य नासीत् । अत्र दृष्टान्तः-दिनकृतः-सूर्यस्य प्रहतान्धकारा-ध्वस्तध्वान्ता यादृग्-यादृशी प्रभा वर्तते विकाशिनोऽपि-उदितस्यापि ग्रहगणस्य-भौमादेस्तादृक्-तादृशी प्रभा कुतः-कस्माद् भवति ? ।

चतुस्त्रिंशदतिशया यथा—स्वेदमलरोगमुक्तं सद्गन्धरूपयुक्तं वपुः १ पद्मगन्धः श्वासः २ रुधिरमांसौ क्षीरधाराधवलौ सुरभी च ३ आहारनीहारावदृश्यौ ४ चेति जन्मभवाश्चत्वारः ४ ॥ योजनमिते भूप्रदेशे नरतिर्यक्सुरकोटाकोटेरवस्थानं १ चतुःक्रोशनादिनी सर्वभाषानुवादिनी भगवद्वाणी २ पृष्ठभामण्डलं ३ क्रोशपञ्चशतीमिते क्षेत्रे न दुर्भिक्षं ४ न रोगाः ५ न वैरं ६ न ईतयः ७ न मारिः ८ नातिवर्षणं ९ नावर्षणं १० न स्वचक्रपरचक्रजं भयं ११, एते चैकादश केवलोत्पत्तेरनन्तरं कर्मक्षयोत्थाः ११ ॥ गगने तीर्थकृत्पुरो धर्मचक्रं १ चामरयुगं २ पादपीठयुतं मणिसिंहासनं ३ छत्रत्रयं ४ रत्नखचितो महेन्द्रध्वजः ५ चरणन्यासे नव हेमपद्मानि ६ प्राकारत्रयं ७ चतुर्मुखरचना ८ चैत्यवृक्षः ९ अधोमुखतया कण्टकानामवस्थानं १० तरुनमनं ११ दुन्दुभिध्वनिः १२ पृष्ठानुपाती पवनः १३ प्रदक्षिणं ददानाः शकुनाः १४ गन्धजलवृष्टिः १५ पञ्चवर्णपुष्पवृष्टिः १६ नखकेशरोम्णः सहजावस्थानं व्रतात् परतोऽवर्धनं १७ चतुर्विधामराणां जघन्येऽपि पार्श्वे कोटीस्थितिः १८ षडृतूनां शब्द रूप-रस-गन्ध-स्पर्शानां चानुकूलता १९, एते एकोनविंशतिर्देवकृता अतिशयाः १९ ॥ एवं सर्वमीलनाच्चतुस्त्रिंशदतिशयर्द्धिर्यादृशी जिने तादृशी ब्रह्मादौ कुतः? । तेषां सरागत्वान्न कर्मक्षयः । कर्मक्षयं विना न उत्तमोत्तमता । तां विना प्रातिहार्यर्द्धेरभाव इति स्थितम् ॥

अथ मन्त्रः—

ॐ ह्रीं श्रीं कलिकुण्डदण्डस्वामिन् ! आगच्छ २ आत्ममन्त्रान् रक्ष २ परमन्त्रान् छिन्द २ मम सर्वसमीहितं कुरु २ हुंफट् स्वाहा । एतज्जापात् सकलसम्पदो भवन्ति । जापः सहस्र१२रक्तश्वेतपुष्पैः कार्यः । गुरूपदेशाद् विधिर्ज्ञेयः ॥

**महिमकथा यथा—**

धवलक्ककवास्तव्यो, जिणहाकोऽतिदुर्गतः ।
चक्रेश्वरीप्रसादेन, दण्डाधीशोऽजनिष्ट सः ॥ १ ॥

श्रीगूर्जरमण्डलेषु श्रीधवलक्कके श्रीश्रीमालवंशमौक्तिकं पाहापुत्रो जिणहाख्यः श्रावकोऽकिञ्चनत्वाद् घृतकुतुपकर्पासकणादिवहनेनाजीविकां चकार । सोऽन्यदा निजगुरूणां श्रीअभयदेवसूरीणां धर्मागारमगात् । वन्दिता गुरवः । गुरुभिर्धर्मलाभपूर्वकं—

"धर्मः सनातनो येषां, दर्शनप्रतिभूरभूत् ।
परित्यजति किं नाम, तेषां मन्दिरमिन्दिरा[1] ॥ १ ॥"

इति धर्मोपदेशो दत्तः । तेनोक्तम्–भगवन्! स्वोदरभरणासहस्य दरिद्रस्य का धर्मक्रिया? । उक्तं च—

"[2]धणवंतह [3]सुणहि सयणा बंधजणआणवडिच्छओ ।
कज्जकालि सयमेव लोउ तसु होइ [4]विइज्जओ ॥ १ ॥
[5]राउलदेउल गणइ भणइ ईसर! वइ तुहं सिरि
दारिद्दिय मनरुंधि ठामु तुहं बाहिरि नीसरी ॥ २ ॥
रे दारिद्र्य! नमस्तुभ्यं, सिद्धोऽहं त्वत्प्रसादतः ।
अहं सर्वत्र पश्यामि, मां कोऽपि हि न पश्यति ॥ ३ ॥"–अनु०

इत्युक्ते प्रभुभिर्देवालयात् पद्मकोशस्था श्रीपार्श्वप्रतिमा चक्रेश्वरीमूर्तिसनाथा दापिता। कलिकुण्डाम्नायो भक्तामरस्तवश्च स्मर्तव्य इत्युक्तः प्रभून् नत्वा गृहमगात् । गृहमार्गे च शुचिः पार्श्वबिम्बमार्चिचत् त्रिः स्तवं मन्त्रं च सस्मार । एवं कुर्वन् [6]जिनभाह्लोऽन्यदा ग्राममगमत् । तत्र त्रियामायां स्तवस्त्रयस्त्रिंशद्वृत्तगुणनक्षणे तत्पुरस्तेजःपुञ्जराजमानं सूर्यमण्डलसमानं प्रादुर्भूतं विमानम् । ततोऽवातरत् चक्रेश्वरीप्रतीहारी ( आह च ) भद्र! श्रीआदिदेवस्तवस्मृते श्रीपार्श्वबिम्बार्चनात् तुष्टा मत्स्वामिनी चक्रा त्वां सधनमजेयं चिकीर्षुरिदं रत्नं दत्तवती । त्वया भुजे बद्धं रत्नं सर्ववश्यं करिष्यतीत्युक्तः सोऽग्रहीत् । साऽन्तरधात् । निजभुजे बद्ध्वा प्रातर्गृहं व्रजन् मार्गे त्रिभिश्चौरैरुक्तः–भो वणिज! मुञ्च

१ लक्ष्मी. ।

२ छाया—

धनवता सुहृत्स्वजना बान्धवजना आज्ञाप्रतीच्छका ।
कार्यकाले स्वयमेव लोक तेषां भवति द्वितीयीकः ॥ १ ॥
राजकुले देवकुले गणयति भणति ईश्वर! वै तव श्री ।
दारिद्र्ये मनोरुद्ध स्थान त्व बहिः निस्सर ॥ २ ॥

३ 'सुहिसयणधधुजणुआणवडिच्छओ' इति ख-पाठ । ४ 'वियरथओ' इति क-पाठः । ५ 'राउलदेउलु गणइ० तुहु सरि०' इति ख-पाठ. । ६ 'जिणहाकोऽन्यदा' इति ग-पाठः ।

त्वामं पात्रं मरिष्यसेऽन्यथा। मयि जीवति को गृहीता मदान्धकुतुपमित्युक्त्वा बाणत्रयेण तस्करत्रयं जघान। पश्चादागतैः पान्थैस्तस्य विक्रमाद्भुतं दृष्ट्वा विसिष्मिये। चौरवधाद् रञ्जितैर्जयजयारवश्चक्रे। सा वार्ता धवलक्ककात् श्रीपत्तनं प्राप्ता। चौलुक्यभीमदेवराज्ञा श्रुता। आहूतो जिणहाकः। दृष्टः कपाटपुटविकटवक्षस्थलो जानुप्राप्तभुजार्गलोऽयम्। वसनहीनोऽपि तेजस्वी। खल्वाटोऽपि सच्छायः। एकोऽपि श्रीमान्। उवाच राजा–भो! गृहाण गूर्जरदेशमध्ये क्रूरतस्कररक्षणक्षमं निष्कोशं मम मण्डलाग्रम्। तावदुचितभाषी शत्रुशल्यो नाम सेनानीरवादीत्—

"खंडेउ तासु समप्पियइ जसु खंडइ अभ्यासु।
जिणहा इकु समप्पियइ तुलचेलउं कप्पासु॥ १॥"

जिणहाख्योऽपि तमुद्दिश्योचे—

"असिधर धणुधर कुंतधर, सत्तिधरा य बहूअ।
सतुसल! जे रणि सूर नर, जणणि ति विरल पसूय॥ १॥"

राज्ञोक्तम्—साधूक्तम्। शत्रुशल्यो नरेन्द्रमनो मत्वाऽवादीत्

"अश्वः शस्त्रं शास्त्रं, वीणा वाणी नरश्च नारी च।
पुरुषविशेषं प्राप्ता, भवन्ति योग्या अयोग्याश्च॥ १॥"–आर्या

त्वयाऽऽदृतोऽयं सर्ववीरकोटीरो भविष्यति। उक्तं च—

"प्रसन्नेऽधिपतौ ग्राह्या, मन्देनापि पदस्थितिः।
ग्रामोऽपि शिष्ययत्येव, यद्बलाधिपनामिह॥ १॥"

इति श्रीभीमस्तस्मै पट्टदुकूलं वेषं स्वर्णकरमुद्रिकं खड्गं धवलक्काधिपत्यं सैन्यं चादात्। स राजानं नत्वा निजपुरं प्राविशत्। क्रमात् सकलमलिम्लुचान् न्यग्रहीत्। तस्करनाम शास्त्रे स्थितं, न गूर्जरात्रासु। एकदा कश्चिच्चारणस्तत्परीक्षांचिकीः करभमचूचुरत्। जिणहारक्षकैः सोष्ट्रो धृतः। दण्डेशे पूजां कुर्वति तत्क्षणं ढौकितो बद्धश्चौरः। देव! असौ दस्युः, किं क्रियते?। अस्य सोऽङ्गुलिसंज्ञया वधमादिशत्। ततः पाटच्चरो वच उच्चैरुच्चचार—

---

१ खड्गम्।

२ छाया—

खड्गस्तस्मै समर्प्यते यस्य खड्गेऽभ्यासः।
जिणहे एक. समर्प्यते चेलतोल्यः कर्पासः॥

३ छाया—

असिधरो धनुर्धरः कुन्तधर शक्तिधराश्च बहवः।
शत्रुशल्य! यो रणे शूरो नरो जननी तं विरलं प्रसुषुवे॥

"[1]इकु जिणहा अनुजिणवरह न मिलइ तारोतार।
जेहिं अमारणु पूजीइ ते किम मारणहार ? ॥ १ ॥"

इति श्रवणान्मुक्तः। स उक्तश्च-भो! पुनश्चेचौरिकां करिष्यसि तदा मृत एवेति। स उवाच—

"[2]इका चोरी सा य किय, जा खोलडइ न माइ।
बीजी चोरी जे करइ, चारणु चोर न थाइ ॥ १ ॥"

अन्यच्च—भवता वणिजा कथं पारिपन्थिका निगृहीताः? अस्मान्मया सौराष्ट्रकचारणेन चौर्यं कृतं इत्युक्ते लब्धधनः स्वे कृत्ये लग्नः। जिनभाख्यो महामात्यः श्रीधवलक्के श्रीपार्श्वप्रासादमकारयत्। कपपट्टरत्नमयीं श्रीपार्श्वनाथप्रतिमामप्रतिमां निरमीमपत्। श्रीदुर्लभदेवराजप्रतिबोधकारिश्रीजिनेश्वरसूरिपट्टमुकुटश्रीस्तम्भनकपार्श्वप्रकटनकृन्नवाङ्गवृत्तिकारश्रीअभयदेवसूरिपार्श्वात् प्रातिष्ठिपत् ताम्। महामहः महादानपुरःसरं गुरुवचनाचक्रेश्वरीयुक्श्रीयुगादिदेवप्रासादं व्यरीरचत्। नवाङ्गवृत्तेः पुस्तकान्यलीलिखत्। सङ्घपतिरभूत्। चिरं राज्यमभुनक्। सुभटमुकुटः श्रावकोत्तमो जिणहा(क)नामा दण्डाधिपः। अद्यापि तत्र पुरे पोट्टलिकानां शुल्कं न कश्चन गृह्णाति, चेदादत्ते सोऽधीशो न नन्दति, जिणहाप्रभावादेव तत्कृता रीतिरियम् ॥

॥ इति विंशी कथा ॥

**मे० वृ०**—अथोपसंजिहीर्षुराह—( इत्थमित्यादि )।

हे जिनेन्द्र! इत्थ–अनेन प्रकारेण यथा तव विभूतिरभूदित्यन्वयः। 'अभूत्' इति क्रियापदम्। का कर्त्री? 'विभूतिः' समृद्धिः। कस्य? 'तव'। कथम्? 'इत्थं' पूर्वोक्तप्रकारेण। कस्मिन्? 'धर्मोपदेशनविधौ' व्याख्यानक्रियायाम्। तथा–तेन प्रकारेण अपरस्य कस्यापि देवस्य न अभूत्, तेन बाह्ययोगमहिम्नाऽपि निश्चीयते यत् त्वमेव परमः पुमानिति, सिंहावलोकनन्यायेन प्रागुक्तं दृढीकृतम्, तेन

"देवागमनभोयान–चामरादिविभूतयः।
मायाविष्वपि दृश्यन्ते, नातस्त्वमसि नो महान् ॥ १ ॥"

इति **समन्तभद्रो**क्तमष्टसहस्रीसूत्रं प्रत्याहतं, प्रातिहार्यातिशयप्रमुखबाह्ययोगविभूतेर्भगवद्रूपादिसंसर्गेण वर्णनात् तथारूपा हि विभूतिर्न देवाधिदेवव्यभिचारिणी, मायाविलक्षैरपि भगवद्रूपस्य

---

१ छाया—

एको जिणहा जिनवरश्च न मिलतस्तन्मयतया।
यैरमारकः पूज्यते ते किमु मारयितारः ? ॥

२ छाया—

एका चौरी सैव कृता या उत्सङ्गे न माति।
द्वितीयां चौरिकां यदि करोति (क माति) चारणश्चौरो न भवति ॥

साम्यं कोट्यंशेनापि न कर्तुं शक्यमित्यास्तां विस्तरः, तथा च सुष्टूक्तं (**वीतरागस्तोत्रे** प्र० ४, श्लो० ७) **हेमसूरिपादैः**—"बाह्योऽपि योगमहिमा, नाप्तस्तीर्थकरैः परै"रिति । अत्र दृष्टान्तमाह—दिनकृतः—सूर्यस्य यादृक् प्रभा—कान्तिर्भवति तादृक्—तद्रूपा ग्रहगणस्य प्रभा कुतः कारणात् संभवति ? नैव संभवतीत्यर्थः । कथभूतस्य ग्रहगणस्य ? 'विकाशिनोऽपि' प्रकाशवतोऽपि । कथभूता दिनकृतः प्रभा ? 'प्रहतान्धकारा' निरस्ततिमिरा ॥

**समासा यथा**—जिनेन्द्रपदे प्राग्वत् । धर्मस्य उपदेशनं धर्मोपदेशनं, तस्य विधिः धर्मोपदेशनविधिस्तस्मिन् । तथा दिन करोतीति दिनकृत् तस्य । प्रहत अन्धकारं यया सा प्रहतान्धकारा—निरस्ततिमिरा । ग्रहाणा—नक्षत्रादीना गणो ग्रहगणस्तस्य । विकाशोऽस्यास्तीति विकाशी, तस्य विकाशिनः ॥ इति काव्यार्थः ॥ ३३ ॥

Oh Lord of the *Jinas*! no other being can attain the above-described grandeour of Thine which Thou possessest at the time of preaching religion (For), whence can the light of a group of constellations, though shining, match with the lustre of the sun by which darkness is destroyed? (33)

❋ ❋ ❋ ❋

अथ गजभयहरं तीर्थकरं स्तौति—

श्च्योतन्मदाविलविलोलकपोलमूल-
मत्तभ्रमद्भ्रमरनादविवृद्धकोपम् ।
ऐरावताभमिभमुद्धतमापतन्तं
दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ॥ ३४ ॥

**गु० वि०**—हे गजपतिगते! त्वदाश्रितानां—त्वच्चरणशरणस्थानां जनानां आपतन्तं—आगच्छन्तं इभं—दुष्टगजं दृष्ट्वा भयं न भवति । किंभूतम् ? गण्डौ नेत्रे करो मेढ्रं गुदमिति सप्तसु स्थानेषु श्च्योतता—क्षरता मदेनाविलाः—कलुषा(षिता) विलोलाः—चञ्चलाः कपोलमूले—गण्डप्रदेशे मत्ताः—क्षीबाः सन्तो भ्रमन्तो—भ्रमणशीलाः (ग्रन्थाग्रं० ११००) ये भ्रमरास्तेषां नादेन—झङ्कारध्वनिना विवृद्धः—पुष्टिं गतः कोपः—क्रोधो यस्य तं ऐरावताभं—महाकायत्वादैरावणसमं उद्धतम्—अविनीतम् अशिक्षितं—दुर्दान्तम् । इति वृत्तार्थः ॥ ३४ ॥

एषु वृत्तेषु वक्ष्यमाणतत्तद्धीहरवृत्तवर्णा एव मन्त्राः पुनः पुनः स्मर्तव्याः । अतो नापरमन्त्रनिवेदनम् ॥

प्रभावे कथा (यथा)—

सोमराजो भ्रमन्पुर्यां, कौतुकानि विलोकयन् ।
मोचिता तेन मत्तेभाद्, राजकन्या स्तवस्मृतेः ॥ १ ॥-अनु०

श्री'पाटली'पुरे सोमराजः कश्चिदुच्छिन्नगोत्रो राजपुत्रोऽभूत् । स क्षीणद्रविणत्वाद् देशान्तरं प्रत्यचालीत् । क्वापि श्रीवर्धमानसूरयो दृष्टा वन्दिताश्च । ते देशनामकार्षुरिति—

"सर्वे वेदा न तत् कुर्युः, सर्वे यज्ञाश्च भारत ! ।
सर्वे तीर्थाभिषेकाश्च, यत् कुर्यात् प्राणिनां दया ॥ १ ॥–अनुष्टुप्

—(महाभारते शान्तिपर्वणि)

विउलं रज्जं रोगेहिं, वज्जिअं रूवमाउअं दीहम् ।
अन्नंपि तं न सुक्खं, जं जीवदयाइ न हु सज्झम् ॥ २ ॥–आर्या

जिनेन्द्रपूजा गुरुपर्युपास्तिः
सत्त्वानुकम्पा शुभपात्रदानम् ।
गुणानुरागः श्रुतिरागमस्य
नृजन्मवृक्षस्य फलान्यमूनि ॥ ३ ॥"–उपजातिः

—(सिन्दूरप्रकरे श्लो० ९३)

इति श्रुत्वा जिनधर्मरहस्यविदभूत् । नमस्कारमन्त्रं भक्तामरस्तोत्रं चापठत् । नित्यं पवित्रोऽस्मार्षीत् । धरणीं विचरन् 'हस्तिनाग'पुरं गतः सोमराजः । तत्र राज्ञः पट्टहस्ती महदालानस्तम्भमुन्मूल्य शृङ्खलान् भङ्क्त्वा हस्तिपकान् दूरं विक्षिप्य रज्जुबन्धनानि त्रोटयित्वा हट्टस्तम्भानुत्पाटयन् वाजितिर्यगादीन् घ्नन् उपरिभ्रमत्पतत्रिष्वपि शुण्डामुल्लासलयन् मत्तो मर्यादामपालयन् पुरबहिर्भागमागतः । तत्र क्षणे मनोरमा नाम राजकन्या सखीभिः सह रन्तुमाराममागतवत्यासीत् । करी तं प्रदेशमसरत् । कुमारीसख्यो जीवग्राहं गृहीत्वा नेशुः । एकाकिनी कनी बिभ्यती तरलेक्षणा तस्थौ, पदमपि गन्तुं नाशक्नोत् । पुरगोपुरोपरिस्थेन नृपेणोक्तम्–भो लोकाः ! यो मत्कन्यारक्षां करोति तस्मै कन्यां राज्यांशं च दद्मीति । पूर्वं तरुतलोपविष्टेन श्रुतराजवचनेन सोमराजेन दृष्टः कन्यापार्श्ववर्ती च दन्ती । स जपन्नेव स्तवं लोलुभः कृपालुश्च कन्यां प्रत्यधावत् । कुमारीं कराभ्यां गाढं गृहीत्वा निर्भयभूभागेऽमुचत् । करिणं प्रत्यसरत् । स्तवचतुस्त्रिंशत्तमवृत्तस्मरणमात्रेण तुष्टाव चक्रेश्वरीसान्निध्याद्धस्तिनं वशीचकार । कन्या कटाक्षवीक्षितैस्तमीक्षांचक्रे, स मृगाङ्कमुखीं तां च । परस्परमनुरागो जातः । सोऽधिरुह्य गजमालानेऽबध्नात् । राज्ञा वैदेशिकोऽकुल्योऽयमिति किञ्चिद् दत्वा विसृष्टः । उक्तं न वेत्ति—

---

१ छाया—

विपुलं राज्यं रोगैर्वर्जितं रूपमायुष्यं दीर्घम् ।
अन्यदपि तत् न सुखं, यत् जीवदयाया न खलु साध्यम् ॥

"छिज्जउ सीसं अह होउ बन्धणं चयउ सव्वहा लच्छी ।
पडिवन्नपालणे स-प्पुरिसाण जं होइ तं होइ(उ) ॥ १ ॥–आर्या
अलसायंतेणं वि स-ज्जणेण जे अक्खरा समुल्लविया ।
ते पत्थरटंकुक्की-रियव्व नो अन्नहा हुंति ॥ २ ॥
जइ चलइ मन्दरो सु-सइ सायरो ल्हसइ सयलदिसिचक्कं ।
तहवि हु सप्पुरिसाणं, पयंपियं नन्नहा होइ ॥ ३ ॥"

इति नीतिवचः प्रसृतम् । कनी च तद्गुणान् स्मारं स्मारं (काम)दशाः प्राप । सख्यो-ऽमिलन् । तिर्यक् शून्यं चक्षुः क्षिपन्तीं तामूचुः—

अलमचलितैः स्नेहादार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं स्मरद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे ! त्वयाऽद्य विनिश्चितः ॥ १ ॥–हरिणी

इत्युक्ता व्रीडावाङ्मुखी न किञ्चिदवक् । मन्दिरं नीता न भुङ्क्ते, न शेते, न स्नाति, न ताम्बूलमादत्ते, न लपतीति भूतग्रस्तामिव तां वीक्ष्य सख्यो राजानमवोचन् । राजा किं भूतेन पिशाचेन यक्षेण क्षेत्रपेण वा छलितेयमिति मन्त्रचिकित्सामचीकरत् । वैद्यप्रतीकारैरपि नोपचारो जातः । ततो डिण्डिमोद्घोषणां चक्रे–यः कन्यां सज्जीकरोति तस्मै तदीहितं दद्मीति । कन्याविरहदूनमनसा रोगराजेन पटहः स्पृष्टः । नीतो राजपार्श्वम्, राज्ञा कन्याऽन्तःपुरम् । स ध्यानलीनां योगिनीमिव दवप्लुष्टां वल्लीमिव हिमक्लिष्टां पङ्कजिनीमिव राहुश्लिष्टां चन्द्रकलामिव वागुरापतितामेणीमिव पाशबद्धां राजहंसीमिव पञ्जरस्थां राजशुकीमिव वारिगतां गजीमिव वियोगव्यथितवपुषं मनोरमामपश्यत् । कपटमान्त्रिकीभूय दोषनिग्रहाय योगिनीमण्डलममण्डयत्, ॐ हुं फट् स्वाहादीनि मन्त्रपदानि उदचरत् । रहः कृत्वा कामविह्वलं तस्या मनो मत्वा कन्यामलपत् कर्णे—

"नालं यातुं न च स्थातुं, त्वद्रूपहृतचेतनः ।
कुर्वसत्यं नृपं सत्यं, वाक्यं देहि प्रसीद मे ॥ १ ॥–अनु०

---

१ छाया—

छिद्यतां शीर्षमथ भवतु बन्धनं च्यवतु सर्वथा लक्ष्मी ।
प्रतिपन्नपालने सत्पुरुषाणां यद् भवति तद् भवतु ॥ १ ॥
अलसायमानेनापि सज्जनेन यान्यक्षराणि समुल्लपितानि ।
तानि प्रस्तरटङ्कणोत्कीर्णानीव नान्यथा भवन्ति ॥ २ ॥
यदि चलति मन्दरः शुष्यते सागरो भ्रश्यति सकलदिशिचक्रम् ।
तथापि खलु सत्पुरुषाणां प्रजल्पितं नान्यथा भवति ॥ ३ ॥

२ हरिणी-लक्षणम्—

"नसमरसलागः षड्वेदैर्हयैर्हरिणी मता ।"

दृष्टाश्चित्रेऽपि चेतांसि, हरन्ति हरिणीदृशः ।
किं पुनस्ताः स्मितस्मेर–विभ्रमभ्रमितेक्षणाः ॥ २ ॥"–अनु०

इति । त्वद्रूपमोहितः शून्यः पुरे भ्रमामीत्युक्ते सम्मुखी सत्रपा नृपात्मजाऽभूत् । तदुपलक्षणाद् द्विगुणदेहाऽजनि वसनेनावगुण्ठनमकरोत् । अपाङ्गरिङ्खचङ्गतारा रोमाञ्चकञ्चुकसारा तदङ्गं प्रविविक्षुरिवोत्काऽभवत् । इह भवे त्वद्दतेऽपरः पुमान् मे सोदर इत्युक्तस्तया सः । राजाऽप्याहूतः । दृष्टा नीरुग्देहा कुमारी भूपालेन । कलाकलितकुल्यतया तस्मै दत्ता दुहिता, हृष्टा स्वयंवरा सोमराजश्च । कारितः पाणिपीडनमहामहः । अर्पितं नव्यं सौधम् । समग्रा वसनाद्यशनशयनीयताम्बूलसामग्री सज्जिता । दत्तं प्रतिपन्नं राज्यांशमात्रम् । स च सा च नव्यनव्यसङ्गमेन सातातिरेकमापतुः । उक्तं च—

"दवदड्ढा खड पल्लवइं, जिम वुहे(ट्ठे)ण घणेण ।
विरहपलित्तमणो रहइं, तिम दिट्ठेण पिएण ॥ १ ॥"

किञ्च—

"अध्वक्लान्ततनुर्नवज्वरवती नृत्यश्लथाङ्गी तथा
मासैकप्रसवा ददाति सुरते पण्मासगर्भा सुखम् ।
विख्याता विरहस्य सङ्गमवती क्रुद्धा प्रसन्ना ऋतु-
स्नाने नूतनसङ्गमे मधुमदे रागास्पदं योषितः ॥ १ ॥"–शार्दूल०

भृशं कोविदा च सा । उक्तं च—

"विदग्धवनितापाङ्ग–सङ्गमेनापि यत् सुखम् ।
क तत् प्राकृतनारीणां, गाढालिङ्गनचुम्बनैः ? ॥ १ ॥"

एवं तया साकं विषयाननुभवतोऽपि भक्तामरस्तवजापे धर्मकरणे गुरुवचःश्रवणेऽपि महानादरस्तस्य । उक्तं च—

"यूनो वैदग्ध्यवतः, कान्तासहितस्य कामिनोऽपि भृशम् ।
किन्नरगेयश्रवणा–दधिको धर्मश्रुतौ रागः ॥ १ ॥"–आर्या

इति धर्ममन्तरान्तरा चकार । क्रमेण राज्यसुखभागभूत् सोमराजो राजा परमजैनः॥

॥ इत्येकविंशी कथा ॥

मे० वृ०—अथ भगवतः सर्वभयनाशकत्वं वर्णयन्नष्टमहाभयनाशकत्वमाह—(श्च्योतन्मदेत्यादि) ।

हे जिनेन्द्र ! भवदाश्रितानां लोकानां भयं नो भवतीत्यन्वयः । 'भवति' इति क्रियापदम् । किं कर्तृ ? 'भय' भीतिः । केषाम् ? 'भवदाश्रितानां' भवन्तं–त्वां आश्रिताः–स्वामित्वेन प्रपन्नास्तेषां भीतिरपि न,

---

१ छाया—

दवदग्धानि तृणानि पल्लवन्ति यथा वृष्टेन घनेन ।
विरहप्रदीप्तं मनः तिष्ठति तथा दृष्टेन प्रियेण ॥

तर्हि कुतो दुःखमिति भावः । किं कृत्वा ? 'दृष्ट्वा' विलोक्य । कं कर्मतापन्नम् ? 'इभं' हस्तिनम् । किंविशिष्ट इभम् ? 'ऐरावताभं' इन्द्रगजसदृशम्, तथा 'उद्धत' अविनीतम् । किं कुर्वन्तम् ? 'आपतन्तं' सम्मुखमागच्छन्तम् । पुनः किंभूतम् ? 'श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादविवृद्धकोप' अस्यार्थः समासादेव, स चैवम्—श्च्योतन्—क्षरन् स चासौ मदो—दानं श्च्योतन्मदः, तेन आविला—व्याप्ताः श्च्योतन्मदाविलाः, कपोलयोः मूले कपोलमूले, विलोले च ते कपोलमूले च विलोलकपोलमूले, भ्रमन्त—चलन्तश्च ते भ्रमरा—भ्रमद्भ्रमराः, विलोलकपोलमूलयोः मत्तभ्रमद्भ्रमरा विलोलकपोलमूलमत्तभ्रमद्भ्रमराः, श्च्योतन्मदाश्च ते विलोलकपोलमूलमत्तभ्रमद्भ्रमराः श्च्योतन्मदा०, तेषां नादः—शब्दस्तेन विवृद्धः—पुष्टः कोपो—मन्युर्यस्य स तथा तम् । अनेनात्यन्तव्याकुलत्वेन दुर्वारत्वमाह । ऐरावतस्य आभेव आभा यस्य स तथा त, 'उष्ट्रमुखा०' ( सिद्ध० अ० ३. पा० १, सू० २३ ) इत्यादिना समासः । भवन्त आश्रिताः भवदाश्रिताः तेषाम् ॥ इति काव्यार्थः ॥ ३४ ॥

*Thy devotees are not afraid of wild elephants.*

Those who resort to Thee are not terrified when they see a wild elephant comparable with *Airāvata* rushing against them—the elephant whose anger is increased by the humming of the bees which are madly whirling round their restless temples soiled with the trickling rut (34)

✻ ✻ ✻ ✻

अथ सिंहभयं क्षिपति—

भिन्नेभकुम्भगलदुज्ज्वलशोणिताक्त-
मुक्ताफलप्रकरभूषितभूमिभागः ।
बद्धक्रमः क्रमगतं हरिणाधिपोऽपि
नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३५ ॥

गु० वि०—हे पुरुषसिंह! हरिणाधिपोऽपि—सिंहोऽपि क्रमगतं—फालप्राप्तं ते—तव क्रमयुगाचलसंश्रितं—चरणयुग्मपर्वतकृतावासं पुरुषं न आक्रमति—न ग्रहणाय उद्यतते—न हन्तुमुद्धावति । किंभूतो हरिणाधिपः ? भिन्नाभ्यां—विदारिताभ्यां इभकुम्भाभ्यां—हस्तिशिरःपिण्डाभ्यां गलता—पतता उज्ज्वलेन—रक्तश्वेतवर्णेन शोणिताक्तेन—रुधिरव्याप्तेन मुक्ताफलप्रकरेण—मौक्तिकसमूहेन भूषितो—मण्डितो भूमिभागो येन सः । एतेन भद्रद्विपहन्तृत्वान्महाविक्रमसूचा । बद्धः क्रमः—परिकरो येन स बद्धक्रमः, त्वदाश्रयणाद् बद्धः—कीलितः क्रमः—पराक्रमो यस्य स वा बद्धाः—नद्धाः क्रमाः—पादविक्षेपा यस्य स इति वृत्तार्थः ॥३५॥

माहात्म्ये कथा—

देवराजो महाटव्यां, मृगराजभयाकुलान् ।
सार्थिकान् पालयामास, स्तवाष्टापदजापतः ॥ १ ॥—अनु०

'श्री'पुरे देवराजो नाम महाश्रावको दुर्गतो भक्तामरस्याध्यापकोऽभूत् ।

"[1]पूया जिणंदेसु रई वएसु
जत्तो य सामाइयपोसहेसु ।
दाणं सुपत्ते भमणं सुतित्थे
सुसाहुसेवा सिवलोयमग्गो ॥ १ ॥"–उपजातिः

इति गुरूपदिष्टं धर्मं साधयति स्म। स धनोपार्जनाय सार्थिकैः सह 'साकेत'पुरमचलत्। क्रमेण सिंहशार्दूलभयङ्करीं व्याघ्रव्यालचित्रकरौद्रीं भ्रमद्भिल्लमालां शून्यदीर्घमालां (?) विषमविषधराधिष्ठितां वनानीमध्युवास सार्थः । तत्र पवित्रतरुतले सरिज्जले स्नात्वा यावद् देवराजः स्तवं सस्मार तावत् तडित्तुल्यजाज्वल्यमानपिङ्गनेत्रदंष्ट्राकरालवक्त्रं तीक्ष्णतरनखरं दीर्घलाङ्गूलास्फालनध्वनितभूधरकन्दरं तत्क्षणहतकुम्भिकुम्भस्थलनिःसृतरक्तमुक्ताफलच्छुरितभूतलं गुरुबुक्काक्कणं केसरिणं सार्थजनो ददर्श । भयद्रुताः सर्वे देवराजस्थानप्रदेशमागताः । स पञ्चत्रिंशद्वृत्तस्मृतितुष्टचक्राप्रसादादस्तम्भात् [2]सिंहम् । हिंस्रोऽपि कृपालुः क्रोधनोऽपि क्षमी जातो हर्यक्षो विलक्षः क्रमचङ्क्रमणाक्षमः । रञ्जिताः सार्थिका ददृशुः शान्तं पारीन्द्रम् । मृगराजोऽपि स्तुतिस्मृतिभाजं देवराजं नत्वा तदग्रे मौक्तिकत्रयं नखरेभ्यः प्रक्षिप्य यथास्थानमगमत् । सर्वे तुष्टुवुस्तन्मन्त्रमहिमानम् । स प्रथमजिनस्तवप्रभावमवर्णयत् । सार्थिकेऽभ्यो धर्मोपदेशं दत्तवांश्च । यथा—

"विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरति(रुचि)र्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १ ॥–द्रुतविलम्बितम्

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोपिति रतिर्लोकापवादाद् भयम् ।
भक्तिश्चार्हति शक्तिरात्मदमने संसर्गमुक्तिः खले
यत्रैते निवसन्ति निर्मलगुणाः श्लाघ्यास्त एव क्षितौ ॥ २ ॥"–शार्दूल०

इति श्रुत्वा सर्वे जिनधर्मभाजो जाताः । देवराजं गुरुमिवामंसत । क्रमेण 'साकेत'-पुरं प्राप । [3]रसोद्भवविक्रयाद् धनर्द्धिः । धर्मोदयात् सम्पन्नं सर्वम् । उक्तं च—

"राज्यं च सम्पदो भोगाः, कुले जन्म सुरूपता ।
पाण्डित्यमायुरारोग्यं, धर्मस्यैतत् फलं विदुः ॥ ३ ॥"

पुनः 'श्री'पुरमागत्य श्रीविलासमकरोद् देवराजो धनी ॥

॥ इति द्वाविंशी कथा ।

---

१ छाया—

पूजा जिनेन्द्रेषु रतिर्व्रतेषु यत्नश्च सामायिकपौषधेषु ।
दानं सुपात्रे भ्रमणं सुतीर्थे सुसाधुसेवा शिवलोकमार्गः ॥

२ सिंह. । ३ रसोद्भवं मौक्तिकम् ।

मे० वृ०—अथ सिंहभयमाह—(भिन्नेभेत्यादि)।

हे जिनेन्द्र! हरिणाधिपोऽपि ते—तव क्रमयुगाचलसंश्रितं पुरुषं न आक्रामति—न पराभवतीत्यन्वयः। 'आक्रामति' इति क्रियापदम्। कः कर्ता? 'हरिणाधिपः' सिंहोऽपीति, उपलक्षणाद् व्याघ्रादिहिंस्रजीवः। क कर्मतापन्नम्? ते—तव 'क्रमयुगाचलसंश्रितं' चरणद्वयरूपपर्वतमाश्रितं, पुरुषमिति शेषः। किंभूतम्? 'क्रमगतं' सिंहस्य चरणाग्रे प्राप्तम्। कथंभूतः हरिणाधिपः? 'बद्धक्रमः' शृङ्खलितपादः। पुनः किंविशिष्टो हरिणाधिपः? 'भिन्नेभकुम्भगलदुज्ज्वलशोणिताक्त.', (अस्य) अर्थः समासादेव, (स चैवं) भिन्नो—विदारितः स चासौ इभो—हस्ती भिन्नेभः, तस्य कुम्भौ भिन्नेभकुम्भौ, फलानीव फलानि, मुक्ताश्च तानि फलानि च मुक्ताफलानि, शोणितेन—रुधिरेण अक्तानि—खरण्टितानि—शोणिताक्तानि, तानि च तानि मुक्ताफलानि च शोणिताक्तमुक्ताफलानि, उज्ज्वलानि—शुक्लानि च तानि शोणिताक्तमुक्ताफलानि च उज्ज्वलशोणिताक्तमुक्ताफलानि, भिन्नेभकुम्भेभ्यो गलन्ति च तानि उज्ज्वलशोणिताक्तमुक्ताफलानि च भिन्नेभकुम्भगलदुज्ज्वलशोणिताक्तमुक्ताफलानि, तेषां प्रकरः—समूहस्तेन भूषितः—शोभावान् कृतः भूमेर्भागो येन सः। बद्धाः क्रमा यस्य स बद्धक्रमः। (क्रमे गतः) क्रमगतस्तम्। हरिणानां अधिपः हरिणाधिपः। क्रमयोर्युगं क्रमयुगं, अचल इव अचलः, क्रमयुगं स चासौ अचलश्च क्रमयुगाचलः, तं संश्रितः क्रमयुगाचलसंश्रितः तं तथा॥ इति काव्यार्थः॥ ३५॥

*Thy devotee is not attacked by a ferocious lion*

The lion who is about to pounce upon and who has adorned the ground by scattering on it a collection of pearls besmeared with the bright blood issuing forth from the temples of the elephants torn by him does not attack him, who has resorted to the mountain (in the form) of the pair of Thy feet, even though he is within his clutches (35)

✻ ✻ ✻ ✻

अथ दावानलभयं निरस्यति—

कल्पान्तकालपवनोद्धतवह्निकल्पं
दावानलं ज्वलितमुज्ज्वलमुत्स्फुलिङ्गम्।
विश्वं जिघत्सुमिव सम्मुखमापतन्तं
त्वन्नामकीर्तनजलं शमयत्यशेषम्॥ ३६॥

गु० वि०—हे कर्मक्षयकृशानो! त्वन्नामकीर्तनजलं—त्वदभिधानस्तवनघननीरम् अशेषं—वज्राग्निविद्युत्प्रदीपनादिभेदात् सकलं दावानलं—वनवह्निं शमयति—विनाशयति। किंभूतं दावानलम्? कल्पान्तकालपवनेन—युगान्तसमयवातेन उद्धतः—उत्कटो यो वह्निः—अग्निस्तेन कल्पं—समं कल्पान्तवातेन उद्धतः—प्रेरितो—विस्तारितो यो वह्निस्तत्कल्पं वा, ज्वलितं—दीप्तं, उज्ज्वलं—ज्वालारक्तं, उत्स्फुलिङ्गं—उछलद्वह्निकणं, विश्वं जिघत्सुमिव—जगजि-

ग्रसितुमिव सम्मुखमापतन्तं–अभिमुखमायान्तम् अशेषं–सामस्त्येन, सर्वदिग्व्यापकं वा । त्वन्नामस्मरणनीरं दावानलं स्फेटयतीत्यर्थः । इति वृत्तार्थः ॥ ३६ ॥

प्रभावे कथा ( ग्रन्थाग्रं १२०० )—

तृणवृक्षलताकीर्णे, कान्तारे जातवेदसम् ।
ज्वलन्तमरुधल्लक्ष्मी–धरः सार्थशिरोमणिः ॥ १ ॥

'प्रतिष्ठान'पुरे लक्ष्मीविलासलालसो लक्ष्मीवान् लक्ष्मीधरो नाम सार्थवाहोऽवात्सीत् । स भक्तामरस्तवमधीत्य ध्यायति स्म । सोऽन्यदा—

"या श्रीः सरोरुहाम्भोधि–विष्णुवक्षसि सा श्रुतिः ।
या पुनर्व्यवसायाब्धौ, लक्ष्मीः साऽध्यक्षमीक्षते ॥"

इति विचिन्त्य वृषभ-करभ-वेसर खर-महिष-शकटाद्युह्यमानागण्यपण्यपूर्णं सार्थं कृत्वा वणिज्यायै पूर्वां दिशमगच्छत् । तदा भीष्मग्रीष्मर्तुः कलिरूपः प्रावर्तिष्ट । उक्तं च—

"विधत्ते यत् तोषं जडपरिचितौ गोपतिकराः
कठोरा जायन्ते कथमपि न तृष्णा विरमति ।
मुदे दोषारम्भो भवति भुवि वैरस्य घटना
तदेष ग्रीष्मर्तुः किमु नुकलिकालं तुलयति ? ॥ १ ॥"—शिखरिणी

तत्रर्तौ निरन्तरसर्जार्जुनवञ्जुलवरणवटतालतमालहिन्तालनागसागपुन्नागशिंशपशमी-वंशजालरुद्धां रौहिषार्जुनग्रन्थिकमुस्तानलग्रामर्णाकाशमुञ्जमुञ्जास्तम्बादितृणच्छन्नां वनानीमध्युवास सार्थः । सार्थवाहः पवित्रीभूय स्तवमजपत् । अत्रान्तरे ज्वालामालाकरालो दन्दह्यमानवंशशोश्रूयमाणत्राट्कारारवो महादवः पूर्वं पूर्वस्यामुत्थितः क्षणेन दक्षिणामरौत्सीत् । वारुणी कीलाभिररुणामकरोत् । कौबेरी मार्थिनां वैरिणी निरमापयत् । एवं वंशघर्षणभवे दवे प्रसर्पति त्रस्ताः सार्थजनाः । वस्तुरक्षा दूरे, जीविताशाऽपि मुक्ता । पदमपि न नंष्टुमलं लक्ष्मीधरसविधमागत्य तच्छरणं प्रपन्नाः । उक्तं च—

"आर्त्ता देवान् नमस्यन्ति, तपः कुर्वन्ति रोगिणः ।
निर्धना विनयं यान्ति, वृद्धा नारी पतिव्रता ॥ १ ॥"—अनु०

लक्ष्मीधरध्यानतः स्तवषट्त्रिंशद्वृत्ताविर्भूतचक्राकथितैतद्वृत्ताभिमन्त्रितपाथःसेकादेव दवानलः शशाम, नाचक्राम सार्थसीमाम्, जगाम स्वमतुलाम् । सर्वेऽपि कुशलिनो विस्मिताः पप्रच्छुः । स युगादिदेवस्तवं नुनाव जिनधर्ममाहात्म्यं च । उक्तं च—

---

१ '०सायोरथा' इति ग–पाठ । २ जडानां–मूर्खाणां परिचितौ–परिचये, पक्षे जलपरिचितौ, डलयोः सावर्ण्यात् । ३ गोपतीनां–राज्ञां कराः–राजस्वानि, पक्षे सूर्यकिरणानि । ४ दोषाणां–अपराधानां आरम्भः–प्रारम्भः; पक्षे दोषायाः–निशाया आरम्भः । ५ वैरस्य–शत्रुभावस्य घटना; पक्षे विरसस्य–निर्जलस्य भावो वैरस्यं तस्य घटना । ६ 'मुञ्जमुञ्जास्तम्ब' इति ख–पाठः । ७ 'नीं मध्ये उवास सार्थः' इति क–पाठः ।

"आधिव्याधिविरोधादि, सर्वं बाधानिबन्धनम् ।
विध्यापयत्याशु धर्मेण, घनेनेव दवानलः ॥ १ ॥"–अनु०

**सार्थलोकोऽप्युत्तमसेवितत्वाद् दृष्टप्रत्ययत्वाच्च जिनधर्ममादृतवान् हिरण्यमुपार्ज्य लक्ष्मीधरः स्वपुरमासरत् । कदाचित् पुरे उत्थितं वज्राग्निं दुःशमं स्तववृत्तजप्ताम्भःसेचनादुपाशीशमत् सार्थेशः । रञ्जितो नितरां तन्नगरीयो राजा श्रीजिनेन्द्रं देवममन्यत लक्ष्मीधरं धार्मिकशेखरं बहु मेने । इत्थं जिनशासनं प्रभावयन् सर्वसुखकीर्तिभाजनमजनि लक्ष्मीधरः ॥**

**॥ इति त्रयोविंशी कथा ॥**

**मे० वृ०**—अथ वह्निभयनाशमाह—( कल्पान्तेत्यादि ) ।

हे जिनेन्द्र ! त्वन्नामकीर्तनजलं दावानलं शमयतीत्यन्वयः । 'शमयति' विध्यापयति इति क्रियापदम् । किं कर्तृ ? 'त्वन्नामकीर्तनजलं' भवदभिधानस्य यत् कीर्तनं–स्तवनं तल्लक्षणं जलं–पानीयम् । कं कर्मतापन्नम् ? 'दावानलम्' । "दवो दावो वनवह्निः" (**अभि० का० ४, श्लो० १६७**) इति **हेमसूरयः**, वनपदसन्निधानादुत्कटत्वं ध्वन्यते, तदेव स्पष्टयति–कीदृशं दावानलं ? ( **'कल्पान्तकालपवनोद्धतवह्निकल्पं'** ) कल्पान्तकालस्य यः पवनो–वायुस्तेन उद्धतो–दुर्वारो यः वह्निः–अग्निस्तस्य **कल्पः**–आचारो यस्य, तत्तुल्यमित्यर्थः, नात्र ईषदपूर्णार्थे कल्पप्प्रत्ययः, तथा सती उत्कटताभङ्गात । **पुनः कीदृशं** दावानलम् ? 'ज्वलितं' प्रदीप्यमान–प्रवर्द्धमानावस्थं, न प्रशाम्यन्तमिति भावः । पुनः कीदृशम् ? **'उज्ज्वलं'** विकासितं–प्रसरमाणम् । "उज्ज्वलस्तु निरागिनि, शृङ्गारे विशदे दीप्ते" **इत्यनेकार्थः ( श्लो० १२२६–१२२७)**, "उज्ज्वलं रक्तम्" इति **कौशल्याम्** । पुनः किंविशिष्टरूपम् ? 'उत्स्फुलिङ्गं' वह्निकणैः प्रबलम् । इवोत्प्रेक्षते । पुनः कीदृशम् ? 'विश्वं जिघत्सुमिव' जगद्भक्षितुमुत्सुकमिव । किं कुर्वन्तम् ? सम्मुखं यथा (स्यात्) तथा आपतन्तं–आगच्छन्तम्, अत्र यद्यपि आपतन्तमित्यनेन सम्मुखत्वमुक्तार्थं तथापि सम्मुखपदसन्निधानात् आपतन्तं–शीघ्रमागच्छन्तमित्येवं व्याख्येयम्, अन्यथा पौनरुक्त्यात् । पुनः कीदृशम् ? 'अशेषं' सर्वम् ॥

**समासाश्च**—कल्पश्चासौ अन्तश्च कल्पान्तः, स चासौ कालश्च कल्पान्तकालः, तस्य पवनेन उद्धतः स चासौ वह्निश्च तस्य कल्प–आचारो यस्य स तथा तम् । दावश्चासौ अनलश्च दावानलस्तम् [तत्] । ऊर्ध्वं स्फुलिङ्गा यस्य स तम् । जिघत्सुमित्यत्र अत्तुमिच्छति–जिघत्सति इति जिघत्सुस्तम् । अद्धातोः 'घस्लसनद्यतनीघञ्चलि' ( अ० ४, पा० ४, सू० १७ ) इति **सिद्धहैमसूत्रात् घस्** आदेशो, 'घस्लृ अदने' धातुर्वा । तव नाम त्वन्नाम, त्वन्नाम्नः कीर्तनं त्वन्नामकीर्तनं, तच्च तज्जलमिव त्वन्नामकीर्तनजलम् । शमयतीत्यत्र 'शमोऽदर्शने' (अ० ४, पा० २, सू० २८) **हैमसूत्रात्** ह्रस्वः । न विद्यते शेषं यस्य स अशेषस्तम् ॥ इति काव्यार्थः ॥ ३६ ॥'

*Thy name extinguishes conflagration*

The water (in the form) of mentioning Thy name completely extinguishes the conflagration which resembles the fire kindled by the hurricane (furiously blowing) at the time of the destruction of the world, which is fully ablaze and bright and from which flash forth the sparks and which approaches as if with a desire to swallow the entire universe (36)

※ ※ ※ ※

अथ भुजङ्गभयं दलयन्नाह—

रक्तेक्षणं समदकोकिलकण्ठनीलं
क्रोधोद्धतं फणिनमुत्फणमापतन्तम् ।
आक्रामति क्रमयुगेन निरस्तशङ्क-
स्त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ३७ ॥

गु० वि०—हे नागपतिसेव्य! यस्य पुंसो हृदि त्वन्नामनागदमनी स्यात् । त्वन्नामैव नागदमनी—ओषधिविशेषो जाङ्गुलीविद्या वा । कोऽर्थः? । यः पुरुषः स्त्री वा त्वन्नाममन्त्रं चित्ते धत्ते सदेत्यर्थः । स निरस्तशङ्को—निर्भयः क्रमयुगेन—निजपदद्वन्द्वेन फणिनं—सर्पमाक्रामति—घर्षति रज्जुवत् स्पृशतीति । क्रमयुगग्रहणेन विशेषं द्योतयति । सामान्योऽपि सर्पः पादाहतः कुप्यति । दुष्टविषधरस्य का वार्ता? । अथ पदोपलक्षणात् हस्तशरीराभ्यां घृष्टोऽपि न कोपवान् स्यात् । किंभूतम्? रक्तेक्षणं—ताम्रनेत्रं समदकोकिलकण्ठनीलं—मत्तपिकगलकालं क्रोधोद्धतं—कोपोत्कटं—ईर्ष्यादुदान्तं उत्फणं—ऊर्ध्वीकृतफटं आपतन्तं—सम्मुखं धावन्तम् ॥ इति वृत्तार्थः ॥ ३७ ॥

प्रभावे कथा—

'नर्मदा'तटवास्तव्य—श्रेष्ठिपुत्री दृढव्रता ।
पुष्पस्रजमिवोग्राहि—मग्रहीत् करपङ्कजे ॥ १ ॥—अनु०

श्री'नर्मदा'नदीतटे 'नर्मद'पुरे पुरश्रेष्ठी महेभ्यो नाम यथार्थनामा । तत्सुता कला गुणपूर्णा द्वैधमपि दृढव्रता भक्तामरस्तवं शुद्धमबुध्यत सा । अन्येद्युस्तत्र पुरे वणिज्यार्थे दशपुरान्माहेश्वरः कर्मणो नामागमत् । कर्मणस्य महेभ्येन सह मैत्री जाता । श्रेष्ठिना स्वगृहे न्यमन्त्रि । कर्मणेन भुञ्जानेन श्रेष्ठिसुता दृष्टा । गाढानुरागोऽभूत् । कपटश्रावकीभूय कन्यार्थं धनाशनवसनदानादिना श्रावका मित्राणि कृतानि तेन । उक्तं च—

"ऋतौ विवाहे व्यसने रिपुक्षये
प्रियासु नारीष्वधनेषु बन्धुषु ।

यशस्करे कर्मणि मित्रसङ्ग्रहे
धनव्ययोऽष्टासु न गण्यते बुधैः ॥ १ ॥"–वंशस्थम्

मित्रैर्महेभ्याभ्यर्णे स श्लाघितः। कन्या च याचिता श्रेष्ठिना।

"कुलं च शीलं च सनाथता च
विद्या च वित्तं च वपुर्वयश्च।
एतानि सप्त प्रविलोक्य देया
ततः परं भाग्यवशा हि कन्या ॥ १ ॥"–उपजातिः

इति विचार्य वर्या दिक्करी तस्मै दत्ता। परिणीय स्वपुरमागमद् गृहिणीयुक् कर्मणः। गृहागतो जलवत् स्वधर्मं शिश्राय। श्वपुच्छवद् वक्रतां नाहासीत्। सा सुश्राविका निशि न भुङ्क्ते, अन्यदेवान् न वन्दते, अनन्तकायाद्यभक्ष्यं नाश्नाति। श्वशुरवर्गो मिथ्यादृक्। प्रिये! स्वकुलोचितं धर्मं कुरु, स्त्रियः पतिवर्त्मगा भान्ति इत्युक्ताऽपि पत्या सा धर्मं नात्यजत्। कर्मणो भिन्नधर्मेयमिति द्वितीयां पर्यणैषीत्। वारकेण द्वयोः करे भुङ्क्ते। दृढव्रता निशाशनं न दत्ते। तं याचन्तं ब्रूते—कान्त! रात्रिभोजने महान् दोषः। उक्तं च—

"उलूककाकमार्जार–गृध्रशम्बरशूकराः।
अहिवृश्चिकगोधाश्च, जायन्ते रात्रिभोजनात् ॥ १ ॥"–अनु०

इत्युक्तोऽपि नाबुध्यत। दुस्त्यजो दर्शनरागः। उक्तं च—

"कामरागस्नेहरागा–वीषत्करनिवारणौ।
दृष्टिरागस्तु पापीयान्, दुरुच्छेदः सतामपि ॥ १ ॥"–अनु०
–(वीतरागस्तोत्रे, प्र० ६, श्लो० १०)

माहेश्वरी पतिं प्रतारयति स्म। एषा भिन्नधर्मा दुराचारैव भासते। स्वदेवगुरुनमनबुद्ध्या क्वापि प्रयाति। कार्मणं वा कारयति न वेद्मि। परं त्वां कलङ्कयिष्यति। यदुचितं तत् कुरु। कर्मणः कार्मणकलङ्कभिया दृढव्रतामृतये कृष्णकुम्भीनसं[1] कुम्भे क्षिप्त्वा तद्गृहान्तः प्रच्छन्नमतिष्ठिपत्। प्रातस्तद्गृहमागात्। सा भक्तामरस्तवं गुणन्त्यासीत्। पीठादुत्थिता। तेनोक्तम्–मध्ये घटान्तर्मणिमालाऽस्ति तामानय। सा सप्तत्रिंशं वृत्तं स्मरन्ती गृहान्तरगमत्। घटे करं विक्षिप्य रज्जुमिव स्रजमिव स्तवोक्तस्वरूपं सरीसृपं निःशङ्का चकाम। लात्वा पतिपाणौ ददाना दूरादेव तेनोक्तम्–सत्यशीले! दूरे मुञ्च सर्पम्। मुक्तस्तया। मिलितः श्वशुरपक्षः। सपत्न्यपि स्तम्भितं क्षमाशीलं कृष्णोरगं विलोक्य एषा सर्पस्तम्भविद्याविदिति मेने। तत्रान्तरिक्षवागुदच्छलत्–रे रे पापाः! किं चिन्तयत?। इयं दृढव्रता पतिव्रता लोकद्वयहितं धर्ममाराधयति। एतद्धर्मप्रभावादेव भुजङ्गस्तम्भः। योऽस्या

१ श्यामसर्पम्।

विरूपं करिष्यति स स्वपापेनैव गलिष्यति। योऽस्या वाक्यं चाचरिष्यति स सर्वसुखभाजनं भविष्यति। इत्युक्त्वा तिरोहिता चक्रा। सर्वे पादयोः पेतुः। ततो धर्मं शुश्रुवुः, यथा—

"देवो जिनः सद्गुरुरेव सेव्यो
धर्मो विधेयः करुणाप्रधानः।
द्वाविंशतिं नैव कदाप्यभक्ष्य-
वस्तूनि भक्ष्याणि किमत्र लक्ष्म ॥ १ ॥"—इन्द्रवज्रा

षट्कर्मरताः श्राद्धा ब्राह्मणा एव। उक्तं च—

"देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः।
दानं चेति गृहस्थानां, षट् कर्माणि दिने दिने ॥ १ ॥"—अनु०

शुचितया कर्माणि कुर्वते।

उक्तं च—

"सत्यं शौचं तपः शौचं, शौचमिन्द्रियनिग्रहः।
सर्वभूतदया शौचं, जलशौचं तु पञ्चमम् ॥ २ ॥"—अनु०

श्रावकगृहिण्यः पञ्चसु यतनां कुर्वते। उक्तं च—

"खण्डनी पेषणी चुल्ली, जलकुम्भः प्रमार्जनी।
पञ्चसूना गृहस्थस्य, तेन स्वर्गं न गच्छति ॥ ३ ॥"—अनु०

ज्ञातैतद्धर्मतत्त्वा जैनधर्मं प्रपन्नाः। सपत्न्यपि चरणयोरपतत्। तां क्षमयामास धर्ममङ्गीचकार। एवं प्रभावयामास दृढव्रता जिनशासनमिति।

॥ इति चतुर्विंशी कथा ॥

मे० वृ०—अथ सर्पभयनाशमाह—( रक्तेक्षणमित्यादि )।

हे मुनिनाथ! जिनेन्द्र! यस्य पुंसः हृदि त्वन्नामनागदमनी भवतीत्यन्वयः। 'भवति' इति क्रियापदम्। का कर्त्री? 'त्वन्नामनागदमनी'। भवतो यदभिधानं तदेव नागदमनी—सर्पदमनकारिणी यस्य जनस्य हृदि हृदये वर्त्तते स ) फणिनं क्रमयुगेन आक्रामति—पराभवतीत्यन्वयः। 'आक्रामति' इति क्रियापदम्। कः कर्ता? 'सः' पुरुषः। कं कर्मतापन्नम्? 'फणिनं' सर्पम्। फणिनमित्युक्त्या अतिभीषणता सूचिता। तामेवाह—'रक्तेक्षणं' आरक्तलोचनम्। पुनः किंविशिष्टम्? 'समदकोकिलकण्ठनीलं' मदेन—स्मयेन युक्तो यः कोकिलः—पिकस्तस्य कण्ठवन्नीलं—श्यामम्। पुनः किंविशिष्टम्? 'क्रोधोद्धतं' कोपदुर्धरम्। पुनः किं०? 'उत्फणं' उत्—ऊर्ध्वं फणाधारिणम्। किं कुर्वन्तम्? 'आपतन्तं' शीघ्रमागच्छन्तम्। केन आक्रामति? 'क्रमयुगेन' पदयुगलेन। भयं विना पद्भ्यां संघट्टते इत्यर्थः। कीदृशः स पुरुषः? 'निरस्तशङ्कः' सर्वथा भयवर्जितः॥

**समासा यथा**—रक्ते ईक्षणे यस्य स तम् । मदेन सह वर्तते यः स समदः, स चासौ कोकिलश्च समदकोकिलः, तस्य कण्ठस्तद्वन्नीलः समदकोकिलकण्ठनीलः तम् । क्रोधेन उद्धतः क्रोधोद्धतः तम् । फणा अस्यास्तीति फणी तम् । उत्-ऊर्ध्वं फणा यस्य स उत्फणः तम् । क्रमयोर्युगं क्रमयुगं तेन । निरस्ता शङ्का यस्य स निरस्तशङ्कः । तव नाम त्वन्नाम, नागा दम्यन्ते यया सा नागदमनी, त्वन्नामैव नागदमनी त्वन्नामनागदमनी ॥ इति काव्यार्थः ॥ ३७ ॥

*Thy name is an efficacious snake charm.*

That man in whose heart rests the snake-charm (*Nāga-damanī*) of Thy name fearlessly treads upon a red-eyed cobra, which is as black as the throat of an intoxicated cuckoo wild with rage and which is rushing forth with its hood raised up (37)

❀ ❀ ❀ ❀

अथ रणातङ्कं हरन्नाह—

वल्गत्तुरङ्गगजगर्जितभीमनाद-
माजौ बलं बलवतामपि भूपतीनाम् ।
उद्यद्दिवाकरमयूखशिखापविद्धं
त्वत्कीर्तनात् तम इवाशु भिदामुपैति ॥ ३८ ॥

**गु० वि०**—हे देवाधिदेव! त्वत्कीर्तनात्-त्वन्नामग्रहणादाजौ-सङ्ग्रामे बलवतामपि-शक्तानामपि भूपतीनां-राज्ञां बलं-सैन्यं शौर्यं वा भिदामुपैति-स्फुटनमायाति । किंभूतम्? वल्गतां-धावतां तुरङ्गाणां-गजानां च गर्जितानि भीमनादा-घोरवीरसिंहनादाश्च यत्र तत् । अथ(वा) क्रियाविशेषणमेतत् सङ्ग्रामस्य (?)। किमिव? तम इव। यथा उद्यद्दिवाकरमयूखशिखापविद्धं-उद्गच्छत्सूरकरततिप्रेरितं-सूर्यकरक्षिप्तं तमः-अन्धकारं भेदं याति-प्रलयं प्रयाति तद्वदित्यर्थः । इति वृत्तार्थः ॥ ३८ ॥

**मे० वृ०**—अथात्यन्तघोरत्वेन युद्धभयनाशं काव्यद्वयेनाह—(वल्गेत्यादि, कुन्ताग्रेत्यादि) ।

हे जिनेन्द्र! आजौ-सङ्ग्रामे त्वत्कीर्तनात् भूपतीनां बलं आशु-शीघ्रं भिदां उपैतीत्यन्वयः । 'उपैति' प्राप्नोति इति क्रियापदम् । किं कर्तृ? 'बलं' 'सैन्यम्' । कां कर्मतापन्नाम्? 'भिदां' विनाशम् । (कथम्?) 'आशु' शीघ्रम् । बलं केषाम्? 'भूपतीनां' राज्ञाम् । कस्मात्? 'त्वत्कीर्तनात्' तव स्तवनात् । कस्मिन्? 'आजौ' सङ्ग्रामे । कथंभूतानां भूपतीनाम्? 'बलवतां' ओजस्विनाम् । कीदृशं बलम्? ('वल्गत्तुरङ्गगजगर्जितभीमनादं') वल्गन्तो-मिलन्तो ये तुरङ्गा-अश्वा गजा-हस्तिनस्तेषां गर्जितानि तैर्भीमो-रौद्रो नादः-शब्दो यत्र तत् । इवोपमीयते । किमिव? तम इव । यथा तमः-अन्धकारं भिदां उपैति । किंविशिष्टं तमः? 'उद्यद्दिवाकरमयूखशिखापविद्धं' उद्यन्-उदयं प्राप्नुवन् यः दिवाकरः-सूर्यस्तस्य मयूखाः-किरणाः तेषां शिखा-अग्राणि ताभिरपविद्धं-पराहतम् ॥

**समासा यथा**—तुरङ्गाश्च गजाश्च तुरङ्गगजं, सेनाङ्गत्वादेकवद्भावः, वल्गच्च तत् तुरङ्गगजं च वल्गत्तुरङ्गगजं, तस्य गर्जितानि वल्गत्तुरङ्गगजगर्जितानि, तैः भीमो नादो यत्र तत् । बलं येषां ते बलवन्तस्तेषाम् । भुवः पतयो भूपतयस्तेषाम् । उद्यंश्चासौ दिवाकरश्च उद्यद्दिवाकरः, तस्य मयूखा उद्यद्दिवाकरमयूखाः, तेषां शिखास्ताभिः अपविद्धं उद्यद्दिवाकरमयूखशिखापविद्धम् । तव कीर्तनं त्वत्कीर्तनं तस्मात् ॥ इति काव्यार्थः ॥ ३८ ॥

*Thy hymn ensures victory even in terrible wars*

The army of even mighty monarchs, wherein the horses are running at full gallop and wherein the elephants are making a tremendous noise by roaring, is immediately destroyed on the battlefield by praising Thee like the darkness when pierced by the sharp ends of rays of the rising sun (38)

* * * *

किञ्च—

कुन्ताग्रभिन्नगजशोणितवारिवाह-
वेगावतारतरणातुरयोधभीमे ।
युद्धे जयं विजितदुर्जयजेयपक्षा-
स्त्वत्पादपङ्कजवनाश्रयिणो लभन्ते ॥ ३९ ॥

**गु० वि०**—हे जिनेश्वर! त्वत्पादपङ्कजवनाश्रयिणः-त्वत्पदपद्मषण्डभाजो जना युद्धे-रणे जयं-विजयं लभन्ते-प्राप्नुवन्ति । किंभूते युद्धे ? कुन्ताग्रैः-भल्लाग्रैर्भिन्नानां-पाटितानां गजानां शोणितं-रक्तमेव वारिवाहो-जलप्रवाहः तस्मिन् वेगावतारात्-शीघ्रप्रवेशात् तरणे-प्लवने आतुरैः-व्याकुलैर्योधैः-भटैः भीमं-भयानकं तस्मिन् । किंभूता जनाः? विजितः-पराभूतो दुर्जयः-अजेयो जेयपक्षो-जेतव्यगणो यैस्ते । इति वृत्तार्थः ॥ ३९ ॥

**अत्र प्रभावे कथा**—

रणकेतोर्बलं भग्नं, राजसूनुगुणवर्मणा ।
एकाकिना महास्तोत्र-प्रभावादेव कानने ॥ १ ॥-अनु०

'मथुरायां' पुरि रणविजयलब्धकेतुः श्रीरणकेतुर्नृपः । तस्य लघुबन्धुर्गुणवर्मा । स जिनधर्मरक्तो दुष्टपाखण्डिविरक्तो भक्तामरस्तवजापासक्तो दाता भोक्ता महोत्कटः करटि-बलनिराकरिष्णुः प्रथितः ॥

अथ रणकेतुराजा पट्टदेव्याऽभाणि-देव! अयं गुणवर्मा तादृग् दृश्यते श्रूयते च बन्दिवृन्दनन्दितामन्दकीर्तिः सर्वजनप्रियः पुरान्तर्विलसति । यथा स्तोकैरेव दिनैः राज्यं वशीकृत्य हरिष्यति । राज्यहारी बन्धुरपि रिपुः । उक्तं च—

"तुल्यार्थं तुल्यसामर्थ्यं, मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं मित्रं, यो न हन्यात् स हन्यते ॥ १ ॥"–अनु०

राजोवाच–देवि! सोदरे कथं विरूपं करोमि? । दुर्लभो भ्राता । उक्तं च—

"देशे देशे कलत्राणि, देशे देशे च सूनवः ।
तं देशं नैव पश्यामि, यत्र भ्राता सहोदरः ॥ १ ॥"

देव्योचे–रिपुरूपे का सौदर्यबुद्धिः? । अस्मिन् सति त्वत्पुत्राणां क्व राज्यम्? त्वत्पुरतस्तवान्वये राज्यं गतम् । तव नामापि कश्चिन्न ग्रहीता । अथ सोदरत्वान्न हंसि, तर्हि राज्यादेककं निःसारयेत्युक्ते मन्दीभूतो बन्धुस्नेहः । उक्तं च—

"तावद् बन्धुमनोभूमौ, रम्या स्नेहवनावली ।
यावन्न ज्वलति स्त्रीणां, विश्लेषवचनानलः ॥ १ ॥"–अनु०

आहूय सेनान्यमवग् राजा–भद्र! गुणवर्मणे देशत्यागं ब्रूहि । तेन गत्वा उक्तो राजादेशः । कुमारोऽशुभस्य कालहरणं न विक्रमावसर इत्यादि विमृश्य निरगान्नगरात् । तदा तस्य निःसरणक्षणे वर्षर्तुरवर्तत । राज्ञीवचोवृत्तिमिरिवान्धकारितं सर्वदिग्भिः । दुर्जनमनोभिरिव गर्जितं जलधरैः । राजदुःप्रीत्येव क्षणदृश्यया लसितं चपलया । सुजनाश्रुतत्येव जृम्भितमासारधाराधोरण्या । भूपप्रतापैरिव नष्टं सूकरैः ( ग्रन्थाग्रं १३०० ) । रणकेतुकीर्तिपूरैरिवान्तर्हितं चन्द्रांशुभिः । पापपाखण्डिभिरिव ताण्डवितं शिखण्डिभिः । तास्तृणवल्लीकन्दमूललताङ्कुरवर्धिन्यो नदीनदसरस्सु वारिविस्तारिण्यो वर्षाः कलिमनुचक्रुः । उक्तं च—

"सर्वत्रोद्गतकन्दला[1] वसुमती वृद्धिर्जडानां[2] परा
जातं [3]निष्कमलं जगत् सुमलिनैर्लब्धा घनैरुन्नतिः ।
सर्पन्ति प्रतिमन्दिरं [4]द्विरसनाः संत्यक्तमार्गो जनो
वर्षाणां च कलेश्च सम्प्रति जयत्येकैव राज्यस्थितिः ॥ १ ॥"–शार्दूल०

स वनं भ्रमन् स्वस्य मनोवत्[5] तुङ्गं दानवद् विशालं कृत्यवत् सफलं भाववन्निर्झरजलार्द्रं भूधरमारूढः । तत्र कन्दरायां कन्दफलाशनः षट्त्रिंशच्छास्त्राभ्यासी स्तवं पञ्चपरमेष्ठिमन्त्रं च स्मरन्नस्थात् । एकोनचत्वारिंशद्वृत्तजापक्षणे प्रकटीभूयाप्रतिचक्रा वरमदात् तस्मै । स प्राज्यमजय्यं राज्यमयाचत । देव्या राज्यवरो दत्तोऽजेयश्च कृतः । देवी तिरोधाच्च । अथ तस्य धर्मवन्निर्मलश्चन्द्रमरीचिभिः कीर्तिवत् कुवलयानन्दनः शुभभाग्यवत् सफलितभूतलः स्वान्तवृत्तिवद् विजयदशमीबलिराजादिपर्वभिः कृतसज्जनहर्षकुतूहलः

१ कन्दल=(१) नवाङ्कुरः, (२) तिरस्कारः, कन्दलः=बाहुयुद्धम् । २ डलयोः सावर्ण्यात् जडानां–वारीणाम् । ३ निर्धनम् । ४ सर्पाः; दुर्जनाः । ५ 'सुमनोवत्' इति क–पाठः ।

कृतसप्तच्छदविकाशनः कमलवनप्रबोधनः काशपुष्पप्रकाशनः पाकितसर्वव्रीहितृणवल्लीप्रतानः समागच्छच्छरत्समयः कलिप्रतिच्छायः। उक्तं च—

"नक्षत्राण्यमलानि सम्प्रति जनो यात्येव मार्गस्थितः
सञ्जाताश्च जडाशयाः सकमला दोषाकरः सप्रभः।
सन्तापाय तथैनमण्डलमलं लोकस्य तीव्रैः करैः
संवृत्तः किमयं कलिः किमु शरत्कालो न विज्ञायते? ॥ १ ॥"—शार्दूल०

तत्रर्तौ रणकेतुराजा देशसाधनाय सर्वबलेन निरगात्। गिरिकान्तारे उत्कटकर्माणं शस्त्राभ्यासं कुर्वाणं गुणवर्माणं वीक्ष्य हननायादिदेश सैन्यम्। एको वने रुद्धः सैन्येन सिंहो मृगयूथेनेव। लग्नमायोधनं शस्त्राशस्त्रि खड्गाखड्गि शराशरि दण्डादण्डि। क्षणेन हतप्रतिहतं सैन्यं चक्रे कुमारेण तमोवृन्दं भास्वतेव। ततो रणकेतुरुत्थितो रणाय। कुमारेण चक्रावरप्रसादाद् राजाऽपि समपात्तसमस्तशस्त्रच्छत्रकेतुः कृतो रथात् पातितश्च। वनदेवताभिर्जयरवपुरःसर गुणवर्मशिरसि कुसुमवृष्टिः कृता। कुलीनताङ्कुशप्रेरितो नम्रोऽतिष्ठत् कुमारः। उक्तं च—

"नमन्ति सफला वृक्षा, नमन्ति कुलजा नराः।
शुष्कं काष्ठं च मूर्खाश्च, भज्यन्ते न नमन्ति च ॥ १ ॥"—अनु०

"साली भरेण तोये-ण, जलहरा फलभरेण तरुसिहरा।
विणएण य सप्पुरिसा, नमन्ति न हु कस्सइ भएण ॥ २ ॥"

विलक्षो लज्जितोऽभवद् राजा, विरक्तमनाः स्वचेतसि चिन्तयामास—

"अर्थं धिगस्तु बहुवैरकरं नराणां
राज्यं धिगस्तु सततं बहुशङ्कनीयम्।
रूपं धिगस्तु नियतं परिहीयमानं
देहं धिगस्तु परिपुष्टमपि व्रणाशि ॥ १ ॥"—वसन्ततिलका

अथ च—

"अवश्यं यातारश्चिरतरमुषित्वाऽपि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून्।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ १ ॥"—शिखरिणी

---

१ समागात्। २ पक्षे न इति पृथक् पदं ज्ञेयम्। ३ डलयोः सावर्ण्यात् जलाशयाः—सरोवराणि। ४ कमलैर्युक्तानि, पक्षे सश्रीका—धनिका.। ५ दोषाणा—अपराधाना आकर-समूहो यस्मिन् स दोषाकर., दोषां—रात्रिं करोतीति दोषाकरः—चन्द्र। ६ क्लेशाय, अतीव घर्माय। ७ राजमण्डल, सूर्यमण्डलम्। ८ 'भजन्ति' इति क ख-पाठः। ९ छाया—

शालिर्भरेण तोयेन जलधराः फलभरेण तरुशिखराणि।
विनयेन च सत्पुरुषा नमन्ति न खलु कस्यापि भयेन ॥

१० अयादित्यस्येव काव्यमित्युल्लेख. सुभाषितरत्नभाण्डागारे।

तथा यद्यहं पूर्वं स्त्रीवचसि नालगिष्यं, तदा रणे मानक्षतिं नाप्स्यम् । धिक् स्त्रीजातीयाः स्वार्थरताः अनर्थसार्थे क्षिपन्ति पुरुषम् । पुमानपि तदासक्तोऽचेतनो भवति । उक्तं च—

"तावदेव पुरुषः सचेतन-
स्तावदाकलयति क्रमाक्रमौ ।
यावदेव न कुरङ्गचक्षुषां
ताड्यते चपललोचनाञ्चलैः ॥ १ ॥"–[1]रथोद्धता

अथ

"संपीड्येवाहिदंष्ट्राग्नि–यमजिह्वाविषाङ्कुरान् ।
जगज्जिघत्सुना नार्यः, कृताः क्रूरेण वेधसा ॥ २ ॥–अनु०
संसार ! तव पर्यन्त–पदवी न दवीयसी ।
अन्तरा दुस्तरा न स्यु–र्यदि रे मदिरेक्षणाः ॥ ३ ॥"–अनु०

इत्यादि संचिन्त्य[2] राज्ञा सामन्तैः सह पर्यालोच्य सज्जितो राज्याभिषेकविधिः । गुणवर्माणं सिंहासनेऽधिरोप्य तीर्थजलैरभ्यषिञ्चन्नरेन्द्रः । स्वयं वने जटाधारी जातः । स राजा 'मथुरायां' समेतः भ्रातृव्यादीनां राज्यविभागं दत्त्वा एकातपत्रं राज्यं निष्कण्टकं राज्यसुखमद्वैतमभजत् । निरन्तरगुरूपदेशश्रवणतीर्थयात्राकरणपरोपकारनिर्माणादिभिर्मनुष्यफलं जग्राह । जिनधर्मं प्रभावयामास । पर्वतिथिषु प्रभूतदुरितखण्डनानि निरतिचाराणि सामायिकपौषधादिकव्रतानि पालयामास । श्रीयुगादिजिनादिप्रासादानचीकरद् गुणवर्मा जैननरेन्द्रः ॥

॥ इति पञ्चविंशी कथा ॥

मे० वृ०—हे जिनेन्द्र ! पुरुषा युद्धे जयं लभन्ते इत्यन्वयः । 'लभन्ते' इति क्रियापदम् । के कर्तारः ? 'पुरुषाः' इत्यध्याहारः । कं कर्मतापन्नं ? 'जयं' सर्वतोऽभ्युदयम् । कीदृशाः पुरुषाः ? 'त्वत्पादपङ्कजवनाश्रयिणः' तव चरणस्वरूपकमलवनाश्रयभाजः । कमलवनाश्रयात् अत्यन्तसौकुमार्यख्यापनेन लीलयैव जयप्राप्तिरित्यतिशयालङ्कारः । पुनः कीदृशाः पुरुषाः ? 'विजितदुर्जयजेयपक्षाः' पराभूतदुर्द्धरवैरिसमूहाः । कस्मिन् ? 'युद्धे' । कीदृशे ? 'कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुरयोधभीमे' । अस्यार्थः समासादेव, स चैवम्—कुन्ता–भल्लास्तेषां अग्राणि तैर्भिन्ना–विदारिता ये गजास्तेषां शोणितानि–रुधिराणि तान्येव वारीणि–जलानि तेषां वाहाः–प्रवाहास्तेषु वेगेन अवतार–उत्तरणं तस्मात्

---

१ रथोद्धता-लक्षणम्—
"रान्नरैर्नरलगै रथोद्धता" ।

२ 'विचिन्त्य' इति ख-पाठः ।

तरणं–प्लवनं तैरातुरा–व्याकुला ये योधाः–सुभटास्तैर्भीमं तस्मिन्, तथा जेतुं योग्या जेयास्तेषां पक्षा जेयपक्षाः, दुर्–दुःखेन जीयन्ते इति दुर्जयास्ते च ते जेयपक्षाश्च दुर्जयजेयपक्षाः, विजिता दुर्जयजेयपक्षा यैस्ते विजितदुर्जयजेयपक्षाः। अत्र 'क्षय्यजय्यौ' (अ० ४, पा० ३, सू० ९०) इति हैमसूत्रात् जय्य इति स्यादेवं न चिन्त्यं, जेतुं शक्यो जय्यः शत्रुरिति शक्यार्थविषयत्वात् तस्य, अत्र तु जेतुं अशक्यानामपि पक्षाणां विजयस्य वाच्यत्वात् अत एव दुर्जेय इति विशेषणं युक्तमिति न तथा ॥

(**अथ समासाः**)—तव पादौ त्वत्पादौ, पङ्काज्जायन्त इति पङ्कजानि, तेषां वनं–पङ्कजवनं, त्वत्पादावेव पङ्कजवनं त्वत्पादपङ्कजवनं, तत् आश्रयन्ते इत्येवंशीलाः त्वत्पादपङ्कजवनाश्रयिणः ॥ इति काव्यार्थः ॥ ३९ ॥

Those who take shelter under the lotus-grove of Thy feet gain victory by vanquishing the unconquerable enemies in the war which is horrible on account of the warriors being impatient to cross the powerful streams of blood gushing forth from (the temples of) the elephants pierced by the pointed ends of lances. (39)

* * * *

अथ जलापदं प्रशमयन्नाह—

अम्भोनिधौ क्षुभितभीषणनक्रचक्र-
पाठीनपीठभयदोल्बणवाडवाग्नौ ।
रङ्गत्तरङ्गशिखरस्थितयानपात्रा-
स्त्रासं विहाय भवतः स्मरणाद् व्रजन्ति ॥ ४० ॥

गु० वि०—हे भववार्धिपोत! अम्भोनिधौ–समुद्रे एवंविधे सति सांयात्रिका जना भवतः स्मरणात् त्रासम्–आकस्मिकं भयं विहाय–त्यक्त्वा व्रजन्ति–क्षेमेण स्वस्थानं यान्ति। किंभूते? क्षुभितानि–क्षोभं गतानि भीषणानि–रौद्राणि नक्रचक्राणि च पाठीनाश्च पीठाश्च भयदो–भीकृदुल्बणः–प्रकटो वाडवाग्निश्च यत्र स तथा तस्मिन्। किंभूता जनाः? रङ्गत्तरङ्गशिखरस्थितयानपात्राः–उच्छलत्कल्लोलाग्रवर्तिवाहनाः। नक्रचक्रं–दुष्टजलजन्तुवृन्दम्। पाठीनपीठौ–मत्स्यभेदौ। वडवाग्निः–वडवानलः। इति वृत्तार्थः ॥ ४० ॥

प्रभावोदाहरणं यथा—

'तामलिसी'पुरीवासी, धनावहवणिग्वरः ।
क्षुब्धेऽब्धौ देवतातुष्ट्या, श्रेयसा पुरमीयिवान् ॥ १ ॥–अनु०

धनकनकवसनरत्नसपत्नीकृतालकायां नन्दनवनासहनीभूतारामाभिरामायां देवीरूपसरूपनागरिकरामायां श्रीसञ्चयमालिन्यां 'तामलिप्त्यां' पुरि बहुधनो धनावहनामा श्रेष्ठी। सोऽन्यदा श्रीजिनेश्वरसूरिदेशनामशृणोन्मसृणमनाः। यथा—

१ 'जिनेश्वरदेशनां' इति ख–पाठः।

"वन्द्यास्तीर्थकृतः सुरेन्द्रमहिताः पूजां विधायामलां
सेव्याः सन्मुनयश्च वन्द्यचरणाः श्रव्यं च जैनं वचः ।
सच्छीलं परिपालनीयमतुलं कार्यं तपो निर्मलं
ध्येया पञ्चनमस्कृतिश्च विदुषा भाव्या च सद्भावना ॥ १ ॥"–शार्दूल०

तत्रापि धर्मे जीवदया सर्वत्रापि सारोक्ता—

"[1]देविंदचक्कवट्टि-त्तणाइं भुत्तूण सिवसुहमणन्तम् ।
पत्ता अणंतसत्ता, अभयं दाऊण जीवाणम् ॥ १ ॥"–आर्या
यो दद्यात् काञ्चनं मेरुं, कृत्स्नां चापि वसुन्धराम् ।
सागरं रत्नपूर्णं वा, न च तुल्यमहिंसया ॥ २ ॥–अनु०
[2]हंतूण परप्पाणे, अप्पाणं जो करेइ सप्पाणम् ।
अप्पाणं दिवसाणं, कएण नासेइ अप्पाणम् ॥ ३ ॥"–आर्या

इत्याकर्ण्य प्राणान्तेऽपि स्थूलं निरपराधं जीवं न हन्मि न घातयामीति व्रतं जग्राह । श्रावकोऽभूत् । भक्तामरस्तवं पठित्वाऽस्मार्षीच्च । सोऽन्यदा प्रभूताऽपि विभूतिस्त्यागभोगादिना क्षीयते निर्व्यवसायानामिति विमृश्य पुरपरद्वीपयोग्यभाण्डैर्वाहनपञ्चकमापूर्य शुभमुहूर्ते नारिकेलादिभिः[3] समुद्रपूजां कृत्वा बोहित्थमारूढः[4] । युगपच्चलितानि पक्षिवत् [5]केनिपातपक्षप्रेरणया वहित्रकाणि[6] । स्वल्पैर्दिनैः 'सिंहल'द्वीपं प्रापुः । जातो यथेप्सितो लाभः । मणिमुक्ताप्रवालकर्पूरचन्दनादीनि प्रतिभाण्डानि जगृहिरे । बोहित्थानि भृत्वा पूरितानि स्वदेशं प्रति । क्रमेणान्तःसागरं प्रविष्टेषु यानपात्रेषु नाविका अचीकथन्–श्रेष्ठिन्! इह विकटाक्षी देवी पशुबलिं गृह्णाति सांयात्रिकेभ्यः । ब्रूहि यथा तटवर्तिग्रामादानीय करं दद्मः, अन्यथा श्रेयो न । श्रेष्ठ्याऽऽह स्म–भो कर्णधाराः! मह्यं पशुघातो न रुचितः । सर्वथा जीवान् न हन्मि न घातयामीति । भोगं निरेनसं यच्छामि देव्याः । यत उक्तं च—

"दमो देवगुरूपास्ति-र्दानमध्ययनं तपः ।
सर्वमप्येतदफलं, हिंसां चेन्न परित्यजेत् ॥ १ ॥–अनु०
हिंसा विघ्नाय जायेत, विघ्नशान्त्यै कृताऽपि हि ।
कुलाचारधियाऽप्येषा, कृता कुलविनाशिनी ॥ २ ॥"–अनु०

---

१ छाया—

देवेन्द्रचक्रवर्तित्वानि भुक्त्वा शिवसुखमनन्तम् ।
प्राप्ता अनन्तसत्त्वा अभय दात्त्वा जीवेभ्य ॥

२ छाया—

हत्वा परप्राणान् आत्मानं य· करोति सप्राणम् ( सबलम् ) ।
(स.) अल्पानां दिवसानां कृते नाशयति आत्मानम् ॥

३ नालिकेरादिभिः । ४ नावम् । ५ के–जले निपात्यन्ते–नीयन्ते नावोऽनेनेति केनिपातः–अरित्रम् । ६ प्रवहणानि ।

इति कथितेऽभ्युन्नता घनाः । ववुर्वाताः । वृत्तोक्तस्वरूपेऽम्भोधौ धनावहः सर्वं सस्मार । कलकलं कुर्वन्तः समकालमलपन् नाविकाः–श्रेष्ठिन्! एकाग्रहो मा भूः । देव्युपदां देहि यथा कुशलं स्याद् वाहनानाम् । आत्मार्थे सर्वेऽधर्ममपि समाचरन्ति विज्ञाः । उक्तं च—

"त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत् ॥ १ ॥–अनु०
आपदर्थे धनं रक्षेद्, दारान् रक्षेद् धनैरपि ।
आत्मानं सततं रक्षेद्, दारैरपि धनैरपि ॥ २ ॥"–अनु०

अल्पनाशे बहुरक्षणं युक्तम् ।

"सर्वनाशे समुत्पन्ने, अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं, सर्वनाशो हि दुस्तरः ॥ १ ॥"–अनु०

तत् सर्वथाऽप्यात्मा रक्ष्य एव । अतः पशुबलिं यच्छेत्युक्तोऽपि स्वध्यानान्नाचलत् श्रेष्ठिसत्तमः । तस्मिंश्चत्वारिंश वृत्तं जपति व्यन्तरीकृतोत्पाताः प्रलीनाः । विकटाक्षी प्रकटीभूताऽनर्घ्यं रत्नमढौकयत् । देव्युवाच-भो धर्ममते! त्वन्निश्चलव्रतपालनतया चक्राज्ञया च तुष्टाऽस्मि । वर ब्रूहि—

"अमोघा वासरे विद्यु–दमोघं निशि गर्जितम् ।
नारीबालवचोऽमोघ–ममोघं देवदर्शनम् ॥ १ ॥"–अनु०

इत्युक्ते श्रेष्ठी जीवहत्यावारणवरमयाचत । अमृतभुजां देवानां नोचितः पशुवधाभिलाषो निरर्थकः पापहेतुः । देव्याऽङ्गीकृतम् । ततः परं छुटिताः पशुबलेः पोतवणिजः । वाहनपञ्चकं स्तम्भतीर्थे क्षणेनायातं क्षेमेण । असङ्ख्यधनभाग् चक्रायुक्श्रीयुगादिजिनप्रासादमचीकरत् । तीर्थयात्रा नैकशः मूर्त्ति(सूत्रि?)ताः पवित्राः । अत्यन्तानन्दसुखभाजनमजनि धनावहः ॥

॥ इति षड्विंशी कथा ॥

मे० वृ०—समुद्रभयनाशमाह–( अम्भोनिधावित्यादि ) ।

हे जिनेन्द्र! जना भवतः स्मरणात् व्रजन्ति–यान्ति इत्यन्वयः । 'यान्ति' इति क्रियापदम् । के कर्तारः? 'जनाः' । किं कर्मतापन्नम्? 'स्वस्थानम्' इति शेषः । कस्मात्? 'भवतः स्मरणात्' मनसि चिन्तनात् । किं कृत्वा? 'त्रासं विहाय' ( आकस्मिकं भय ) परित्यज्य । कीदृशा जनाः? अम्भोनिधौ–समुद्रे रङ्गन्तः–सर्वतश्चलन्तो ये तरङ्गाः–कल्लोलास्तेषां शिखराणि-अग्राणि तेषु स्थितानि यानपात्राणि–प्रवहणानि येषां ते । कीदृशे अम्भोनिधौ? 'क्षुभितभीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्नौ' । अर्थस्तु समासादेव, स चैवम्–नक्राणां–जलचराणां चक्राणि–समूहा नक्रचक्राणि, पाठीनाश्च पीठाश्च मत्स्यभेदौ,

पाठीनपीठाः, भयं दत्ते इति भयदः, स चासौ उल्बणः—प्रकटश्च भयदोल्बणः विशेषणसमासः, भयदोल्बणश्चासौ वाडवाग्निः—वडवानलश्च भयदोल्बणवाडवाग्निः, भीषणानि—रौद्राणि च तानि नक्रचक्राणि च भीषणनक्रचक्राणि, भीषणनक्रचक्राणि च पाठीनपीठाश्च भयदोल्बणवाडवाग्निश्च भीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्नयः, क्षुभिताः—क्षोभं गता भीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्नयो यत्र स तथा तस्मिन् । अम्भसां निधिरम्भोनिधिस्तस्मिन् । रङ्गेत्यादिसमासः प्रागुक्त एव ॥ इति काव्यार्थः ॥ ४० ॥

*Thy panegyrist is not afraid of a stormy ocean*

Those who remember Thee fearlessly reach ( the shore, ) even when they are sailing in a vessel floating on the tops of the rising billows in the ocean, which is the abode of a manifest submarine fire and of the hosts of the ferocious and excited crocodiles and alligators. ( 40 )

⁂ ⁂ ⁂ ⁂

अथ रोगभयं भिन्दन्नाह—

उद्भूतभीषणजलोदरभारभुग्नाः
शोच्यां दशामुपगता श्च्युतजीविताशाः ।
त्वत्पादपङ्कजरजोऽमृतदिग्धदेहा
मर्त्या भवन्ति मकरध्वजतुल्यरूपाः ॥ ४१ ॥

गु० वि०—हे कर्मव्याधिधन्वन्तरे! मर्त्या—नराः उद्भूतभीषणजलोदरभारभुग्ना—उत्पन्नरौद्रोदरवृद्धिव्याधिभरवक्रीकृता भग्ना[1] वा पाठे मोटिताः[2] शोच्यां दशामुपगताः—दीनामवस्थां प्राप्ताः च्युतजीविताशाः—त्यक्तजीवितव्यवाञ्छाः एवंभूताः त्वत्पादपङ्कजरजोऽमृतदिग्धदेहाः—भवच्चरणकमलरेणुसुधालिप्तवपुषो मकरध्वजतुल्यरूपाः—कामसममूर्तयः—कमनीयकान्तयो भवन्ति । यथा सुधापानाभिषेकात् सर्वरोगनाशस्तथा भवत्पदपद्माश्रयणादपि सकलव्याधेरुपशमः । इति वृत्तार्थः ॥ ४१ ॥

प्रभावप्रकटनं यथा—

चक्रेश्वरीप्रसादेन, ज्ञातौषधिचिकित्सया ।
राजहंसकुमारस्य, रोगा नेशुर्महाभयाः ॥ १ ॥—अनु०

श्री'उज्जयिन्यां' पुरि राजशेखरो राजा । पट्टदेवी[3] विमला । तत्कुक्षिभूः राजहंसकुमारः सकलकलापारीणः शास्त्राभ्यासप्रवीणश्च । अथ दैवाद् विमलायां विपन्नायां कमला नाम पट्टराज्ञी जाता । सा राजहंसे द्वेषं धत्ते । अस्मिन् सपत्नीभवे राजवल्लभे सति मत्सुतस्य कथं राज्यम्? । अतः तन्मृतये छलं पश्यति । साऽन्यदा राज्ञि देशजयाय प्रस्थिते

१ 'भग्नाः' इत्यपि पाठः क्वचित् । २ 'भग्नपाठे मोटिता.' इति ख-पाठः । ३ 'पट्टे देवी' इति ख-पाठ. ।

पश्चात् पुरस्थस्य राजहंसस्य बहुगदकरमगदमदापयत् । कुमारदेहे ज्वरजलोदरादयो रोगाः प्रादुरभूवन् । कुमारेण सपत्नीमातुश्चेष्टितमिति[1] मान्त्रिकात् ज्ञातम् । अत्रस्थस्य मे मृत्युरेव ( ग्रन्थाग्रं १४०० ) । उक्तं च—

"दुष्टा भार्या शठं मित्रं, भृत्याश्चान्तरदायकाः ।
सर्सपगृहवासश्च, मृत्युरेव न संशयः ॥ १ ॥"–अनु०

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ १ ॥"–पृथ्वी

नृपाङ्गणगते खले कथं जीव्यते इति ध्यात्वा जीवरक्षणार्थमेकक एव निःसृतः पुरात् । कृच्छ्रेण गतो 'हस्तिनापुरम्' । सायं प्रतोल्यां स्थितः । तत्र मानगिरिर्नाम राजा । तत्पुत्री कलावती । सा जैनार्यिकाणां पार्श्वे—

"श्रीतीर्थेशस्य पूजा गुरुचरणयुगाराधनं जीवरक्षा
सत्पात्रे दानवृत्तिर्विषयविरमणं सद्विवेकस्तपश्च ।
श्रीमत्सङ्घस्य पूजा जिनपतिवचसां लेखनं पुस्तकेषु
सोपानश्रेणिरेषा भवतु तनुभृतां सिद्धिसौधाधिरोहे ॥ १ ॥"–स्रग्धरा

इति श्रुत्वा जैनधर्ममग्रहीत् । भक्तामरस्तोत्रं शुद्धं पपाठ । चतुःषष्टिकलापारगा जाता । अन्यदा कुमार्यां सभागतायां राजाऽहंयुः[2] सभ्यसामन्तानुवाच । भो! भवद्भिः कस्य कर्मणा भुज्यते राज्यलक्ष्मीः? । त ऊचुः—देवकर्मणेति । साऽन्तर्जहास । राजाऽऽह–वत्से! किमिति हसितम्? । सा आह–सेवकाः स्वामिरुचितं जानन्तोऽपि कुर्वन्ति । उक्तं च—

"प्रणमत्युन्नतिहेतो–र्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः, को मूर्खः सेवकादन्यः ॥ १ ॥"–आर्या

किञ्च—

"मौनान्मूकः प्रवचनपटुर्जल्पको[3] वातलो वा
धृष्टः पार्श्वे भवति च तथा दूरतश्चाप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १ ॥"–मन्दाक्रान्ता

इति त्वत्कर्णामृतमनृतं ब्रुवतेऽमी । अतो हासः । राजा–शठे! त्वं कथं जीवसि? । सा स्वकर्मणेत्युवाच ।

---

१ 'कुमारस्य दाहज्वर.' इति ख–पाठः । २ अहङ्कारी । ३ 'पटुर्वातलो जल्पको वा' इति ख–पाठः ।

"नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किममरैः ? किं च विधिना ?
नमस्तत् कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ १ ॥"—शिखरिणी
—( नीतिशतके श्लो० ९१ )

[1]दैवेनासृजता स्वयं जगति यद् यस्य प्रमाणीकृतं
तत् तस्योपनयेन्मनागपि महान् नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ २ ॥"—शार्दूल०

इत्युक्ते रुष्टो राजा रोगग्रस्तरङ्कनरानयनाय दुष्टभटानाजिज्ञपत् । ते लघुभूतकरचरणं मलव्याप्तकरणं ज्वरिणं दुःखदारिद्र्यशरणं राजहंसं गोपुरादानिन्युः सभाम् । राजा सर्वाङ्गालङ्कारांस्त्याजयित्वा दण्डीखण्डचीवरान् परिधाप्य तमनिच्छन्तं तां पर्यणाययत् । असमञ्जसकृद् राजेति मन्त्रिसामन्तादयः शुशुचुः, इत्यचिन्तयंश्च—

"[2]सच्छंदं जंपिज्जइ, कत्थइ जं जं मणस्स पडिहाइ ।
अयसस्स न बीहिज्जइ, पहुत्तणं तेण रमणीयम् ॥ १ ॥"—आर्या

राजा—सत्यकर्मवादिनि! भुङ्क्ष्व स्वकर्मणः फलमिति भणित्वा [3]शम्बलमात्रभर्तृयुतां तां नगरान्निरसीसरत् । साऽवक्—

"समीहितं यन्न लभामहे वयं
प्रभो ! न दोषस्तव कर्मणो मम ।
दिवाऽप्युलूको यदि नावलोकते
तदाऽपराधः कथमंशुमालिनः ? ॥ १ ॥"—वंशस्थम्

इत्याद्युक्त्वा पतिं करे कृत्वा साश्रुपातं पुरीजने पश्यति चचाल कलावती । निशा समैत् । तदा हेमन्तर्तुः कलिरूपोऽस्ति । उक्तं च—

"निर्दग्धाः [4]कमलाकराः [5]सुमनसो मम्लुः [6]कलावानपि
प्रीत्यै नो किल कृ[7]ष्णवर्त्मसु जनः प्रायेण बद्धादरः ।

---

१ 'दैवेन प्रभुणा' इत्यारम्भको नवतितम श्लोको महर्षिश्रीभर्तृहरिकृतनीतिशतके ।
२ छाया—
स्वच्छन्दं जल्प्यते कचित् यद् यद् मनस प्रतिभाति ।
अयशसः न भीयते प्रभुत्वं तेन रमणीयम् ॥
३ पाथेयम् । ४ कमलानां—उत्पलानां आकराः—समूहाः, सरोवराणि वा, पक्षे कमलायाः—लक्ष्म्याः आकराः—गृहाणि । ५ पुष्पाणि, पक्षे पण्डिता देवा वा । ६ पक्षे चन्द्रः । ७ वह्नौ, पक्षे मलिनमार्गेषु ।

जाड्येनोल्लसितं जगत् सुमहिते [1]मित्रेऽपि यन्मन्दता
तन्नूनं कलिरेष दुःसहतरः शीतर्तुना स्पर्धते ॥ १ ॥"–शार्दूल०

इति। तत्र तरुकिशलयप्लोषकं पान्थमनोरथमालाशोषकं संयोगिजनतोषकं कन्दर्पदर्पपोषकं दरिद्रजातदूषकं शिशिरपातं दृष्ट्वा वने तरुपत्राण्यास्तीर्य सैकथनि तन्मौलिं कृत्वाऽस्थात्। स कलावतीमवक्–प्रिये! मुञ्च मां [3]कदर्यम्। को [4]हेमावलीदृषदोर्मणिकाचयोर्गञ्जीखरयोः कल्पवल्लीपञ्चाङ्गुलयोर्मेलः? । त्वं (तु) सर्वत्र मानं लप्स्यसे। उक्तं च—

"शूराश्च कृतविद्याश्च, याश्च रूपधनाः स्त्रियः।
यत्र यत्र गमिष्यन्ति, तत्र तत्र कृतालयाः ॥ १ ॥"–अनु०

साऽवक्–प्राणनाथ! किमुच्यते? किं कुलस्त्रीचेष्टितं न जानीथ?—

"गतविभवं रोगयुतं, निर्वीर्यं भाग्यवर्जितं स्वपतिम्।
दैवतवत् सेवन्ते, कुलस्त्रियस्ता न शेषाः स्युः ॥ १ ॥"–आर्या

उक्तं च—

"दिनानां च निशानां च, यथा ज्योतिर्विभूषणम्।
सतीनां च यतीनां च, तथा शीलं विभूषणम् ॥ १ ॥"–अनु०

इत्युक्ते विदितसर्वतत्त्वस्वरूपः कुलीनेयमिति जोषं स्थितः तुतोष च। (तौ द्वावपि) प्रातः प्रयाणं चक्रतुः। मध्याह्ने तस्थतुः तरुतले पत्युः शय्या कृता (कलावत्या)। तस्मिन् शयाने सा पवित्रा पतिरोगोपशमनोपायं मार्गयमाणा भक्तामरस्तवैकचत्वारिंशद्वृत्तगुणनावसरे पत्युरुदरान्मुखे सर्पमुखं निःसृत्यास्थात्, आसन्नवल्मीकाग्रादपरं सर्पमुखं च। उभावपि भुजगौ चक्राधिष्ठितावन्योऽन्यं विवदन्तौ मर्म निजं निजमूचतुः। वल्मीकसर्प आह–रे दुराचार! सत्पुरुषरूपविनाशक! यदि कश्चन राजिकाम् अत्यम्लतक्रेण सहास्मै दत्ते, तदा त्वं स्थानाद् यासि। उदरसर्प आह–रे सञ्चयकर! कदर्यवत् कश्चित् त्वद्बिलेऽत्युष्णं तैलं क्षिपति, तदा त्वदधिष्ठितं निधानधनं स विलसति, त्वं च विलीयसे इत्युक्त्वा स्वं स्वं स्थानमीयतुः सर्पौ। कलावती सर्वं ददर्श शुश्राव च। प्रत्यक्षीभूय चक्रेश्वरी स्तवजापप्रभावान्मयैतच्चक्रे इत्युक्त्वाऽन्तर्दधौ। सा तत्र [7]स्थिता आसन्नगोकुलात् तक्रराजिकापानाद् भर्तुर्व्याध्युपशमं विदधे। स्वभावरूपो जातरूपसमदेहकान्तिर्जातो राजहंसः। पत्ये कथयित्वा तैलक्षेपान्निधानं ललौ। ततः कलावती चक्रेश्वरीप्रभावाद् उरगयोर्नरवागभवदिति भर्त्रेऽभणत्। स तत्पृष्टः स्वपितृजन्मादिकमभाणीत्। तयोक्तः स्वराज्यमभजत्। सधनं भार्यासनाथं तं दृष्ट्वा तुष्टो राजशेखरनृपतिः। कुमारस्य कमलाराज्ञीवुर्विलसितमिति

---

१ सुहृदि, पक्षे सूर्ये। २ जल्पाथाम्। ३ कुत्सितोऽर्थः–स्वामी कदर्यः, कृपण इत्यर्थः तम्। ४ हेममाकदृषदोः इति क–पाठः। ५ हस्तिनीगर्दभयोः। ६ एरण्डः। ७ 'स्थित्वा' इति ग–पाठः। ८ सुवर्णम्।

ज्ञात्वा दूरीकृता सा। राजहंसस्य क्रमेण राज्यमभवत्। श्वशुरेणापि शुद्धिर्लब्धा। मानाभिवृत्तं चित्तम्। सर्वैः स्वकर्म भुज्यते इत्यङ्गीकृतं पुत्र्या वचः। उक्तं च—

"सव्वो पुव्वकयाणं, कम्माणं पावए फलविवागम्।
अवराहेसु गुणेसु अ, निमित्तमत्तं परो होइ॥ १॥–आर्या

सुखस्य दुःखस्य न कोऽपि दाता
परो ददातीति कुबुद्धिरेषा।
पुरा कृतं कर्म सदैव भुज्यते
शरीर! हे निस्तर यत् त्वया कृतम्॥ २॥"–उपेन्द्रवज्रा

इति विबुध्य मानगिरिनृपः कलावतीदुहितरमानाय्यापूजयत्। क्षमिता च। सर्वे सुखभाजनं बभूवुः। राजहंसो राजा जिनधर्ममाराधयत् प्रभावतीप्रतिबोधवचसा श्रीउदायिचरमराजर्षिवत् कलावतीपुण्यकथनेन। चिरं सुखिताऽभूत् कलावती॥

॥ इति सप्तविंशतितमी कथा॥ २७॥

मे० वृ०—अथ रोगभयभेदमाह–( उद्भूतेत्यादि )।

हे जिनेन्द्र! मर्त्या मकरध्वजतुल्यरूपा भवन्ति इत्यन्वयः। 'भवन्ति' इति क्रियापदम्। के कर्तारः? ('मर्त्याः') मनुष्याः। किंविशिष्टाः? 'मकरध्वजतुल्यरूपाः' कन्दर्पसदृशाकाराः। पुनः किंविशिष्टाः? 'उद्भूतभीषणजलोदरभारभुग्नाः' उद्भूतः–प्रादुर्भूतो भीषणो–रौद्रो यो जलोदरो–रोगविशेषः तस्य भारेण–संघट्टेन भुग्नाः–वक्राः। पुनः किं०? 'शोच्याम्' शोकयोग्यां 'दशां' अवस्थां 'उपगताः' प्राप्ताः। पुनः किं०? ('च्युत०') च्युता–गलिता जीवितस्य–आयुष आशा–अभिलाषो येषां ते तथारूपाः। पुनः किंविशिष्टरूपाः? 'त्वत्पादपङ्कजरजोऽमृतदिग्धदेहाः' तव चरणकमलरेणुलिप्तगात्राः॥

**समासाश्च**—भीषण च जलोदर च भीषणजलोदरं, जलभृतं उदरं जलोदरं, उद्भूतं चासौ भीषणजलोदरं च उद्भूतभीषणजलोदर, तस्य भारेण भुग्ना उद्भूतभीषणजलोदरभारभुग्नाः। शोचितुं योग्या शोच्या ताम्। च्युता जीवितस्य आशा येषां ते तथा। तव पादौ त्वत्पादौ, त्वत्पादावेव पङ्कजे त्वत्पादपङ्कजे, तयो रजः त्वत्पादपङ्कजरजः, तदेव अमृतं त्वत्पादपङ्कजरजोऽमृत, तेन दिग्धो देहो येषां ते तथा। मकरो ध्वजे यस्य स मकरध्वजः, मकरध्वजेन तुल्यं रूपं येषां ते तथा॥ इति काव्यार्थः॥४१॥

*Dropsy is easily cured by serving Thee.*

The mortals, who are bent down under the burden of dreadful dropsy that has arisen, who are reduced to a deplorable condition and who have lost all hopes of surviving become Cupid-like in beauty, when they anoint their body with the ambrosia of the pollen of the lotuses ( in the form ) of Thy feet. ( 41 )

* * * *

1 छाया—

सर्वः पूर्वकृतानां कर्मणां प्राप्नोति फलविपाकम्।
अपराधेषु गुणेषु च निमित्तमात्रः परो भवति॥

अथ बन्दिबन्धनभयं नुदन्नाह—

आपादकण्ठमुरुशृङ्खलवेष्टिताङ्गा
गाढं बृहन्निगडकोटिनिघृष्टजङ्घाः।
त्वन्नाममन्त्रमनिशं मनुजाः स्मरन्तः
सद्यः स्वयं विगतबन्धभया भवन्ति ॥ ४२ ॥

गु० वि०—हे अप्रतिचक्राचर्चितचरण! आपादकण्ठं-पदगलं यावत् उरुशृङ्खलवेष्टिताङ्गाः-गुरुलोहदामव्याप्तवपुषः गाढं-निबिडं बृहन्निगडकोटिनिघृष्टजङ्घाः-विकटाष्टीला-प्रकषितनलकिनीका मनुजाः-नराः त्वन्नाममन्त्रं-ॐ ऋषभाय नमः इति पदं अनिशं-सदा जपन्तो-ध्यायन्तः सद्यः-तत्कालं स्वयं-आत्मनैव विगतबन्धनभयाः-ध्वस्तबन्ध-शङ्का भवन्ति-जायन्ते। इति वृत्तार्थः ॥ ४२ ॥

एतस्य महिमा पूर्वं श्रीमानतुङ्गाचार्याणां निबिडनिगडशृङ्खलाजालभञ्जनादभूत्। तदा त्वनेकेषां राजनियोगिनां लोहान्दुकत्रुटिः (राजवृन्देच्छुटिः)—

"म्लेच्छलुप्तसुरत्रात-प्रभूतातिशये कलौ।
रणपालस्य सञ्जातं, निबिडान्दुकभञ्जनम् ॥ १ ॥"–अनु०

श्री'अजयमेरु'दुर्गपरिसरबहुग्रामग्रामणीः सहजदानविनयगुणप्रीणितदर्शनिमालो (?) रणपालोऽजनि राजपुत्रः।

"अन्नदानं महादानं, प्रणामो दर्शनेषु च।
अविरुद्धं द्वयं चैतत्, कर्तुर्महिमहेतवे ॥ १ ॥"–अनु०

इति पद्यं बहुमंस्त। स च जैनमुनिसङ्गत्या भद्रकस्वभावो भक्तामरस्तवं पञ्चपरमेष्ठिमन्त्र-मपाठीत्। श्रीयुगादिजिने भक्तिभरः स्तवमहिमार्थवेत्ता च स धर्मपालकतया साधूनां चेतसि शतपत्रमाल्यमिव महोद्भटतया म्लेच्छाना हृदि शल्यमिवासीत्। एकदा 'अजयमेरु'दुर्ग-स्थदुष्टमीरेण छलं लब्ध्वा स बद्धः सपुत्रः। कलियुगदुर्विलसितमेतत्। उक्तं च–

"सीदन्ति सन्तो विलसन्त्यसन्तः
पुत्रा म्रियन्ते जनकश्चिरायुः।
परेषु मैत्री स्वजनेषु रोषः
पश्यन्तु लोकाः कलिखेलितानि ॥ १ ॥–इन्द्रवज्रा

सङ्कुचन्ति कलौ तुच्छाः, प्रवर्धन्ते महाधियः।
ग्रीष्मे सरांसि शुष्यन्ति, कामं वार्धिस्तु वर्धते ॥ २ ॥"–अनु०

---

१ अष्टीका=दषद्विशेषः। २ नलकिनी=जङ्घा। ३ अन्दूकं=शृङ्खला। ४ चतुश्चिह्नितोऽयं क-पाठः। ५ '०ससर्वंदुसं०' इति ग-पाठः। ६ 'भक्तिपरः' इति क-पाठः। ७ 'खेलनानि' इति ख-पाठः।

अतो नाचलत् मनो धर्मात् तस्य महाशयस्य। सपुत्रश्चालितो 'योगिनी'पुरं प्रति प्राप्तश्च। तदा जलालद्दी(लुद्दी?)नसुरत्राणो राज्यं करोति। तेन जीर्ण'दिल्ली'दुर्गमध्ये गाढश्रृङ्खलनिगडैर्बद्धो बन्दौ[1] क्षेपितः सपुत्रः। तत्र रणपालः शुचिर्भक्तामरस्तवस्य द्विचत्वारिंशं वृत्तं दध्यावहर्निशम्। दशसहस्र्यां पूर्णायां निशीथिन्यां रणरणन्नूपुररवोज्जीवितमदना मणिमयमेखलाकलापकिङ्किणीक्काणवशीकृतत्रिभुवना स्थूलनिस्तुल[2]निर्मलमुक्ताफलहारावलिदासीकृततारकव्राता कमलमृदुलसरलकराङ्गुलिपरिहितोर्मिकारत्नकान्तिदर्शनपूरितमानवसमीहितजाता भ्रमरश्रेणिकरणिवेणिदण्डमिषसेवकीकृतनागलोका श्रृङ्गारश्लोका काचिद् रमणी तरुणी रमणीयरूपा–वत्स! (शीघ्रं) शीघ्रमुत्तिष्ठेति जल्पन्ती तत्पुरः प्रादुर्भूता। रणपालोऽजल्पत्–जननि! का त्वं? देवी वा मानवी वा विद्याधरी वा? । साऽवदत्–गरुडवाहना श्रीयुगादिजिनभक्ता भक्तामरस्तोत्रस्मर्तृरक्षाकरी सुरी चक्रेश्वरी वर्तते, तस्या अहं किङ्करी प्रतीहारी त्वद्बन्दिमोचनाय प्रेषिताऽस्मि चक्रेश्वरीस्वामिन्येति। रणपालोऽरणत्–देवि! त्वमेव मे चक्राधिकाऽसि, परं कथमुत्तिष्ठामि करचरणनियन्त्रितोऽहम्?। देव्युवाच–स्पृश करचरणौ। सोऽस्प्राक्षीत्, पुरःपतितनिगडाष्टीलकुलमद्राक्षीत्। पुत्रस्याप्यपतन् बन्धनानि। स्वयमुदघटिष्ट कारौकः[3]कपाटसम्पुटम्। तावुत्तिष्ठन्तौ वारितौ देव्या। रक्षाप्राहरिकास्तावदेयरुः। तौ तथैव दृष्ट्वा जग्मुः। देवीदर्शितसोपानपथेन दुर्गमारूढौ समुत्प्लुत्याधः पतितौ पट्टदुकूलच्छन्नहंसरोमशय्योपरीव। ततश्चेलतुः स्वग्रामं प्रति। साऽपि राजचमूः केटकेऽलगत्। तौ समायान्तीं सेनामपश्यताम्। सा न पश्यति स्म तौ। कटकं शाकम्भरीमजयमेरुदुर्गं च यावद् यात्वा व्यावर्तितम्। रणपालः सनन्दनः श्रेयसा स्वस्थानमाशिश्राय। 'चित्रकूट'दुर्गे चिरं स्वकुटुम्बयुक् सुखमन्वभूद् धर्मं च पालयामास॥

॥ इत्यष्टाविंशी कथा ॥

**मे० वृ०**—अथ बन्धभयनाशमाह—( आपादेत्यादि )।

हे जिनेन्द्र! मनुजा विगतबन्धभया भवन्ति इति क्रियासण्टङ्कः। 'भवन्ति' इति क्रियापदम्। के कर्तारः? 'मनुजाः' मानवाः। कीदृशाः? 'विगतबन्धभयाः' रोधादिकष्टभीतिविवर्जिताः। कथम्? 'सद्यः' शीघ्रम्। केन? 'स्वयं' आत्मना, न तु परप्रयोगेण। किं कुर्वन्तः? अनिशं–सदा त्वन्नाममन्त्रं स्मरन्तः–ध्यायन्तः। पुनः कीदृशाः? ('आपादकण्ठमुरुश्रृङ्खलवेष्टिताङ्गाः') आपादकण्ठं–चरणगलप्रदेशं यावत् उरुः–महान् यः श्रृङ्खलो–लोहरज्जुस्तेन नियन्त्रितशरीराः। पुनः कीदृशाः? ('गाढं बृहन्निगडकोटिनिघृष्टजङ्घाः') गाढं–अत्यन्तं बृहत्–गुरुर्यो निगडो–लोकप्रसिद्धः पादपाशस्तस्य कोटिः–अग्रं तेन संघट्टितजङ्घादेशाः॥

**समासास्तु**—पादौ च कण्ठश्च पादकण्ठं, प्राण्यङ्गत्वादेकवद्भावः, पादकण्ठं मर्यादीकृत्य इति आपादकण्ठं, विभक्त्यर्थे अव्ययीभावः। उरुश्चासौ श्रृङ्खलश्च उरुश्रृङ्खलः, तेन वेष्टितं अङ्गं येषां ते

---

१ कारागृहे। २ 'स्थलनिस्तुल' इति क-पाठः। ३ कारायाः–बन्धनस्य ओकः–गृहम्।

तथा, बृहन्तासौ निगडश्च बृहन्निगडः, तस्य कोटिः, तया निघृष्टे जङ्घे येषां ते तथा । तव नाम त्वन्नाम, मन्त्र इव मन्त्रः, त्वन्नाम चासौ मन्त्रश्च त्वन्नाममन्त्रस्तम् । बन्धस्य भयं बन्धभयं, विगतं बन्धभयं येषां ते तथा । आपादकण्ठमित्यत्राव्ययीभावेऽपि 'आङावधौ' (सिद्ध० अ० २, पा० २, सू० ७०) इति पञ्चमी, तस्याश्च न अमादेश इति तेन क्रियाविशेषणत्वाद् द्वितीया ॥ इति काव्यार्थः ॥ ४२ ॥

*Thy name sets prisoners at liberty.*

Those men whose limbs are clothed from foot to neck in heavy fetters and whose shanks are severely skinned by millions of strong chains, automatically become at once free from the fear of bondage by always meditating upon Thy name as a *Mantra*. ( 42 )

* * * *

अथाष्टभीनाशेन स्तवं संक्षिपन्नाह ( ग्रं० १५०० )—

मत्तद्विपेन्द्र-मृगराज-दवानला-हि-
सङ्ग्राम-वारिधि-महोदर-बन्धनोत्थम् ।
तस्याशु नाशमुपयाति भयं भियेव
यस्तावकं स्तवमिमं मतिमानधीते ॥ ४३ ॥

गु० वि०—हे अमेयमहिमन्! तस्य प्राणिनो भयं-भीः आशु-शीघ्रं भियेव-भयेनेव नाशं उपयाति-ध्वंसमायाति, यो मतिमान्-सप्रज्ञः पुमान् तावकं-भवदीयम् इमं-प्रागुक्तस्वरूपं स्तवं-स्तोत्रम् अधीते-पठति । किंभूतं भयम्? मत्तद्विपेन्द्रश्च मृगराजश्च दवानलश्च अहिश्च सङ्ग्रामश्च वारिधिश्च महोदरश्च बन्धनं च तेभ्य उत्था-उत्पत्तिर्यस्य तत् । भवतः-तव मन्त्राध्यायप्रभविष्णुप्रभावयुताक्षराद् भयस्यापि भयं भवतीति युक्तोत्प्रेक्षा । भयभेत्तृत्वादैहिकार्थकृत्त्वादन्यसुरवत् तीर्थकृदपीति न चिन्त्यम् । यतो बुद्धस्य सिद्धस्य क्षीणकर्मणो भगवतः स्मरणात् तुष्टाः सङ्गतसुराः सर्वमर्थं सम्पादयन्ति । वीतरागध्यानान्मुक्तिरेव मुख्यं फलम्, अन्यत् प्रासङ्गिकं, कृषेः पलालवदिति । अथ—

"अप्रसन्नात् कथं प्राप्यं, फलमेतदसङ्गतम् ।
चिन्तामण्यादयः किं न, फलन्त्यपि विचेतनाः ? ॥ १ ॥"—अनु०

अत्र बहु वक्तव्यं तत् स्वधिया विचार्यं सुधीभिः ॥ इति वृत्तार्थः ॥ ४३ ॥

मे० वृ०—अथ युगपदष्टभयनाशेन स्तुवन्नाह—( मत्तेत्यादि ) ।

हे जिनेन्द्र! यः मतिमान् इमं-प्रत्यक्षं तावकं स्तवं अधीते-पठति इत्यन्वयः । 'अधीते' इति क्रियापदम् । कः कर्ता? 'यः' मतिरस्यास्तीति 'मतिमान्' । कं कर्मतापन्नम्? 'इमं स्तवं' स्तोत्रम् ।

यच्चद्दोर्नित्यमित्यस्यान्वयात् तस्य पुरुषस्य आशु–शीघ्रं भयं नाशं उपयाति–प्राप्नोति । 'उपयाति' इति क्रियापदम् । किं कर्तृ ? 'भयम्' । किं कर्मतापन्नम् ? 'नाशम्' । इवोत्प्रेक्ष्यते(क्षणे?) । 'भिया इव' भीत्या इव । भयस्यापि भीतिर्जायते तेन अष्टधा भयं तस्य न स्यादिति भावः । कीदृशं भयम् ? 'मत्तद्विपेन्द्र-मृगराजदवानलाहिसङ्ग्रामवारिधिमहोदरबन्धनोत्थं' मत्तो–मदवान् द्विपेन्द्रो–हस्ती मृगराजः–सिंहः दावानलो–दावाग्निः अहिः–सर्पः सङ्ग्रामो–रणः वारिधिः–समुद्रः महोदरं–जलोदररोगः बन्धनं–रोधः, तेभ्यो जातम् ॥

समासाश्च—द्विपानां इन्द्रो–द्विपेन्द्रः, मत्तश्चासौ द्विपेन्द्रश्च मत्तद्विपेन्द्रः, मृगाणां राजा मृग-राजः, महच्च तत् उदरं च महोदरं, बाहुलकात् समासः, मत्तद्विपेन्द्रश्च मृगराजश्च दवानलश्च अहिश्च सङ्ग्रामश्च वारिधिश्च महोदरं च बन्धनं च मत्तद्विपेन्द्रमृगराजदवानलाहिसङ्ग्रामवारिधिम-होदरबन्धनानि, तेभ्य उत्तिष्ठते इति मत्त०, एतदुपलक्षणात् सर्वमपि भयं याति ॥ इति काव्यार्थः ॥ ४३ ॥

*Thy hymn is a proof against all sorts of calamities*

The danger arising from the intoxicated lordly elephants, ( 2 ) the kings of beasts (lions), ( 3 ) conflagrations, ( 4 ) serpants, ( 5 ) wars, ( 6 ) oceans, ( 7 ) dropsy and ( 8 ) confinements speedily disappears as if through fear in the case of that talented man who recites this hymn in Thy praise ( 43 )



अथ स्तवप्रभावसर्वस्वमाह—

स्तोत्रस्रजं तव [1]जिनेन्द्र ! गुणैर्निबद्धां
[2]भक्त्या मया रुचिरवर्णविचित्रपुष्पाम् ।
धत्ते जनो य इह कण्ठगतामजस्रं
तं 'मानतुङ्ग'मवशा समुपैति लक्ष्मीः ॥ ४४ ॥

गु० वि०—हे जिनेन्द्र !–केवलिपते ! इह–जगत्यां यो जनोऽजस्रं–अनवरतं तव स्तोत्रं–तव संस्तवनं बहुपदसन्दर्भितत्वात् स्रगिव स्तोत्रस्रक् तां स्तोत्रमालां कण्ठगतां धत्ते–कण्ठपीठलुठितां करोति पठतीत्यर्थः । किंभूताम् ? भक्त्या–भावपूर्वं मया–श्रीमानतुङ्गसू-रिणा गुणैः–पूर्वोक्तैर्ज्ञानाद्यैर्निबद्धां रचिताम्, अथ(वा) जिनेन्द्रगुणैः–अर्हद्गुणैः स्वयंबु-द्ध(त्व)सहजवैराग्यादिभिर्निबद्धां–गुम्फितां, रुचिरा–मनोज्ञा वर्णा अकाराद्या द्विपञ्चाशदेव

१ तृतीयार्थविचारणे 'जिनेन्द्रगुणैर्नि०' इति पाठः । २ तुर्यार्थविचारणे 'भक्त्याऽभक्त्या' इति पाठः ।

विचित्राणि यमकानुप्रासश्लेषार्थव्यञ्जनादिविशेषेणाद्भुतानि स्पृहणीयाश्रयणीयतया पुष्पाणीव यस्यां ताम्। लक्ष्मीः—राज्यस्वर्गापवर्गसत्का श्रीरवशा—तद्गतचित्ताऽवश्यं तं मानतुङ्गं—चित्तोन्नत्युन्नतं स्तोत्रकविं वा समुपैति—समन्तात् पार्श्वमायाति। इति प्रथमोऽर्थः ॥ १ ॥

अथ(वा) यो भक्त्या—विच्छित्त्या गुणैः—सूत्रतन्तुभिर्निबद्धां—ग्रथितां मानं मा तया मया—प्रमाणेनोपलक्षितां रम्यपञ्चवर्णाद्भुतकुसुमां तव स्तोत्रमिव स्रजं—वनमालां लुप्तोपमया पुष्पमालां कण्ठगतां धत्ते—धारयति लक्ष्मीः—शोभा अवशा—निश्चितं तं मानतुङ्गं—प्रतिष्ठाप्राद्युच्चं समुपैति। इति द्वितीयोऽर्थः ॥ २ ॥

अथ(वा) यः स्तोत्रमिव स्रजं—वनमालाम्, लुप्तोपमा सर्वत्र ज्ञेया, मया—पद्मया भक्त्या—अनुरागेण जिनो—विष्णुरेव इन्द्रः—पतिस्तस्य गुणैर्जिनेन्द्रगुणैः प्रभुत्वादिभिर्निबद्धां—न्यस्तां चारुद्युतिवैविधसन्तानकादिकुसुमां कण्ठगतां धत्ते लक्ष्मीः—वार्धिकनी अः—कृष्णः तस्य वशा—योषित् केशवकलत्रं तं मानतुङ्गं—साभिमानं पुरुषोत्तममायाति ॥ इति तृतीयोऽर्थः ॥ ३ ॥

अथ(वा) जिनो—विष्णुः इन्द्रः—सुरेन्द्रस्तयोर्गुणैः—शौर्यैश्वर्यादिभिरुपलक्षितो विक्रमी परमेश्वरो यः पुष्पमालां प्रोक्तस्वरूपां कण्ठगतां बिभर्ति, लक्ष्मीः—सकलभूमिश्रीः अवशा—तदायत्ता "वीरभोज्या वसुन्धरा" इति वचनात् मानतुङ्गं—साहङ्कारं तं समुपैति ॥ इति चतुर्थोऽर्थः ॥ ४ ॥

अथ (वा) यः सामान्योऽपि पुष्पदाम धारयति स लक्ष्मीवान् स्यात्। अथ यो अमया—अलक्ष्म्या कलितोऽपि जनो भक्त्या बहुविधरतभङ्ग्या गुणैः—माधुर्याद्यैर्निबद्धां—स्ववशीकृतां रुचिरवर्णविचित्रपुष्पां—कान्तवपुर्द्युतिविशिष्टतिलकमाल्याभरणां, चित्रस्तिलक उच्यते, स्रजमिव कामिनीमिति गम्यम्, कण्ठगतां धत्ते—परिरभते, निरन्तरं भजत इत्यर्थः। लक्ष्मीस्तं मानतुङ्गं पुरुषगणनागण्यं समायाति अवशा—तदधीना ॥ इति पञ्चमोऽर्थः ॥ ५ ॥

---

१ यमक-लक्षणम्—

"स्यात् पादपदवर्णाना—मावृत्ति संयुता युता।
यमक मिन्नवाच्याना—मादिमध्यान्तगोचरम् ॥"

—वाग्भटालङ्कारे (अ० ४, श्लो० २२)

२ अनुप्रास-लक्षणम्—

तुल्यश्रुत्यक्षरावृत्ति—रनुप्रासः स्फुरद्गुणः।
अतत्पदः स्याच्छेकानां, लाटानां तत्पदश्च सः ॥"

—वाग्भटा० (अ० ४, श्लो० १७)

३ श्लेष-लक्षणम्—

"अर्थमेवभिन्नानां भङ्गाभङ्गाभ्यां युगपदुक्तिः श्लेषः।"

—काव्या० (पृ० २२७)

४ "तिलके तमालपत्र-चित्र-पुण्ड्र-विशेषकाः।"

—अभिधानचिन्तामणौ (का० ३, श्लो० ३१७)

पुष्पधारणाद् वरस्त्रीसेवनात् दरिद्रोऽपि पुमान् श्रीमान् स्यात् । उक्तं च—

"शिरः सपुष्पं चरणौ सुपूजितौ
वराङ्गनाऽऽसेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्वमैथुनं
चिरप्रनष्टां श्रियमानयन्ति ॥ १ ॥"—वंशस्थविलम्

अथ(वा) यः पुमान् स्वयंवरे तद्गुणरञ्जितपतिं वराक्षिप्तां भक्त्या-रचनया सदा-शोभना गुणैः-सुवर्णसूत्रैर्निबद्धां-नद्धां चारुरुचिनानाविधकुसुमां स्तोत्रमिव स्रजं मालां कण्ठगतां धत्ते, लक्ष्मीरिव लक्ष्मीः श्रीसमरूपा स्त्री अवशा-कामविह्वला तं मानतुङ्गं-वपुःप्रमाणप्राप्तं सरलसर्वलक्षणपूर्णं समुपैति-दूरादपि तत्पार्श्वमायातीत्यर्थः ॥ इति षष्ठोऽर्थः ॥ ६ ॥

अनेन पुरुषस्य सौभाग्यातिशयः प्रकाशितः । अन्यथा पतिमनुसरन्ती प्रौढाऽपि स्त्री मानहीना दुःखिता स्यात् । उक्तं च—

"गंम्मइ पियस्स पासे, सुप्पइ सिच्छाय (इ) दिज्जए अहरो ।
विसएहिं पिज्जइ महू दुक्खे दियहा गमिज्जन्ति ॥ १ ॥"—आर्या

ध्वनिरिह पत्यनुसरणं मानिन्याः, प्रौढस्त्रीणां स्नेहो वर्धत एवाहरहः । उक्तं च—

"जैम्मन्तरे न विहडइ पोढमहिलाण जं कियं पिम्मम् ।
कालं(लिं)दि कण्हविरहे अज्जवि कालं जलं वहइ ॥ १ ॥"—आर्या

नवोढा तु विवोढारं व्रजन्ती भर्तुः सौभाग्यं विवृणोतितरां (इति) लक्ष्म्यभिगमनेनोक्तं भवति । स्तोत्रेऽप्यधीती जनः सौभाग्यकलितः श्रिया सदा संमाश्रयिष्यते इति तात्पर्यार्थः ।

अत्र पुष्पमालाशब्दोऽभीष्टशकुनत्वेन महोत्सवानन्दहेतुः । उक्तमोगमेऽपि—

"सँमणं संजयं दंतं, सुमणं मोयगा दहिं ।
मीणं घंटं पडागं च, सिद्धमत्थं वियौगरे ॥ १ ॥"—अनु०

---

१ छाया—

गम्यते प्रियस्य पार्श्वे सुप्यते स्वेच्छया दीयते अधर. ।
विषयेभ्यः पीयते मधु दु.खेन दिवसा निर्गम्यन्ते ॥

२ 'सिज्जाए अहरोवि' इति ग-पाठ. ।

३ छाया—

जन्मान्तरेऽपि न विघटति प्रौढमहिलानां यत् कृतं प्रेम ।
कालिन्दी कृष्णविरहे अद्यापि कालं जलं वहति ॥

४ 'संश्रयिष्यते' इति क-ख-पाठ. ।          ५ ओघ० ।

६ छाया—

श्रमणं संयतं दान्तं सुमनः मोदकान् दधि ।
मीनं घण्टं पताकां च (दृष्ट्वा) सिद्धमर्थं व्यापृणीयात् ॥

७ 'वयागरे इति ग-पाठः ।

शाकुनार्णवेऽपि—

"पद्मिनी राजहंसाश्च, श्वेतभिक्षुतपोधनाः ।
यं देशमुपसर्पन्ति, तत्र देशे शुभं वदेत् ॥ १ ॥"—अनु०

पुष्पेषु प्राधान्यं पद्मानामिति । चतुर्दशस्वप्नेष्वपि कुसुमस्रक् प्रशस्या । तीर्थकृदाहार-विहारसमवसृत्यवसरे कुसुमवृष्टिः शुभकृदुक्तेति विचार्यम् । स्तवान्ते लक्ष्मीशब्दो माङ्गल्यार्थवाची । तेन स्तोत्रं पिपठिषूणां शुश्रूषूणा व्याचिख्यासूनां निदिध्यासूनां च पुरुषाणामास्तवसमाप्तेरनारतं कल्याणपरम्परा भविष्यतीत्यर्थः । अथ(वा) प्राणिनांप्रतिष्ठाहेतुः श्रीरेव । उक्तं च—

"वारांराशिरसौ प्रसूय भवती रत्नाकरत्वं गतो
विष्णुस्त्वत्पतितामवाप्य भुवने जातस्त्रिलोकीपतिः ।
कन्दर्पो जनचित्तनन्दन इति त्वन्नन्दनत्वादभूत्
सर्वत्र त्वदनुग्रहप्रणयिनी पद्मे! महत्त्वस्थितिः ॥ १ ॥"—शार्दूल०

अन्योऽपि शुभोऽर्थः सुधीभिः स्वधिया व्याख्येयः । इति चतुश्चत्वारिंशद्वृत्तार्थः सम्पूर्णः । तत्सम्पूर्तौ सम्पूर्णेयं भक्तामरस्तववृत्तिः सप्रभावककथानिकामयुक्ता ॥

(अथ प्रशस्तिः—)

गिरां गुम्फधात्री कवीन्द्रेषु वाणी
चतुर्वर्णवर्ण्यश्चतुर्वर्णसङ्घः ।
गुरुश्चानुशास्ता सुधीः श्रोतृवर्गो
जयेयुर्जगत्याममी आसमुद्रम् ॥ १ ॥—भुजङ्गप्रयातम्[1]

श्री'चन्द्र'गच्छेऽभयसूरिवंशे
श्री'रुद्रपल्लीय'गणाब्धिचन्द्राः ।
श्रीचन्द्रसूरिप्रवरा बभुस्ते
यद्भ्रातरः श्रीविमलेन्दुसंज्ञाः ॥ २ ॥—इन्द्रवज्रा

तत्पट्टे जिनभद्रसूरिगुरवः सल्लब्धिलब्धप्रभाः
सिद्धान्ताम्बुधिकुम्भसम्भवनिभाः प्रेङ्खन्मनीषाशुभाः ।
जातः श्रीगुणशेखराभिधगुरुस्तस्मात् तपोनिर्मलः[2]
शीलश्रीतिलको जगत्तिलक इत्यासीद् गुरुग्रामणीः ॥ ३ ॥—शार्दूल०

---

१ भुजङ्गप्रयात-लक्षणम्—
"भुजङ्गप्रयातं चतुर्भिर्यकारैः" ।

२ 'पुनर्निर्मल.' इति ग-पाठ. ।

सद्गद्यपद्यसुकविः कवितत्त्वधाता[1]
चारित्रचारुकरणः करणास्तकामः ।
तत्पट्टभूषणमणिर्गतदूषणोऽभूत्
श्रीमान् मुनीन्द्रगुणचन्द्रगुरुर्गरिष्ठः ॥ ४ ॥–वसन्ततिलका

सम्प्रत्यवनौ जयिनां, निर्देशादभयदेवसूरीणाम् ।
गुणचन्द्रसूरिशिष्यो[2], गुणाकरः सूरिरल्पमतिः ॥ ५ ॥–आर्या

अद्भुतमहतीर्दधतीं, बहुश्रुतमुखश्रुताः प्रभावकथाः ।
भक्तामरस्तवस्या–भिनवां वृत्तिं व्यधादेनाम् ॥ ६ ॥–आर्या

वर्षे षड्विंशाधिक–चतुर्दशशती(१४२६)मिते च वर्षर्तौ ।
मासि नभस्ये रचिता, 'सरस्वती'पत्तने वृत्तिः ॥ ७ ॥–आर्या

यद् गदितमर्थकूटं, यल्लक्षणशब्दतश्च दुष्टमिह ।
तत् साधुभिः सुधीभिः, शोध्यं सद्यः प्रसद्य मयि ॥ ८ ॥–आर्या

भक्तामरस्तवाक्षर–विवृत्तिं कृत्वा यदर्जितं सुकृतम् ।
तेनासौ सुकृतिजनो, निरामयः स्यात् सदाऽऽनन्दी ॥ ९ ॥–आर्या

पञ्चदशशतान्यत्र द्वासप्ततिसमधिकानि गणितानि ।
निःशेषवर्णवृन्दा–न्यनुष्टुभां प्रायशः सन्ति ॥ १० ॥

ग्रन्थाग्रं १५७२ सकलाक्षरगुणनयेति[3] ॥

इति सम्पूर्णा भक्तामरस्तवविवृत्तिः ॥

**मे० वृ०**—अथ कविः स्वनामसूचापूर्वं स्तोत्रमाहात्म्यमर्वस्वमाह—( स्तोत्रेत्यादि ) ।

हे जिनेन्द्र ! तं पुरुषं अवशा–शीघ्रं लक्ष्मीः समुपैति । सं–सम्यक्प्रकारेण उपैति–व्याप्नोतीत्यर्थः । 'समुपैति' इति क्रियापदम् । का कर्त्री ? 'लक्ष्मीः' । क कर्मतापन्नम् ? 'तं पुरुषम्' । कथम् ? 'अवशा' शीघ्रार्थे अव्ययम्, यद्वा कीदृशी लक्ष्मीः ? 'अवशा' व्याहृतचित्ता । कीदृशं तम् ? 'मानतुङ्गं' मानेन–ज्ञानेन बहुमानेन वा तुङ्गं–प्रौढम् । तच्छब्दो यच्छब्दमपेक्षते । तं कम् ? यः पुरुष इह लोके तव स्तोत्रस्रज अजस्र कण्ठगतां धत्ते–बिभर्ति । 'धत्ते' इति क्रियापदम् । कः कर्ता ? 'यः पुरुषः' । कां कर्मतापन्नाम् ? 'स्तोत्रस्रजं' स्तवनलक्षणां मालाम् । कीदृशीम् ? 'कण्ठे गतां' प्राप्ताम् । कथम् । 'अजस्रं' निरन्तरम् । कस्य ? 'तव' अर्थादेता प्रस्तुताम् । कीदृशीम् ? 'गुणैः' ज्ञानौदार्यादिभिर्भक्त्या मया–कविना (नि)बद्धाम्, अन्याऽपि या स्रक् भवति सा गुणैः–दवरकैर्बद्धा भवति, तां कण्ठे

---

१ '०तत्त्वध्याता' इति ग-पाठः । २ '०ष्याणुगुणा०' इति ग-पाठः । ३ 'सकलनयेति' इति ख-पाठः ।

दधानः पुमान् लक्ष्म्या—कमलया शोभया वा आश्रीयते। पुनः किं० स्तोत्रस्रजम् ? 'रुचिरवर्णविचित्रपुष्पां' रुचिरा—मनोहरा ये वर्णा—अक्षराणि त एव (विचित्राणि) नानाप्रकाराणि पुष्पाणि—कुसुमानि यस्यां सा इति व्याख्येयम् ॥

**समासा यथा**—स्तोत्रमेव स्रक् स्तोत्रस्रक् ताम्। रुचिराश्च ते वर्णाश्च रुचिरवर्णाः, त एव विचित्राणि पुष्पाणि यस्यां सा ताम्। कण्ठे गतां कण्ठगता ताम्। मानेन तुङ्गो मानतुङ्गस्तम्। अत्र काव्ये **मानतुङ्ग** इति कविनामख्यातिः। तथा लक्ष्मीरितिपदं मङ्गलार्थमुपन्यस्तं चक्रेश्वरीबीजं च प्रतिपदं संदर्भितम्, अन्यथात्र स्तोत्रे काव्येष्वव्ययबाहुल्यं शास्त्राध्येतॄणामव्ययप्रतिपत्त्यर्थमिति जयति **युगादिप्रभुः** ॥

सूरिः श्री**विजयप्रभ**प्रभुमुखादेशाच्छिशूनां हितो-
द्देशाद् वृत्तिमिमां व्यधत्त विधिना श्री**मेघ**नामा कविः।
शिष्यः श्रीसुधियां कृपादिविजयाख्यानाममुष्यां पुन-
र्यद् दृब्धं तदिह प्रसादसदनैः शोध्यं विशुद्धाशयैः ॥ १ ॥—शार्दूल०

॥ इति श्री**भक्तामर**स्तवराजवृत्तिः सम्पूर्णा ॥

श्रीरस्तु ॥ सकलभट्टारकशिरोमणिभट्टारक श्री श्री श्री श्री श्री १०८ श्री**विजयप्रभ**सूरीश्वर—चरणकमलसेवकमहोपाध्यायश्री**मेघविजय**गणिभिर्विरचितेति श्रेयः। श्लोकसङ्ख्या ग्रन्थाग्र १००० ॥ सकलभट्टारकशिरोमणिभट्टारक श्री ५ श्री**विजयदेव**सूरीश्वरचरणकमलसेवकमहोपाध्यायश्री**नयविजय** गणितच्छिष्यपं०**हस्तिविजय**गणितच्छिष्यपं०**रूपविजय**गणितच्छिष्यमुनि**कस्तूरविजय**लिखिता ॥ संवत् १७८२ वर्षे वैशाख शुदि ३ दिने शनिवासरे। शुभं भवतु श्रीजगवल्लभप्रसादात्, लिखित नागोरीसरामध्ये ॥

Oh master of the *Jinas*[1] the goddess of wealth spontaneously awaits **on that** **Māna-tunga* who, in this world incessantly wears round his neck **the garland of prayer prepared by me with devotion, the garland which is knitted with thy merits** and which has variegated flowers of attractive ( colours in the **form of** ) beautiful letters ( 44 )

* * * *

---

१ अद्भुतमतिप्राप्तस्योऽयमुल्लेखः।

* This word is used in two senses ( 1 ) elevated in honour or puffed up with pride and ( 2 ) the name of the poet

Oh lord of the *Jinas*! the goddess of Beauty certainly approaches that proud person, who wears here constantly round his neck the garland which resembles Thy hymn, which is knitted with threads cut in ( proper ) measure and which is made up of coloured flowers that are lovely and astonishing.

*Lakshmī*, the wife of *Krishna* approaches that arrogant person, who here constantly wears round his neck the garland which resembles Thy hymn, which is equipped with wonderful flowers of lovely colours and devotedly knitted with merits of Lord *Krishna*

The dependent wealth ( of entire universe ) approaches......colours and which is beautifully and devotedly knitted by me with the merits of *Vishnu* and *Indra*.



श्रीकनककुशलगणिविरचिता

# ॥ भक्तामरस्तोत्रवृत्तिः ॥

श्रीऋषभनाथाय नमः । श्रीसरस्वत्यै नमः ॥

प्रणम्य परमानन्द-दायकं परमेश्वरम् ।
वृत्तिं भक्तामरस्याहं, कुर्वे बालहितैषिणीम् ॥ १ ॥

भक्तामर० यः संस्तुत इत्यनयोर्व्याख्या-किलेति सत्ये । तं प्रथमं जिनेन्द्रं अहमपि स्तोष्ये इत्यन्वयः । रागादीनां जेतृत्वाज्जिनाः-सामान्यकेवलिनस्तेषामिन्द्रः-तीर्थकरस्तं अहमिति-मानतुङ्गाचार्य कविः स्तोष्ये-स्तवनं विधास्ये । न केवलं सुरेन्द्रा एव स्तुवन्तः, किन्त्वहमपीत्यपेक्षया अपिशब्दो ज्ञेयः। जिनानामिन्द्रो जिनेन्द्रः 'तं 'तत्पुरुषः' । जिनेन्द्रं किंलक्षणम्? 'प्रथमम्' आद्यम्, ऋषभमित्यर्थः । पुनः किंलक्षणं तं-तमिति यच्छब्दापेक्षम्। तं कम्? 'यः सुरलोकनाथैः संस्तुतः'। 'सम्स्तुतः' इति क्रियापदम् । कैः कर्तृभिः? 'सुरलोकनाथैः' सुराणां लोकाः सुरलोकाः 'तत्पुरुषः', सुरलोकानां नाथाः सुरलोकनाथाः तैः 'तत्पुरुष'[1] देवनिवास(?)प्रभुभिः, इन्द्रैरित्यर्थः । 'संस्तुतः' सम्यग्भक्तिबहुमानपुरःसरं भगवदतिशायिगुणपरिज्ञानपूर्वकं वा स्तुतो-वन्दितः । सुरलोकनाथैः किंलक्षणैः? 'उद्भूतबुद्धिपटुभिः' उद्भूता-प्रकटिता या बुद्धिः-मतिस्तया पटवो-दक्षाः तैः। उद्भूता चासौ बुद्धिश्च उद्भूतबुद्धिः 'कर्मधारयः', उद्भूतबुद्ध्या पटवः उद्भूतबुद्धिपटवः तैः 'तत्पुरुषः' । कुतः ईदृशैः? 'सकलवाङ्मयतत्त्वबोधात्' सकलं-समस्तं यद् वाङ्मयं-शास्त्रं तस्य तत्त्वं-परमार्थस्तस्य बोधो-ज्ञानं तस्मात् । वाचा निवृत्तं वाङ्मयं 'तत्पुरुषः', सकलं च तद् वाङ्मयं च सकलवाङ्मयं 'कर्मधारयः', सकलवाङ्मयस्य तत्त्वं सकलवाङ्मयतत्त्वं 'तत्पुरुषः', सकलवाङ्मयतत्त्वस्य बोधः सकलवाङ्मयतत्त्वबोधस्तस्मात् 'तत्पुरुषः', सर्वशास्त्रावगमादित्यर्थः । कैः कृत्वा संस्तुतः? 'स्तोत्रैः' स्तवनैः । किंलक्षणैः स्तोत्रैः? 'जगत्त्रितयचित्तहरैः' जगतां-भुवनानां त्रितयं स्वर्ग-मर्त्य-पाताललक्षणं तस्य चित्तानि-मनांसि तानि हरन्ति-रञ्जयन्तीति तानि तैः । जगतां त्रितयं जगत्त्रितयं 'तत्पुरुषः', जगत्त्रितयस्य चित्तानि जगत्त्रितयचित्तानि 'तत्पुरुषः', जगत्त्रितयचित्तानि हरन्तीति जगत्त्रितयचित्तहराणि तैः 'तत्पुरुषः', जगत्त्रितयजन्तुमनआवर्जकैः । अत एव 'उदारैः' महार्थैरुद्भटैर्वा । किं कृत्वा स्तोष्ये? 'प्रणम्य'

---

१ 'तत्पुरुष. तम्' इति प्रतिभाति, परन्तु स्तोत्रस्यास्य समग्रकाव्येषु पद्धतिरियं दृष्टिपथमवतरति, तस्मात् किमयं लेखकदोषः कर्तृदोषो वेति प्रश्न, अथवा किमियमपि पद्धति. समीचीना?।

प्रकर्षेण नत्वा। प्रणमनं पूर्वं प्रणम्य। कथम्? 'सम्यग्' भक्तिबहुमानयुक्तं गुणावबोधसहितं वा। किं कर्मतापन्नम्? 'जिनपादयुगं' जिनस्य–प्रथमतीर्थकृतः पादौ–चरणौ तयोर्युगं–युग्मम्। जिनस्य पादौ जिनपादौ 'तत्पुरुषः', जिनपादयोर्युगं जिनपादयुगं तत् 'तत्पुरुषः'। जिनपादयुगं किंलक्षणम्? 'आलम्बनम्' आधारम्। केषाम्? 'जनानां' लोकानाम्। जनानां किं कुर्वताम्? 'पततां' ब्रुडताम्। कस्मिन्? 'भवजले' भवः–संसारः स एव जलम्–उदकं तस्मिन्। भव एव जलं भवजलं तस्मिन् 'कर्मधारयः'। कस्मिन् काले जिनपादयुगमालम्बनम्? 'युगादौ' अवसर्पिणीतृतीयारकपर्यन्तकाले। युगस्यादिर्युगादिः 'तत्पुरुषः' तस्मिन् युगादौ। जिनपादयुगं कीदृशम्? 'उद्द्योतकं' उद्दीपकम्-उद्द्योतकारकम्। कासाम्? 'भक्तामरप्रणतमौलिमणिप्रभाणां' भक्ता–भक्तिमन्तो ये अमरा–देवास्तेषां प्रणता–नम्रा ये मौलयः–शिरोमुकुटानि तेषां तेषु (वा) मणयो–रत्नानि इन्द्रनीलादीनि तेषां प्रभा–दीप्तयस्तासाम्। भक्ताश्च ते अमराश्च भक्तामराः 'कर्मधारयः', प्रणताश्च ते मौलयश्च प्रणतमौलयः 'कर्मधारयः', भक्तामराणां प्रणतमौलयः भक्तामरप्रणतमौलयः 'तत्पुरुषः', भक्तामरप्रणतमौलीनां मणयः भक्तामरप्रणतमौलिमणयः 'तत्पुरुषः', भक्तामरप्रणतमौलिमणीनां प्रभा भक्तामरप्रणतमौलिमणिप्रभाः तासां 'तत्पुरुषः', भगवत्पादयुगलस्यातिदीप्तत्वात् तासामपि प्रकाशकमित्यर्थः। पुनः किंलक्षणं जिनपादयुगम्? 'दलितपापतमोवितानं' दलितं–क्षिप्तं पापमेव–किल्बिषमेव तमोवितानम्–अन्धकारजालं येन तत्। तमसो वितानं तमोवितानं 'तत्पुरुषः', पापमेव तमोवितानं पापतमोवितानं 'कर्मधारयः', दलितं पापतमोवितानं येन तत् (तद्) 'बहुव्रीहिः'। इति प्रथमद्वितीयवृत्तार्थः॥ १—२॥

* * * *

अथ कविः स्वौद्धत्यपरिहारार्थमाह—(बुद्ध्येत्यादि)

व्याख्या—हे 'विबुधार्चितपादपीठ!' हे देवपूजितचरणासन!। पादयोः पीठं पादपीठं 'तत्पुरुषः', विबुधैरर्चितं (विबुधा॰ 'तत्पुरुषः'), विबुधार्चितं पादपीठं यस्य स विबुधार्चितपादपीठः 'बहुव्रीहिः', तस्य सम्बोधनं हे विबुधार्चितपादपीठ!। अहं विगतत्रपोऽस्मि इत्यन्वयः। 'अस्मि' इति क्रियापदम्। कः कर्ता? 'अहम्'। अहं कीदृशः? 'विगतत्रपः' निर्लज्जः। विगता त्रपा यस्मात् सः 'बहुव्रीहिः'। यतोऽहं कीदृशः? 'समुद्यतमतिः' सज्जीभूतबुद्धिः। समुद्यता मतिर्यस्य सः 'बहुव्रीहिः'। किं कर्तुम्? 'स्तोतुं' नोतुम्। कथम्? 'विना' ऋते। कया? 'बुद्ध्या' शेमुष्या। उक्तार्थसमर्थनार्थमर्थान्तरन्यासमाह—कोऽन्यो जनः सहसा इन्दुबिम्बं ग्रहीतुं इच्छति? अपि तु न कश्चिदेवेत्यन्वयः। 'इच्छति' इति क्रियापदम्। कः कर्ता? 'जनः' लोकः। 'इच्छति' वाञ्छति। जनः पुनः किंभूतः? 'कः'। पुनः किंलक्षणो जनः? 'अन्यः' अपरः। किं कर्तुम्? 'ग्रहीतुम्' आदातुम्। किं कर्मतापन्नम्? 'इन्दुबिम्बं' चन्द्रमण्डलम्। इन्दोर्बिम्बं इन्दुबिम्बं (तत्) 'तत्पुरुषः'। कथम्? 'सहसा' झटिति। इन्दुबिम्बं किंभूतम्? 'जलसंस्थितम्' उदकमध्यस्थितम्। जले संस्थितं

जलसंस्थितं (तत्) 'तत्पुरुषः'। किं कृत्वा? 'विहाय' त्यक्त्वा। कं कर्मतापन्नम्? बालम्—अज्ञं शिशुम्। कोऽर्थः?। रात्रौ जलप्रतिबिम्बितं चन्द्रमण्डलं बालो यथा आदातुमुद्यतो भवति, तथाऽहमपि बुद्धिविकलः सन् त्वां स्तोतुं समुद्यतोऽस्मि। इति तृतीयवृत्तार्थः ॥३॥

* * * *

कुतो विगतलज्ज इत्याह—(वक्तुमित्यादि)

व्याख्या—हे 'गुणसमुद्र!' हे गुणरत्नाकर!। गुणानां समुद्रो गुणसमुद्रः तस्य सम्बोधने हे गुणसमुद्र! 'तत्पुरुषः'। ते गुणान् वक्तुं कः क्षमोऽस्ति? कत्र्युक्तिः, अपि तु न कोऽपि। यत्रान्यक्रियापदं न श्रूयते तत्रास्ति भवतीत्यादि पुरः प्रयुज्यत इति न्यायादत्रास्तीत्युच्यते। 'अस्ति' इति क्रियापदम्। कः कर्ता?। 'कः' जनः। किंलक्षणः? 'क्षमः' समर्थः। किं कर्तुम्? 'वक्तुं' भाषितुम्। कान् कर्मतापन्नान्? 'गुणान्' ज्ञानदर्शनचारित्रादीन्। कस्य? 'ते' तव। गुणाम् कथंभूतान्? 'शशाङ्ककान्तान्' चन्द्रवदुज्ज्वलान्। शशोऽङ्के यस्य स शशाङ्कः 'बहुव्रीहिः', शशाङ्कवत् कान्ताः शशाङ्ककान्तास्तान् 'तत्पुरुषः'। कः कीदृशोऽपि? 'सुरगुरुप्रतिमोऽपि' बृहस्पतितुल्योऽपि। सुराणां गुरुः सुरगुरुः 'तत्पुरुषः', सुरगुरोः प्रतिमः सुरगुरुप्रतिमः 'तत्पुरुषः'। कया? 'बुद्ध्या' शेमुष्या। उक्तार्थदार्ढ्यार्थमर्थान्तरं न्यस्यति–को वा अम्बुनिधिं तरीतुमलं–समर्थो भवेत्? अपि तु न कश्चिदेव। 'भवेत्' इति क्रियापदम् (अध्याहार्यम्)। कः कर्ता? 'कः'। 'भवेत्' स्यात्। कथम्? 'अलं' समर्थः। किं कर्तुम्? 'तरीतुम्' उलङ्घयितुम्। कं कर्मतापन्नम्? 'अम्बुनिधिं' समुद्रम्। अम्बु निधीयतेऽस्मिन्नित्यम्बुनिधिस्तम्। काभ्याम्? 'भुजाभ्यां' बाहुभ्याम्। कीदृशमम्बुनिधिम्? 'कल्पान्तकालपवनोद्धतनक्रचक्रं' कल्पान्तकालस्य–युगक्षयस्य पवनेन–वायुना उद्धतानि–दुर्दर्शनानि ऊर्ध्वं चलितानि वा नक्रचक्राणि–यादोवृन्दानि यत्र (स तम्)। कल्पस्यान्तः कल्पान्तः 'तत्पुरुषः', कल्पान्तश्चासौ कालश्च कल्पान्तकालः 'कर्मधारयः', कल्पान्तकालस्य पवनः कल्पान्तकालपवनः 'तत्पुरुषः', कल्पान्तकालपवनेनोद्धतानि कल्पान्तकालपवनोद्धतानि 'तत्पुरुषः', नक्राणां चक्राणि नक्रचक्राणि 'तत्पुरुषः', कल्पान्तकालपवनोद्धतानि नक्रचक्राणि यत्र स तं 'बहुव्रीहिः'। यथा प्रलयमरुत्प्रेरितदुष्टजलजन्तुजातसंयुतयुगान्तक्षुब्धाब्धितरणं दुःशकं, तथा अर्हद्गुणकीर्तनमपि दुर्घटं तत्राहं प्रवृत्तः। इति चतुर्थवृत्तार्थः ॥ ४ ॥

* * * *

अथ स्तवनकरणप्रवृत्तौ कारणमाह—(सोऽहमित्यादि)

व्याख्या—यद्यपि तव गुणान् वक्तुं न कोऽपि शक्तस्तथापि हे मुनीश!–हे गणधरादियतिस्वामिन्! मुनीनामीशो मुनीशस्तस्य सम्बोधनं हे मुनीश! 'तत्पुरुषः', सोऽहं तव स्तवं कर्तुं प्रवृत्तोऽस्मीत्यन्वयः। 'अस्मि' इति क्रियापदम्। कः कर्ता? 'अहम्'। अहं

किंलक्षणः? 'प्रवृत्तः'। किं कर्तुम्? ('कर्तुम्') विधातुम्। कं कर्मतापन्नम्? 'स्तवं' स्तोत्रम्। कस्य? 'तव' भवतः। अहं कीदृशोऽपि? 'विगतशक्तिरपि' सामर्थ्यहीनोऽपि। विशेषेण गता विगता, विगता शक्तिर्यस्य स 'बहुव्रीहिः'। अहं किंभूतः? 'सः'। कथम्? 'तथापि'। कस्मात्? 'भक्तिवशात्' आन्तरभावतः। भक्तेर्वशो भक्तिवशस्तस्मात् 'तत्पुरुषः'। अत्राप्यर्थसमर्थनमाह–मृगः किं मृगेन्द्रं–सिंहं नाभ्येति? अपि तु अभ्येति। 'अभ्येति' इति क्रियापदम्। कः कर्ता? 'मृगः' हरिणः। 'अभ्येति' आभिमुख्येन भवति, सम्मुखमागच्छतीत्यर्थः। कं कर्मतापन्नम्? 'मृगेन्द्रं' सिंहम्। मृगाणामिन्द्रो मृगेन्द्रस्तं 'तत्पुरुषः'। किमर्थम्? 'परिपालनार्थं' रक्षणार्थम्। परिपालनायेति परिपालनार्थं 'तत्पुरुषः'। कस्य? 'निजशिशोः' आत्मबालकस्य। निजस्य शिशुर्निजशिशुस्तस्य 'तत्पुरुषः'। किं कृत्वा? 'अविचार्य' अपर्यालोच्य। किं कर्मतापन्नम्? 'आत्मवीर्यं' निजबलम्। आत्मनो वीर्यमात्मवीर्यं तत् 'तत्पुरुषः'। कया? 'प्रीत्या' स्नेहेन। कथम्? 'किम्'। यथा मृगो निजबालरक्षणार्थं सिंहाभिमुखं प्रवर्तते, तथाऽहमपि तव स्तवं कर्तुं प्रवृत्तः। इति पञ्चमवृत्तार्थः॥ ५॥

* * * *

अथ कविरसामर्थ्ये सति स्तुतिकरणे वाचालताहेतुमाह—( अल्पेत्यादि )।

व्याख्या—हे नाथ! त्वद्भक्तिर्मां मुखरीकुरुते इत्यन्वयः। 'मुखरीकुरुते' इति क्रियापदम्। का कर्त्री? 'त्वद्भक्तिः' त्वद्रागः। 'मुखरीकुरुते' वाचालं विधत्ते इत्यर्थः। तव भक्तिस्त्वद्भक्तिः 'तत्पुरुषः'। अमुखरं मुखरं कुरुते इति मुखरीकुरुते। कं कर्मतापन्नम्? 'मां' मानतुङ्गाचार्यम्। कथम्? 'एव' निश्चयेन। कस्मात्? 'बलात्' हठात्। मां किंलक्षणम्? 'अल्पश्रुतं' स्तोकशास्त्रम्। अल्पं श्रुतं यस्य स तं 'बहुव्रीहिः'। अत एव मां किंभूतम्? 'परिहासधाम' हास्यास्पदम्। परिहासस्य धाम परिहासधाम तत् 'तत्पुरुषः'। केषाम्? 'श्रुतवतां' दृष्टशास्त्राणाम्। श्रुतं विद्यते येषां ते श्रुतवन्तस्तेषां 'बहुव्रीहिः'। अर्थदृढनार्थमाह-किलेति सत्ये। यत् कोकिलो मधौ मधुरं विरौतीत्यन्वयः। 'विरौति' इति क्रियापदम्। कः कर्ता? 'कोकिलः' पिकः। 'विरौति' कूजति ब्रूते। किं कर्मतापन्नम्? 'मधुरं' प्रियम्। कस्मिन्? 'मधौ' वसन्ते। कथंभूतं मधुरम्? यत् तत् चारुचूतकलिकानिकरैकहेतुरस्ति। 'अस्ति' इति क्रियापदम्। किं कर्तृ? 'तत्' तदतिमधुरम्। तत् कथंभूतम्? 'चारुचूतकलिकानिकरैकहेतुः' चारुः–मनोज्ञो यः चूतः–आम्रस्तस्य कलिका–मञ्जर्यस्तासां निकरः–समूहः स एवैकः–अद्वितीयो हेतुः–कारणम्। चारुश्चासौ चूतश्च चारुचूतः 'कर्मधारयः', चारुचूतस्य कलिकाश्चारुचूतकलिकाः 'तत्पुरुषः', चारुचूतकलिकानां निकरः चारुचूतकलिकानिकरः 'तत्पुरुषः', एकश्चासौ हेतुश्चैकहेतुः 'कर्मधारयः', चारुचूतकलिकानिकर एव एकहेतुः चारुचूतकलिकानिकरैकहेतुः 'कर्मधारयः'। तदित्यव्ययपदं सप्तम्यर्थवाचकं तस्मिन् मधुरमिति वा। यथा सुरभिसहकारमञ्जरीकृतभोजनः पुंस्कोकिलो

मधुरस्वरवतां पंक्तावुपविशति, तथाऽहं स्तोकग्रन्थोऽपि त्वत्प्रभावात् तव स्तवं कुर्वाणः प्रवीणपंक्तिगतो भविष्यामि। इति षष्ठवृत्तार्थः ॥ ६ ॥

* * * *

हेतुमुक्त्वा स्तवकरणे यो गुणस्तमाह—(त्वत्संस्तवेनेत्यादि)।

व्याख्या—हे नाथ! त्वत्संस्तवेन शरीरभाजां पापं क्षणात् क्षयमुपैतीत्यन्वयः। 'उपैति' इति क्रियापदम्। किं कर्तृ? 'पापम्' अष्टविधकर्म। 'उपैति' गच्छति। कं कर्मतापन्नम्? 'क्षयं' नाशम्। केषाम्? 'शरीरभाजां' प्राणिनाम्। शरीरं भजन्तीति शरीरभाजस्तेषां 'तत्पुरुषः'। केन? 'त्वत्संस्तवेन' भवत्स्तवनेन। तव संस्तवस्त्वत्संस्तवस्तेन 'तत्पुरुषः'। पापं किंलक्षणम्? 'भवसन्ततिसन्निबद्धं' जन्मकोटिसमर्जितम्। भवानां सन्ततिर्भवसन्ततिः 'तत्पुरुषः', भवसन्तत्या सन्निबद्धं भवसन्ततिसन्निबद्धं 'तत्पुरुषः'। कस्मात्? 'क्षणात्' घटिकाषष्ठांशेन, स्तोककालादित्यर्थः। अमुमेवार्थं दृष्टान्तेन द(ड्र)ढयति—इव—यथा शार्वरमन्धकारं सूर्यांशुभिन्नं सत् क्षयमुपैति। 'उपैति' इति क्रियापदम्। किं कर्तृ? 'अन्धकारं' तमः। कं कर्मतापन्नम्? 'क्षयं' नाशम्। 'उपैति' प्रयाति। अन्धकारं किंलक्षणम्? 'शार्वरं' कृष्णपक्षान्तरात्रिसम्भवम्। शर्वर्यां भवं शार्वरम्। पुनः किंलक्षणं अन्धकारम्? 'आक्रान्तलोकं' व्याप्तविश्वम्। आक्रान्तो लोको येन तद् 'बहुव्रीहिः'। पुनः किंलक्षणमन्धकारम्? 'अलिनीलं' मधुकरकुलकृष्णम्। अलिवन्नीलमलिनीलं 'तत्पुरुषः'। पुनः किंभूतमन्धकारम्? 'अशेषं' सकलम्। न विद्यते शेषो यत्र तद् 'बहुव्रीहिः'। न तु स्तोकं, पापस्यापि विशेषणमेतत्। पुनः किंभूतमन्धकारम्? 'सूर्यांशुभिन्नं' सहस्रकरैर्विदारितम्। सूर्यस्यांशवः सूर्यांशवः 'तत्पुरुषः', सूर्यांशुभिर्भिन्नं सूर्यांशुभिन्नं 'तत्पुरुषः'। कथम्? 'आशु' शीघ्रम्। यथा तिमिरनाशहेतुः सूर्योदयः, तथा दुरितनाशहेतुर्जिनस्तवः। इति सप्तमवृत्तार्थः ॥ ७ ॥

* * * *

स्तवारम्भकारणं द(ड्र)ढयन्नाह—(मत्वेतीत्यादि)।

व्याख्या—हे नाथ! इदं तव स्तवनं मया आरभ्यते कर्मोक्तिः इत्यन्वयः[1]। 'आरभ्यते' इति क्रियापदम्। केन कर्त्रा? 'मया'। 'आरभ्यते' करणायोद्यम्यते। किं कर्मतापन्नम्? 'संस्तवनं' स्तोत्रम्। कस्य? 'तव' भवतः। संस्तवनं किंभूतम्? 'इदम्'। मया कथंभूतेनापि? 'तनुधियाऽपि' स्वल्पमतिनाऽपि। तनुः धीर्यस्य स तनुधीस्तेन 'बहुव्रीहिः'। किं कृत्वा? 'मत्वा' अवबुध्य। कथम्? 'इति'। किम्? पूर्वोक्तयुक्त्या स्तवकरणं दुष्करं पापहरं चेति। इदं संस्तवनं सतां चेतो हरिष्यति कर्त्रोक्तिः[2]। 'हरिष्यति' इति क्रियापदम्। किं कर्तृ? 'संस्तवनम्'। किं कर्मतापन्नम्? 'मनः'। केषाम्? 'सतां' सज्ज-

---

१ 'इत्यन्वयः कर्मोक्तिः' इति प्रतिभाति। २ 'कर्त्रुक्तिः' इति प्रतिभाति।

नानाम् । कस्मात्? 'प्रभावात्' महिम्नः । कस्य? 'तव' । सन्त एव परगुणग्रहणे लम्पटाः, यतः—

"मनसि वचसि काये पुण्यपीयूषपूर्णा-
त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १ ॥"—मालिनी
—(नीतिशतके श्लो० ७०)

न खलाः । उक्तं च—

"सीसं धुणिअं हियय़ं, चमक्किअं पुलइयं च अंगेहिं ।
तहवि हु खलस्स वाणी, परगुणगहणे न निस्सरिआ ॥ १ ॥"—आर्या

नन्विति निश्चये उदबिन्दुर्नलिनीदलेषु मुक्ताफलद्युतिमुपैति । 'उपैति' इति क्रियापदम् । कः कर्ता? 'उदबिन्दुः' वारिच्छटा । उदकस्य बिन्दुरुदबिन्दुः 'तत्पुरुषः' । उदकशब्दस्योद इति निपातः । 'उपैति' उपगच्छति । का कर्मतापन्नाम्? 'मुक्ताफलद्युतिं' मौक्तिकच्छायाम् । मुक्ताफलस्य द्युतिर्मुक्ताफलद्युतिस्तां 'तत्पुरुषः' । केषु? 'नलिनीदलेषु' पद्मिनीपत्रेषु । नलिनीना दलानि नलिनीदलानि तेषु 'तत्पुरुषः' । यथा पद्मिनीपत्रस्थजलबिन्दुर्मुक्ताफलच्छायां धत्ते, तथा तव स्तवोऽपि त्वत्प्रभावादुत्तमचित्तानन्दकारकः । इत्यष्टमवृत्तार्थः ॥ ८ ॥

* * * *

अथ सर्वज्ञनामग्रहणमेव विघ्नहरमाह—( आस्तामित्यादि ) ।

व्याख्या—हे अष्टादशदोषनिर्नाशन! तव स्तवनमास्तामित्यन्वयः । 'आस्ताम्' इति क्रियापदम् । किं कर्तृ? 'स्तवनं' स्तोत्रम्, गुणरहस्योत्कीर्तनमिति यावत् । 'आस्ता' दूरे तिष्ठतु । स्तवनं किंभूतम्? 'अस्तसमस्तदोषं' निर्मूलितनिखिलदूषणम् । समस्ताश्च ते दोषाश्च समस्तदोषाः 'कर्मधारयः', अस्ताः समस्तदोषा येन तद् 'बहुव्रीहिः' । कस्य? 'तव' भवतः । त्वत्सङ्कथाऽपि जगतां दुरितानि हन्तीत्यन्वयः । 'हन्ति' इति क्रियापदम् । का कर्तृ(र्त्री)? 'त्वत्सङ्कथाऽपि' त्वत्सम्बन्धी संलापोऽपि, त्वद्विषयिणी पूर्वभवसम्बन्धवार्ताऽपीति यावत् । तव सङ्कथा त्वत्सङ्कथा 'तत्पुरुषः' । 'हन्ति' निर्नाशयति । कानि कर्मतापन्नानि? 'दुरितानि' पापानि विघ्नान् वा । केषाम्? 'जगतां' लोकानाम् । उक्तं च—

"चिरसंचियपावपणा-सणीइ भवसयसहस्समहणीए ।
चउवीसजिणविणिग्गय, कहाइ वोलंतु मे दिअहा ॥ १ ॥"—आर्या

दृष्टान्तमाह—सहस्रकिरणो दूरे आस्ताम् इत्यन्वयः । 'आस्ताम्' इति क्रियापदम् । कः कर्ता? 'सहस्रकिरणः' सूर्यः । सहस्रं किरणा यस्य स 'बहुव्रीहिः' । कथम्? 'दूरे' । प्रभैव

१ छायार्थं दृश्यतां २३तम पृष्ठम् । २ छायार्थं दृश्यतां २४तम पृष्ठम् ।

पद्माकरेषु जलजानि विकाशभाञ्जि कुरुते इत्यन्वयः । 'कुरुते' इति क्रियापदम् । का कर्त्री? 'प्रभा' छाया । 'कुरुते' विधत्ते । कथम्? 'एव' निश्चयेन । कानि कर्मतापन्नानि? 'जलजानि' पद्मानि । जले जायन्त इति जलजानि 'तत्पुरुषः' । किंभूतानि? 'विकाशभाञ्जि' स्मेराणि । विकाशं भजन्त इति विकाशभाञ्जि तानि 'तत्पुरुषः' । केषु? 'पद्माकरेषु' सरस्सु । पद्मानामाकरो येषु ते पद्माकरास्तेषु 'बहुव्रीहिः' । यदि सूर्योदयात् पूर्वप्रवर्तिनी प्रभा पद्मविकाशिनी भवति, तदा सूर्यस्य किमुच्यते?, तथा अर्हद्गुणोत्कीर्तनरूपं स्तवनं दूरे आस्तां, जिननामग्रहणसङ्कथैव सर्वदुरितनाशिनी । इति नवमवृत्तार्थः ॥ ९ ॥

* * * *

अथ जिनस्तुतिफलमाह—( नात्यद्भुतमित्यादि )।

व्याख्या—हे 'भुवनभूषण!' हे विश्वमण्डन! । भुवनानां भूषणं भुवनभूषणं तस्य सम्बोधने हे भुवनभूषण! 'तत्पुरुषः' । हे 'भूतनाथ'! हे भूतप्रभो! । भूतानां नाथो भूतनाथस्तस्य सम्बोधनं हे भूतनाथ! 'तत्पुरुषः' । अथवा हे 'भुवनभूषणभूत!' भूतशब्द उपमानवाचकः हे विश्वमण्डनसमान! । भुवनस्य भूषणं भुवनभूषणं 'तत्पुरुषः', भुवनभूषणमिव भुवनभूषणभूतस्तस्य सम्बोधनं हे भुवनभूषणभूत! 'तत्पुरुषः' । हे 'नाथ'! हे प्रभो! । भूतैर्गुणैर्भवन्तमभिष्टुवन्तो भवतस्तुल्याः भवन्तीत्यन्वयः कर्त्रोक्तिः । 'भवन्ति' इति क्रियापदम् । के कर्तारः? 'जनाः' । 'भवन्ति' स्युः । जनाः किं कुर्वन्तः? 'अभिष्टुवन्तः' स्तुवन्तः । कं कर्मतापन्नम्? 'भवन्तं' त्वाम् । जनाः किंलक्षणाः? 'तुल्याः' समानाः । कस्य? 'भवतः' तव । कैः? 'गुणैः' ज्ञानादिभिर्गुणैः । किंभूतैः? 'भूतैः' जातैः । कस्याम्? 'भुवि' पृथिव्याम् । एतन्नात्यद्भुतं-नातिचित्रम् । अतिशयेनाद्भुतमत्यद्भुतं 'तत्पुरुषः' । अत्र व्यतिरेकमाह–ननु-निश्चितं वा-अथवा किं कार्यं-किं प्रयोजनं भवति तेन स्वामिना? अपि तु न किमपि । क्व? 'इह भुवि' जनमध्ये । तेन केन? आश्रितं भूत्या आत्मसमं न करोतीत्यन्वयः, कर्त्रोक्तिः । 'करोति' इति क्रियापदम् । कः कर्ता? 'यः' स्वामी । कथम्? 'न' । कं कर्मतापन्नम्? 'आश्रितं' सेवकम् । कया? 'भूत्या' ऋद्ध्या । किंभूतम्? 'आत्मसमं' निजतुल्यम् । आत्मनः(ना) मम आत्मसमः 'तत्पुरुषः' । अहमपि तीर्थङ्करं स्तुवन् तद्ध्यानैकमनास्तीर्थकृद्गोत्रार्जको भविताऽस्मीति कवेराशयः । इति दशमवृत्तार्थः ॥ १० ॥

* * * *

( दृष्ट्वेत्यादि )।

व्याख्या—जनस्य चक्षुरन्यत्र तोषं नोपयातीत्यन्वयः कर्त्रोक्तिः । 'उपयाति' इति क्रियापदम् । किं कर्तृ? 'चक्षुः' लोचनम् । 'नोपयाति' न लभते । कस्य? 'जनस्य' लोकस्य । कं कर्मतापन्नम्? 'तोषं' तुष्टिम् । क्व? 'अन्यत्र' परस्मिन् । किं कृत्वा? 'दृष्ट्वा'

अवलोक्य । कं कर्मतापन्नम्? 'भवन्तं' त्वाम् । भवन्तं कीदृशम्? 'अनिमेषविलोकनीयम्' । न निमेषेण विलोक्यते-दृश्यते इति अनिमेषविलोकनीयस्तं 'तत्पुरुषः' । अथवा विलोक्यते इति विलोकनीयः, निमेषेण विलोकनीयो निमेषविलोकनीयः 'तत्पुरुषः,' न निमेषविलोकनीयः अनिमेषविलोकनीयः 'तत्पुरुषः' । अतिशायिरूपवन्तं भवन्तं पश्यन्तो नेत्रनिमीलनमपि नरा न कुर्वन्तीत्यर्थः । अत्रार्थेऽर्थान्तरन्यासमाह—दुग्धसिन्धोः पयः पीत्वा जलनिधेः क्षारं जलं अशितुं क इच्छेत् इत्यन्वयः कर्त्रोक्तिः । 'इच्छेत्' इति क्रियापदम् । कः कर्ता? 'कः' प्राणी । 'इच्छेत्' अभिलषेत् । किं कर्तुम्? 'अशितुम्' आस्वादयितुम् । किं कर्मतापन्नम्? 'जलं' पानीयम् । किंभूतं जलम्? 'क्षारं' दुष्टास्वादम् । कस्य? 'जलनिधेः' लवणसमुद्रस्य । जलं निधीयतेऽस्मिन्निति जलनिधिस्तस्य 'तत्पुरुषः' । किं कृत्वा? 'पीत्वा' आस्वाद्य । किं कर्मतापन्नम्? 'पयः' जलम् । पयः कीदृशम्? 'शशिकरद्युति' चन्द्रकिरणरश्मि । शशोऽस्यास्तीति शशी, शशिनः कराः शशिकराः 'तत्पुरुषः', शशिकरवद् द्युतिर्यस्य तत् (तद्) 'बहुव्रीहिः,' उज्ज्वलमित्यर्थः । कस्य? 'दुग्धसिन्धोः' क्षीरसागरस्य । दुग्धस्य सिन्धुः दुग्धसिन्धुः तस्य 'तत्पुरुषः' । न कश्चिदिच्छेदित्यर्थः । इति एकादशमवृत्तार्थः ॥ ११ ॥

* * * *

(भगवतो रूपातिशयतां दर्शयन्नाह—यैरित्यादि)।

व्याख्या—अहमेवं मन्ये-भवद्देहनिष्पत्तये येऽणवः प्रवृत्तास्ते तावन्त एव, यदाह-हे 'त्रिभुवनैकललामभूत!' जगत्त्रितयाद्वितीयतिलकोपम! । नकारान्तो ललामशब्दो नपुंसकलिङ्गोऽस्ति । भूतशब्द इवार्थे । त्रयाणां भुवनानां समाहारस्त्रिभुवनं 'द्विगुः', एकं च तल्ललाम चैकललाम 'कर्मधारयः', त्रिभुवने एकललाम त्रिभुवनैकललाम 'तत्पुरुषः', त्रिभुवनैकललामेव त्रिभुवनैकललामभूतस्तस्य सम्बोधनम् ('तत्पुरुषः') । तेऽपि अणवस्तावन्त एव वर्तन्ते कर्त्रोक्तिः इत्यन्वयः । 'वर्तन्ते' इति क्रियापदम् (अध्याहार्यम्) । के कर्तारः? 'अणवः' । किंविशिष्टा अणवः? 'तावन्तः (एव)' तत्प्रमाणा एव । नान्ये सन्तीत्यर्थः । कथम्? 'खलु' निश्चये । अणवः किंभूताः? 'ते' । ते के? यैः परमाणुभिस्त्वं निर्मापितः कर्मोक्तिः इत्यन्वयः । 'निर्मापितः' इति क्रियापदम् । कैः कर्तृभिः? 'परमाणुभिः' । परमाश्च ते अणवश्च परमाणवस्तैः 'कर्मधारयः' । 'निर्मापितः' निष्पादितः । परमाणुभिः किंभूतैः? 'यैः' । पुनः किंविशिष्टैः परमाणुभिः? 'शान्तरागरुचिभिः' । शान्तश्चासौ रागश्च शान्तरागः 'कर्मधारयः', शान्तरागस्य रुचिर्येषु ते शान्तरागरुचयस्तैः शान्तरागरुचिभिः ('बहुव्रीहिः') । उपशमरसनिष्पन्नैरित्यर्थः । अथवा हे 'शान्तराग!' हे वीतराग! । शान्तो रागो यस्मिन् स शान्तरागस्तस्य सम्बोधनं 'बहुव्रीहिः' । हे 'रुचिभिः परम'! कान्तिभिरुत्तम! । अणुभिरिति कर्तृपदम् । अणुभिः परमाणुभिरित्यर्थः । कः कर्मतापन्नः? 'त्वं' भवान् । कथमेवं ज्ञायते? यद्-यस्मात् ते समानमपरं रूपं नास्ति कर्त्रोक्तिः इत्यन्वयः । 'अस्ति' इति

क्रियापदम् । किं कर्तृ? 'रूपम्' । 'अस्ति' विद्यते । कथम्? 'न' । कीदृशं रूपम्? 'समानं' तुल्यम् । कस्य? 'ते' भवतः । कथम्? 'यद्' इति यस्मात् कारणात् । हीति निश्चयेन । कस्याम्? 'भुवि' पृथिव्याम् । रूपं कथंभूतम्? 'अपरम्' अन्यत् । इति द्वादशमवृत्तार्थः । १२

* * * *

अनेन रूपस्यातिशायिता दर्शिता । साम्प्रतं भगवन्मुखं वर्णयति—( वक्त्रमित्यादि ) ।

व्याख्या—द्वौ क्वशब्दावत्यन्तामङ्गतिवाचकौ भवतः । यतो हे सौम्यवदन! ते-तव वक्त्रं-मुखं क्व वर्तते? तथा निशाकरस्य-चन्द्रस्य, निशां करोतीति निशाकरस्तस्य 'तत्पुरुषः', बिम्बं मण्डलं क्व वर्तते? । यत् त्वन्मुखस्येन्दोश्च साम्यमुच्यते तत्र महदन्तरं पश्यामि । कथंभूतं वक्त्रम्? 'सुरनरोरगनेत्रहारि' सुरा-वैमानिकाः नरा-मानवाः उरगा-भवनवासिनस्तेषां नेत्राणि-लोचनानि तानि (तेषां) हारि-रञ्जनशीलम् । उरसा गच्छन्तीत्युरगाः 'तत्पुरुषः' । सुराश्च नराश्चोरगाश्च सुरनरोरगाः 'द्वन्द्वः' सुरनरोरगाणां नेत्राणि सुरनरोरगनेत्राणि 'तत्पुरुषः', सुरनरोरगनेत्राणि हरतीत्येवंशीलं सुरनरोरगनेत्रहारि 'तत्पुरुषः' । पुनः किंलक्षणं वक्त्रम्? 'निःशेषनिर्जितजगत्रितयोपमान' निःशेषेण-सामस्त्येन निर्जितानि-पराभूतानि जगत्रितयोपमानानि कमलदर्पणचन्द्रादीनि येन (तत्) । जगतां त्रितयं जगत्रितयं 'तत्पुरुषः', जगत्रितयस्योपमानानि जगत्रितयोपमानानि 'तत्पुरुषः', निर्गतः शेषादिति निःशेषः 'तत्पुरुषः', निःशेषेण निर्जितानि निःशेषनिर्जितानि 'तत्पुरुषः', निःशेषनिर्जितानि जगत्रितयोपमानानि येन तद् 'बहुव्रीहिः' । बिम्बं कथंभूतम्? 'कलङ्कमलिनं' मृगशशकश्मलम् (?) । कलङ्केन मलिनं कलङ्कमलिनं 'तत्पुरुषः' । यच्चन्द्रमण्डलं वासरे-दिवसे पाण्डुपलाशकल्पं जीर्णपत्रं पाण्डुरवर्णपत्रसदृशं भवति । पाण्डु च तत् पलाशं च पाण्डुपलाशं 'कर्मधारयः', पाण्डुपलाशस्य कल्पं पाण्डुपलाशकल्पं 'तत्पुरुषः' । तेन त्वन्मुखस्योपमानचन्द्रो[1] न घटते । इति त्रयोदशमवृत्तार्थः ॥ १३ ॥

* * * *

अथ गुणव्याप्तिमाह—( सम्पूर्णेत्यादि ) ।

व्याख्या—हे 'त्रिजगदीश्वर'! हे त्रिभुवननाथ! । त्रयाणां जगतां समाहारस्त्रिजगत् 'द्विगुः,' त्रिजगतः ईश्वरः त्रिजगदीश्वरस्तस्य सम्बोधनं 'तत्पुरुषः' । तव गुणाः-क्षमावैराग्यादयः कर्तृभूतास्त्रिभुवनं-त्रिजगत् त्रयाणां भुवनानां समाहारस्त्रिभुवनं 'द्विगुः' कर्म लङ्घयन्ति । लङ्घनं लङ्घिः लङ्घिं कुर्वन्तीति लङ्घयन्ति-अतिक्रामन्ति, आत्रिलोकी तिष्ठन्तीत्यर्थः । गुणाः किंविशिष्टाः? 'सम्पूर्णमण्डलशशाङ्ककलाकलापशुभ्राः' आश्विनपूर्णिमासम्बन्धी शशाङ्कः-चन्द्रस्तस्य कलाकलापः-करनिकरस्तद्वच्छुभ्राः-धवलाः । सम्पूर्णं मण्डलं यस्य स सम्पूर्णमण्डलः 'बहुव्रीहिः', शशोऽङ्के यस्य स शशाङ्कः 'बहुव्रीहिः', सम्पूर्णमण्डलश्चासौ शशाङ्कश्च सम्पूर्णमण्डलशशाङ्कः 'कर्मधारयः', कलानां कलापः कलाकलापः 'तत्पुरुषः', सम्पूर्णमण्डलशशाङ्कस्य कलाकलापः सम्पूर्णमण्डलशशाङ्ककलाकलापः

१ '०पमान चन्द्रे न' इति प्रतिभाति ।

'तत्पुरुषः', सम्पूर्णमण्डलशशाङ्ककलाकलापवत् शुभ्राः सम्पूर्णमण्डलशशाङ्ककलाकलापशुभ्राः 'तत्पुरुषः'। विश्वव्याप्तौ हेतुं दर्शयति–ये गुणा एकम्–अद्वितीयं नाथं संश्रिता–आश्रिताः। कः पुरुषो यथेष्टं–स्वेच्छया, इष्टमनतिक्रम्य यथेष्टम् 'अव्ययीभावः', सञ्चरतः–परिभ्रमतस्तान् गुणान् निवारयति–निषेधयति? अपि तु न कश्चित्। त्रिजगदपि भवद्गुणग्रहणतत्परं दृश्यते, तथा च समर्थे प्रभौ सेवाश्रितानां सर्वत्रास्खलितप्रचारो युक्त एव। इति चतुर्दशमवृत्तार्थः॥ १४॥

* * * *

(अथ भगवद्वीतरागतामाह–चित्रमित्यादि)।

व्याख्या—हे सकलविकारन्यक्कारपर! यदि ते–तव मनः–अन्तःकरणं मनागपि–अल्पमात्रमपि त्रिदशाङ्गनाभिः–देवीभिः, त्रिदशानामङ्गनास्त्रिदशाङ्गनास्ताभिः 'तत्पुरुषः', विकारमार्गं–कामोत्पथं, विकारस्य मार्गो विकारमार्गस्तं 'तत्पुरुषः', न नीतं–न प्रापितम्। द्विकर्मकोऽयं धातुः। 'अत्र' अस्मिन्नर्थे। 'किं चित्रं' किमाश्चर्यम्? अपि तु न किमपि। अत्र दृष्टान्तमाह–कदाचित्–कस्मिंश्चित् क्षणे चलिताचलेन–कम्पितान्यपर्वतेन, चलिता अचला येन स चलिताचलस्तेन 'बहुव्रीहिः', कल्पान्तकालमरुता–प्रलयसमयपवनेन, कल्पस्यान्तः कल्पान्तः 'तत्पुरुषः', कल्पान्तश्चासौ कालश्च कल्पान्तकालः 'कर्मधारयः', कल्पान्तकालस्य मरुत् कल्पान्तकालमरुत् तेन 'तत्पुरुषः', कर्तृभूतेन मन्दराद्रिशिखरं–मेरुशृङ्ग, मन्दरश्चासावद्रिश्च मन्दराद्रिः 'कर्मधारयः', मन्दराद्रेः शिखरं मन्दराद्रिशिखरं 'तत्पुरुषः' कर्मपदं किं चलितं–स्वस्थानात् किं धूतम्? अपि तु न। यथा युगान्ते सर्वपर्वतानां क्षोभो भवति न तु मेरोः, तथा देवीभिरिन्द्रचन्द्रगोपीन्द्ररुद्रादयो देवाः क्षोभिताः, न जिनेन्द्रः। इति पञ्चदशमवृत्तार्थः॥ १५॥

* * * *

अथ भगवतो दीपेनोपमानिर्गममाह—(निर्धूमेत्यादि)।

व्याख्या—हे त्रिभुवनैकदीप! त्वमपरः–अपूर्वो दीपः–कज्जलध्वजोऽसि–वर्तसे, यतो दीपो धूमवान् सवर्तिस्तैलेनोद्द्योतको गृहमात्रप्रकाशो वातेन विध्याता चैकस्थानस्थः स्यात्, त्वमपूर्वदीपः, यतः किंविशिष्टः? 'निर्धूमवर्तिः'। धूमश्च वर्तिश्च धूमवर्ती 'द्वन्द्वः', धूमवर्तिभ्यां निर्गतो निर्धूमवर्तिः 'तत्पुरुषः'। धूमो द्वेषः वर्तिः कामदशा ताभ्यां रहित इत्यर्थः। त्वं किंभूतः? 'अपवर्जिततैलपूरः' त्यक्ततैलपूरः। तैलस्य पूरः तैलपूरः 'तत्पुरुषः', अपवर्जितस्तैलपूरो येन सः 'बहुव्रीहिः'। त्यक्तस्नेहप्रकरः। अन्यच्च—हे नाथ!–हे स्वामिन्! त्वं कृत्स्नं–सम्पूर्णं पञ्चास्तिकायात्मकं जगत्त्रयं–विश्वत्रयं, जगतां त्रयं जगत्त्रयं (तत्) 'तत्पुरुषः' इदं–प्रत्यक्षगतं प्रकटीकरोषि–केवलोद्द्योतेन प्रकाशयसि। प्रकटं करोषीति प्रकटीकरोषि। अन्यच्च– त्वं जातु–कदाचित् चलिताचलानां–कम्पितगिरीणां, चलिता अचला यैस्ते चलिताचलास्तेषां 'बहुव्रीहिः', मरुतां–वातानां, भगवत्पक्षे मरुतां–

देवानां न गम्यो-न वशः, असीति शेषः । त्वं कीदृशः? 'जगत्प्रकाशः' जगदुद्द्योतको वा । जगत्सु प्रकाशो यस्मात् स 'बहुव्रीहिः' । इति षोडशमवृत्तार्थः ॥ १६ ॥

* * * *

अथ सूर्येणौपम्यनिरासमाह—( नास्तमित्यादि ) ।

व्याख्या—हे 'मुनीन्द्र' ! मुनीनामिन्द्रो मुनीन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः' । हे मुनीन्द्र ! –हे मुमुक्षुप्रभो ! त्वमसि–भवसि । त्वं कीदृशः? 'सूर्यातिशायिमहिमा' सूराधिकमहत्त्वः । सूर्यमतिशेते इत्येवंशीलं सूर्यातिशायी 'तत्पुरुषः', सूर्यातिशायी महिमा यस्य स 'बहुव्रीहिः' । तथा यतोऽस्तं–तिरोधानं त्वं कदाचित् नोपयासि–नोपगच्छसि । सूरः सन्ध्यासमये अस्तं याति, त्वं तु सदा प्रकाशरूपः । तथा त्वं राहुगम्यः, राहोर्गम्यो राहुगम्यः 'तत्पुरुषः' नासि । रविग्रहणकाले राहुगम्यो भवति, न त्वम् । तथा त्वं सहसा–सद्यो युगपद्–एककालं जगन्ति–त्रीणि भुवनानि स्पष्टीकरोषि–प्रकाशयसि । अस्पष्टं स्पष्टं करोषीति स्पष्टीकरोषि । रविः पुनः भुवनैकदेशं क्रमेण प्रकाशयति । तथा त्वं अम्भोधरोदरनिरुद्धमहाप्रभावो नासि । अम्भोधरा–मेघास्तेषामुदरं–कुक्षिस्तेन निरुद्धः–अपनीतो महान् प्रभावः–प्रतापो यस्य सः । अम्भो धरन्तीत्यम्भोधराः 'तत्पुरुषः', अम्भोधराणां उदरं अम्भोधरोदरं 'तत्पुरुषः', अम्भोधरोदरेण निरुद्धोऽम्भोधरनिरुद्धः 'तत्पुरुषः', महांश्चासौ प्रभावश्च महाप्रभावः 'कर्मधारयः', अम्भोधरोदरनिरुद्धो महाप्रभावो यस्य स 'बहुव्रीहिः' । रविस्तद्विपरीतो भवति, अतः सूर्यातिशायिमहिमा त्वमसि । इति सप्तदशमवृत्तार्थः ॥१७॥

* * * *

अथेन्दोरुपमाननिरासमाह—( नित्योदयमित्यादि ) ।

व्याख्या—हे देववृन्दवन्द्य ! तव मुखाब्जं–वदनकमलं, मुखमेवाब्जं मुखाब्जं 'कर्मधारयः', अपूर्वशशाङ्कबिम्बं, शशोऽङ्के यस्य स शशाङ्कः 'बहुव्रीहिः', शशाङ्कस्य बिम्बं शशाङ्कबिम्बं 'तत्पुरुषः', अपूर्वं च तत् शशाङ्कबिम्बं चापूर्वशशाङ्कबिम्बं 'कर्मधारयः', तव मुखकमलेन्दुमण्डलं विभ्राजते–भाति । किंभूतं मुखाब्जमपूर्वशशाङ्कबिम्बम्? 'नित्योदयं' शाश्वतशोभोल्लासम् । चन्द्रबिम्बं तु प्रातरस्तमेति । नित्यमुदयो यस्य तन्नित्योदयं 'बहुव्रीहिः' । पुनः किंभूतं मुखाब्जमपूर्व० ? 'दलितमोहमहान्धकारं' दलितं–ध्वस्तं मोहः–अज्ञानं मोहनीयकर्म वा स एव महान्धकारं–महातमो येन ( तत् ) । महच्च तदन्धकारं च महान्धकारं 'कर्मधारयः', दलितं मोहमहान्धकारं येन तद् 'बहुव्रीहिः' । पुनः मुखाब्जमपूर्व० किंलक्षणम्? 'न गम्यं' न वशम् । कस्य? 'राहुवदनस्य' । राहोर्वदनं राहुवदनं तस्य 'तत्पुरुषः' । दुर्वादिवादस्यागोचरमित्यर्थः । तथा मुखाब्जमपूर्व० ( किंभूतम्? ) 'वारिदानां' वारि ददतीति वारिदास्तेषां 'तत्पुरुषः', मेघवद् दुष्टाष्टकर्मणां न गम्यं न वशम् । तानि जिनमुखेक्षणात् क्षयं यान्ति । चन्द्रबिम्बं राहोर्मेघानां च

गम्यं स्यात् इति। पुनः किंभूतं मुखाब्जमपूर्व०? 'अनल्पकान्ति' गुरुतरद्युति। न अल्पा अनल्पा 'तत्पुरुषः', अनल्पा कान्तिर्यस्य तद् 'बहुव्रीहिः'। कृष्णपक्षे क्षीणतेजस्त्वादल्पप्रभं चन्द्रबिम्बम्। मुखाब्जमपूर्व० किं कुर्वत्? 'विद्योतयत्' प्रकाशयत्। किं कर्मतापन्नम्? 'जगत्' विश्वम्। शशिबिम्बं तु खण्डेऽप्यसमर्थम्। अथ नित्यं-सदा उल्लसत् अयः-शुभभाग्यं यस्य तन्नित्योदयं 'बहुव्रीहिः,' सदोल्लसच्छुभभागधेयमित्यर्थः। अतश्चन्द्रमण्डलादत्यद्भुतं भवद्वक्त्रम्। इत्यष्टादशवृत्तार्थः॥ १८॥

* * * *

रात्रौ चन्द्रस्य दिवा रवेर्भगवतो मुखचन्द्रे सति निरर्थकत्वं वर्णयति—(किमित्यादि)।

व्याख्या—हे नाथ! शर्वरीषु-रजनीषु शशिना-चन्द्रेण, शशोऽस्यास्तीति शशी तेन ('तत्पुरुषः') वा-अथवा अह्नि-दिवसे विवस्वता-सूर्येण किं कार्यं भवति? अपि तु न किमपि। केषु सत्सु? 'तमस्सु' अन्धकारेषु सत्सु। कथंभूतेषु तमस्सु? 'युष्मन्मुखेन्दुदलितेषु' भवद्वदनचन्द्रविनाशितेषु। मुखमेवेन्दुः मुखेन्दुः 'कर्मधारयः', युष्माकं मुखेन्दुः युष्मन्मुखेन्दुः 'तत्पुरुषः', युष्मन्मुखेन्दुना दलितानि युष्मन्मुखेन्दुदलितानि तेषु 'तत्पुरुषः'। अत्र दृष्टान्तमाह-'जीवलोके' भूपीठे। जीवानां लोको जीवलोकस्तस्मिन् 'तत्पुरुषः'। जीवलोके कथंभूते? 'निष्पन्नशालिवनशालिनि' निष्पन्नैः-पाकं प्राप्तैः शालिवनैः-कलमादिकेदारैः शालते-शोभते इत्येवंशीलस्तस्मिन्। शालीनां वनानि शालिवनानि 'तत्पुरुषः', निष्पन्नानि च तानि शालिवनानि च निष्पन्नशालिवनानि 'कर्मधारयः', निष्पन्नशालिवनैः शालते इत्येवंशीलो निष्पन्नशालिवनशाली तस्मिन् 'तत्पुरुषः'। (जलधरैः किंभूतैः?) 'जलभारनम्रैः' सलिलभारनमनशीलैः। जलस्य भारो जलभारः 'तत्पुरुषः', जलभारेण नम्राः जलभारनम्रास्तैः 'तत्पुरुषः'। एवंविधैर्जलधरैः-मेघैः, जलं धरन्तीति जलधरास्तैः 'तत्पुरुषः', कियत् कार्यं स्यात्? न किमपीत्यर्थः। यथा तृणवल्लीधान्यादिषु निष्पन्नेषु मेघाः केवलं क्लेशहेतुत्वान्निष्फला एव, तथा त्वन्मुखेन्दुना ध्वस्तदुरिततिमिरत्वात् शैत्यसन्तापपीडापहारित्वाच्च चन्द्रसूर्याभ्यां न कोऽप्यर्थः। आगमेऽप्येवो(वमु)क्तम्—

"चंदाइच्चगहाणं, पहा पयासेइ परिमियं खित्तं।
केवलिअं पुण नाणं, लोआलोअं पयासेइ॥ १॥"—आर्या

इत्येकोनविंशतितमवृत्तार्थः॥ १९॥

* * * *

अथ भगवद्ज्ञानेनान्यदेवान् क्षिपति—( ज्ञानमित्यादि )।

व्याख्या—हे लोकालोकप्रकाश! ज्ञानं यथा-येन प्रकारेण त्वयि-भवति विभाति। ज्ञानं-यथावस्थितार्थपरिच्छेदको बोधः। 'विभाति' शोभते। ज्ञानं कीदृशम्? 'कृताव-

---

१ '०स्तबकुल्प०' इत्यपि पाठः। २ छायार्थं द्रष्टव्यं ४९तमं पृष्ठम्।

काशं' कृतोऽवकाशो येन तत् कृतावकाशं 'बहुव्रीहिः', विहितप्रकाशं धर्माधर्मादीनां, नैवं [नैव] तथा-तेन प्रकारेण ज्ञानं विभाति। केषु? 'हरिहरादिषु' नारायणमहेशादिषु। हरिश्च हरश्च हरिहरौ 'द्वन्द्वः', हरिहरावादौ येषां ते हरिहरादयस्तेषु 'बहुव्रीहिः'। हरिहरादिषु किंभूतेषु? 'नायकेषु' लोकैर्देवत्वेन स्थापितेषु। अत्रार्थेऽर्थान्तरन्यासमाह-तेजो-धाम यथा-येन प्रकारेण महत्त्वं-महिमानं याति-प्राप्नोति। केषु? 'स्फुरन्मणिषु' महारत्नेषु इन्द्रनीलादिषु। स्फुरन्तश्च ते मणयश्च स्फुरन्मणयस्तेषु 'कर्मधारयः'। तथा च काचशकले-काचखण्डे, काचस्य शकलं काचशकलं तस्मिन् 'तत्पुरुषः', नैव तेजो महत्त्वं याति। काचशकले कीदृशेऽपि? 'किरणाकुलेऽपि' रश्मिव्याप्तेऽपि। किरणैराकुलं किरणाकुलं तस्मिन् 'तत्पुरुषः'। काचशकलतुल्या हरिहरादयः, कथं तथा(दा?) तत्र ज्ञानं भवेत्?। इति विंशतितमवृत्तार्थः ॥ २० ॥

* * * *

अथ निन्दास्तुत्योर्मिश्रतामाह[1]—( मन्य इत्यादि )।

व्याख्या—हे सकलदेवोत्तम! यन्मया हरिहरादय एव दृष्टाः, हरिश्च हरश्च हरिहरौ 'द्वन्द्वः', हरिहरावादौ येषां ते (हरि०) 'बहुव्रीहिः', विष्णुमहेशादयो दृष्टाः-विलोकिताः तद् वरं मन्ये-प्रधानं जानामि। येषु-सुरेषु दृष्टेषु-विलोकितेषु हृदयं-चित्तं त्वयि-भवद्विषये तोषं-प्रमोदमेति-प्राप्नोति। यतस्तैर्हि तव मुद्राऽपि नाभ्यस्ता, ज्ञानं दूरे अस्तु। भवता-त्वया वीक्षितेन-विलोकितेन किं जातम्?। येन कारणेनान्यः-अपरः कश्चिद् देवो भवान्तरेऽपि-अन्यजन्मन्यपि, एकस्माद् भवादन्यो भवो भवान्तरं तस्मिन् 'तत्पुरुषः', भुवि-लोके मनो न हरति-मानसं न गृह्णाति। यतः सर्वगुणो भवान् तथा भव्यानां चित्तहरणं कुरुते अन्ये देवा रागद्वेषविसंस्थुलत्वादज्ञानविकलत्वाच्च न मनोहरणं कुर्वते। इत्येकविंशतितमवृत्तार्थः ॥ २१ ॥

* * * *

साम्प्रतं सर्वजननीषु भगवज्जनन्या अतिशायितां वर्णयति—( स्त्रीणामित्यादि )।

व्याख्या—हे चतुर्दशस्वप्नसूचित! स्त्रीणां-नारीणां शतानि बहुवचनत्वात् कोटाकोटिसंख्याः पुत्रान्-सुतान् जनयन्ति-प्रसुवते। कथम्? 'शतशः'। शतं वारानिति शतशः। तासु मध्ये अन्या-अपरा जननी-माता त्वदुपम-त्वत्समं, तवोपमा यस्य स त्वदुपमस्तं 'बहुव्रीहिः', सुतं-नन्दनं न प्रसूता-नाजीजनत्। त्वां पुत्रं मरुदेवैव प्रसूता। अत्रोपमामाह-सर्वा दिशो-निखिलाः काष्ठाः, सर्वाश्च ता दिशश्च सर्वादिशः 'कर्मधारयः,' सर्वा इति पृथक् पदं वा, भानि-नक्षत्राणि दधति-धारयन्ति। प्राच्येव दिग्-पूर्वैवाशा सहस्ररश्मि-सूर्यं, सहस्रं रश्मयो यस्य स सहस्ररश्मिस्तं 'बहुव्रीहिः' जनयति-प्रसूते। जनिं करो-

---

१ '०स्तुतिमिश्रमाह' इत्यपि पाठः।

तीति जनयति नामधातुः । सहस्ररश्मिं कथंभूतम्? 'स्फुरदंशुजालं' चमत्कारकलापम् । स्फुरन्तश्च ते अंशवश्च स्फुरदंशवः 'कर्मधारयः', स्फुरदंशूनां जालं यत्र स स्फुरदंशुजालस्तं 'बहुव्रीहिः' । यथा ऐन्द्री दिक् सूरोदये हेतुः, तथा त्वज्जन्मनि मरुदेवी जननी हेतुः । इति द्वाविंशतितमवृत्तार्थः ॥ २२ ॥

* * * *

अथ भगवतः परमपुंस्त्वेन स्तुतिमाह—( त्वामामनन्तीत्यादि ) ।

व्याख्या—'हे मुनीन्द्र!' मुनीनामिन्द्रो मुनीन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः' । मुनयो-ज्ञानिनस्त्वां परमं पुमांसमामनन्ति-भणन्ति । त्वां किंभूतम्? 'अमलं' सकलद्वेषमलरहितम् । न विद्यते मलो यत्र सोऽमलस्तं 'बहुव्रीहिः' । त्वां किंभूतम्? 'आदित्यवर्णम्' । आदित्यवद् वर्णो यस्य स आदित्यवर्णस्तं 'बहुव्रीहिः' । कथम्? 'पुरस्तात्' अग्रे । कस्य? 'तमसः' दुरितस्य अन्धकारस्य वा । त्वां-भवन्तं सम्यगुपलभ्य-प्राप्य मुनयो मृत्युं-कृतान्तभयं जयन्ति-स्फेटयन्ति । अन्यच्च शिवपदस्य-मोक्षस्थानस्य, शिवस्य पदं शिवपदं तस्य 'तत्पुरुषः', अन्यः-त्वत्तोऽपरः शिवः-प्रशस्तो निरुपद्रवो वा मार्गो नास्ति । मुक्तिकारणं त्वमेव, अतः श्रयणीयः । इति त्रयोविंशतितमवृत्तार्थः ॥ २३ ॥

* * * *

अथ सर्वदेवतामयं भगवन्तं स्तौति—( त्वामव्ययमित्यादि ) ।

व्याख्या—हे सर्वदर्शिन्! सन्तो-विचक्षणास्त्वामेवंविधं प्रवदन्ति-प्रकर्षेण ब्रुवते । त्वां किंविशिष्टम्? 'अव्ययं', न विद्यते व्ययो यस्य सोऽव्ययस्तं 'बहुव्रीहिः', सर्वकालस्थितिकस्वभावम् । पुनस्त्वां किंभूतम्? 'विभुम्', विभाति परमैश्वर्येणेति विभुस्तं विभुम् । द्वितीयोऽर्थो भण्यते-विभवति-कर्मोन्मूलने समर्थो भवतीति विभुस्तं विभुम्, अथवा विभुम्-इन्द्रादिप्रभुम् । पुनस्त्वां किंभूतम्? 'अचिन्त्यं', चिन्तनार्हश्चिन्त्यः, न चिन्त्योऽचिन्त्यस्तं 'तत्पुरुषः', अध्यात्मिकैरपि चिन्तितुमशक्यम् । तथा त्वां किंभूतम्? 'असङ्ख्यं', न विद्यते सङ्ख्या यस्य सोऽसङ्ख्यस्तं 'बहुव्रीहिः', गुणैरपि अपरिमेयमित्यर्थः । पुनस्त्वां किंभूतम्? 'आद्यम्' आदौ भव आद्यस्तमाद्यम्, अथवा चतुर्विंशतिजिनेष्वाद्यस्तमाद्यं-प्रथमं तीर्थङ्करं तस्य तीर्थस्यादिकरत्वादाद्यस्तमाद्यं-प्रथमम् । पुनस्त्वां किंभूतम्? 'ब्रह्माणं' बृहति-अनन्तानन्देन वर्धते इति ब्रह्मा तम् । पुनस्त्वां किंभूतम्? 'ईश्वरं' नाथम् । पुनस्त्वां किंभूतम्? 'अनन्तं', न विद्यतेऽन्तो यस्य सोऽनन्तस्तं 'बहुव्रीहिः', मुक्तिपदप्राप्तत्वात् मृत्युरहितम् । पुनस्त्वां किंभूतम्? 'अनङ्गकेतुम्', अनङ्गे केतुरनङ्गकेतुस्तं 'तत्पुरुषः', कामनाशनम् । पुनस्त्वां किंभूतम्? 'योगीश्वरं', योगो विद्यते येषां ते योगिनः, योगिनामीश्वरो योगीश्वरस्तं 'तत्पुरुषः', योगिनां-मनोवचःकायजितां ज्ञातचतुर्ज्ञानिनां वा ईश्वरं-नाथम् । पुनस्त्वां किंभूतम्? 'विदितयोगम्' । विदितो योगो येन यस्य वा स विदि-

---

१ 'अज्ञानस्य' इत्यपि पाठः ।

तद्योगस्तं 'बहुव्रीहिः' । विदितो–ज्ञातो ध्यानिभिर्मनोवाक्कायसंवररूपोऽष्टांगरूपो वा योगो यस्य स विदितयोगस्तम् । पुनस्त्वां किंभूतम्? 'अनेकम्' । न एकोऽनेकस्तं 'तत्पुरुषः', ज्ञानेन सर्वगतत्वात् । पुनस्त्वां किंभूतम्? 'एकं' जीवद्रव्याद्यपेक्षया । पुनस्त्वां किंभूतम्? 'ज्ञानस्वरूपं', ज्ञानमेव स्वरूपं यस्य स ज्ञानस्वरूपस्तं 'बहुव्रीहिः', क्षायिककेवलचिन्मयम् । पुनस्त्वां किंभूतम्? 'अमलं' निर्मलम् । न विद्यते रागादिमलो यत्र सोऽमलस्तं 'बहुव्रीहिः', अष्टादशदोषरहितम् । पञ्चदश उक्तयो वाऽत्र पृथक्तया ज्ञेयाः । इति चतुर्विंशतितमवृत्तार्थः ॥ २४ ॥

* * * *

इदानीं बुद्धमहेशविधातृविष्णुरूपपुरुषचतुष्टयस्वरूपं भगवतोऽवदर्शयति—(बुद्धेत्यादि) ।

व्याख्या— हे 'विबुधार्चित!' हे शक्रमहित! । विबुधैरर्चितो विबुधार्चितस्तस्य सम्बोधनं 'तत्पुरुषः' ।त्वमेव बुद्धोऽसि । कस्मात्? पदार्थेषु 'बुद्धिबोधात्' मतिप्रकाशात् । बुद्धेर्बोधो बुद्धिबोधस्तस्मात् 'तत्पुरुषः' । 'त्वं शङ्करोऽसि' शिवो भवसि । शं करोतीति शङ्करः 'तत्पुरुषः' । कस्मात्? 'भुवनत्रयशङ्करत्वात्' जगत्रयसुखोत्पादकत्वात् । भुवनानां त्रयं भुवनत्रयं 'तत्पुरुषः', शङ्करस्य भावः शङ्करत्वं, भुवनत्रयस्य शङ्करत्वं भुवनत्रयशङ्करत्वं तस्मात् 'तत्पुरुषः' । हे धीर! त्वं धाताऽसि–स्रष्टा भवसि । कस्मात्? 'विधानात्' निष्पादनात् । कस्य? 'शिवमार्गविधेः' मोक्षमार्गविधेः । शिवस्य मार्गः शिवमार्गः 'तत्पुरुषः', शिवमार्गस्य विधिः शिवमार्गविधिस्तस्य 'तत्पुरुषः' । हे भगवन्! व्यक्तं–प्रकटं त्वमेव पुरुषोत्तमोऽसि–पुरुषोत्कृष्टो भवसि । पुरुषेषूत्तमः पुरुषोत्तमः 'तत्पुरुषः' । इति पञ्चविंशतितमवृत्तार्थः ॥ २५ ॥

* * * *

(तुभ्यमित्यादि) ।

व्याख्या—हे नाथ! तुभ्यं–भवते नमोऽस्तु । तुभ्यं किंभूताय? 'त्रिभुवनार्तिहराय' विश्वत्रयीपीडानाशकाय । त्रयाणां भुवनानां समाहारस्त्रिभुवनं 'द्विगुः', त्रिभुवनस्य आर्तिः त्रिभुवनार्तिः 'तत्पुरुषः', त्रिभुवनार्तिं हरतीति त्रिभुवनार्तिहरस्तस्मै 'तत्पुरुषः' । तुभ्यं नमोऽस्तु । तुभ्यं कथंभूताय? 'क्षितितलामलभूषणाय' क्षितितलस्य–भूपीठस्यामलभूषणाय–निर्मलालङ्काराय । क्षितेस्तलं क्षितितलं 'तत्पुरुषः', न विद्यते मलो यत्र तदमलं ('बहुव्रीहिः'), अमलं च तद् भूषणं चामलभूषणं 'कर्मधारयः', क्षितितलस्यामलभूषणं क्षितितलामलभूषणं तस्मै 'तत्पुरुषः' । तुभ्यं नमोऽस्तु । तुभ्यं किंलक्षणाय? 'परमेश्वराय' । परमश्चासावीश्वरश्च परमेश्वरः तस्मै 'कर्मधारयः' । कस्य? 'त्रिजगतः' । त्रयाणां जगतां समाहारस्त्रिजगत् तस्य 'द्विगुः' । त्रैलोक्यप्रकृष्टनाथायेत्यर्थः । हे जिन! तुभ्यं नमोऽस्तु । तुभ्यं किंलक्षणाय? 'भवोदधिशोषणाय' भव एवोदधिर्भवोदधिः 'कर्मधारयः',

भवोदधेः शोषणं यस्मिन् स भवोदधिशोषणस्तस्मै 'बहुव्रीहिः' । संसारसागरसन्तापनाय । इति षड्विंशतितमवृत्तार्थः ॥ २६ ॥

* * * *

पुनर्युक्त्या गुणान् स्तौति—( को विस्मयोऽत्रेत्यादि ) ।

व्याख्या—हे 'मुनीश!' मुनीनां ईशो मुनीशस्तस्य सम्बोधनं 'तत्पुरुषः' । नामेति कोमलामन्त्रणे । यदि निरवकाशतया–सर्वाङ्गव्यापकतया, निर्गतोऽवकाशो यस्मादिति निरवकाशः ('बहुव्रीहिः'), निरवकाशस्य भावो निरवकाशता तया, अशेषैः–सर्वैः, न विद्यते शेषो येषु ते अशेषास्तैः 'बहुव्रीहि·', गुणैस्त्वं संश्रितः–आश्रितः। अत्रार्थे को विस्मयः? –किं कौतुकमस्ति? । अन्यच्च दोषैः–दूषणैः स्वप्नान्तरेऽपि–स्वप्नावस्थायामपि । एकस्मात् स्वप्नादन्यः स्वप्नः स्वप्नान्तरं तस्मिन् 'तत्पुरुषः', कदाचिदपि–कस्मिंश्चिदपि क्षणे नेक्षितोऽसि–न विलोकितोऽसि । अत्रापि को विस्मयः?–किमाश्चर्यम्? । यतो गरुडदर्शनाद् भुजगा इव सूर्येक्षणात् तमश्चया इव दूरे नश्यन्ति, तथा त्वत्तो दोषा नेशुः । किंभूतैर्दोषैः? 'उपात्तविविधाश्रयजातगर्वैः' विविधाश्च ते आश्रयाश्च विविधाश्रयाः, उपात्ताश्च ते विविधाश्रयाश्च उपात्तविविधाश्रयाः उभयत्र 'कर्मधारयः', उपात्तविविधाश्रयैर्जातः उपात्तविविधाश्रयजातः ('तत्पुरुषः'), उपात्तविविधाश्रयजायतो गर्वो येषां ते उपात्तविविधाश्रयजातगर्वास्तैः 'बहुव्रीहिः' । उपात्ताः–प्राप्ता ये विविधा-नानारूपा आश्रया–निलयास्तैर्जात–उत्पन्नो गर्वो येषां ते तैः । वयं सर्वजनप्रियाः, गुणास्तु स्तोकजनाश्रया एवेति रूपो दर्पो येषाम् । इति सप्तविंशतितमवृत्तार्थः ॥ २७ ॥

* * * *

अथ वृत्तचतुष्टयेन प्रातिहार्यचतुष्कमाह—( उच्चैरशोकेत्यादि ) ।

व्याख्या—हे सेवकजनकल्पवृक्ष! भवतः–तव रूपमाभाति–शोभते । कथम्? 'उच्चैः' अतिशयेन । रूपं किंलक्षणम्? 'अशोकतरुसंश्रितम्' । न विद्यते शोको यत्र सोऽशोकः 'बहुव्रीहिः', अशोकश्चासौ तरुश्चाशोकतरुः 'कर्मधारयः', अशोकतरौ संश्रितं अशोकतरुसंश्रितं 'तत्पुरुषः' । पुनः किंलक्षणं रूपम्? 'उन्मयूखम्' । (उद्–)ऊर्ध्वं मयूखाः–किरणा यस्य तद् 'बहुव्रीहिः'। रूपं किंभूतम्? 'अमलं' निर्मलं मलस्वेदादिरहितम् । न विद्यते मलो यत्र तदमलं 'बहुव्रीहिः' । कथम्? 'नितान्तं' निरन्तरम् । दृष्टान्तमाह—इव–यथा रवेः–सूर्यस्य बिम्बं–मण्डलमाभाति । बिम्बं किंलक्षणम्? 'पयोधरपार्श्ववर्ति' मेघसमीपस्थम् । पयो धरतीति पयोधरः 'तत्पुरुषः', पयोधरस्य पार्श्वं पयोधरपार्श्वं 'तत्पुरुषः', पयोधरपार्श्वे वर्तते इत्येवंशीलं पयोधरपार्श्ववर्ति 'तत्पुरुषः' । बिम्बं कथंभूतम्? 'स्पष्टोल्लसत्किरणं' प्रकटोद्यत्प्रभम् । उल्लसन्तश्च ते किरणाश्च उल्लसत्किरणाः 'कर्मधारयः', स्पष्टा उल्लसत्किरणा यस्मिन् तद् 'बहुव्रीहिः' । बिम्बं किंलक्षणम्? 'अस्ततमोवितानं' ध्वस्तान्धकारप्रक-

रम् । तमसो वितानं तमोवितानं 'तत्पुरुषः', ध्वस्तं तमोवितानं येन तद् 'बहुव्रीहिः'। सूरमण्डलसमानं भगवद्रूपं, मेघतुल्यो नीलदलोऽशोकः । इत्यष्टाविंशतितमवृत्तार्थः ॥२८॥

* * * *

( सिंहेत्यादि ) ।

व्याख्या—हे तीर्थनाथ! तव–भवतो वपुः–देहो विभ्राजते–शोभते । वपुः किंलक्षणम्? 'कनकावदातं', कनकवदवदातं कनकावदातं 'तत्पुरुषः', हेमगौरम् । कस्मिन्? 'सिंहासने' सुवर्णनिष्पन्नासने । सिंहासने किंविशिष्टे? 'मणिमयूखशिखाविचित्रे' रत्नकान्तिचूलाचारुणि । मणीनां मयूखाः मणिमयूखाः 'तत्पुरुषः', मणिमयूखानां शिखाः मणिमयूखशिखाः 'तत्पुरुषः', मणिमयूखशिखाभिर्विचित्रं तस्मिन् 'तत्पुरुषः' । दृष्टान्तमाह–इव–यथा सहस्ररश्मेः, सहस्रं रश्मयो यस्य स सहस्ररश्मिस्तस्य 'बहुव्रीहिः' सूर्यस्य बिम्बं–मण्डलं विभ्राजते । कस्मिन्? 'तुङ्गोदयाद्रिशिरसि' उन्नतपूर्वाचलशृङ्गे । उदयस्य अद्रिः उदयाद्रिः 'तत्पुरुषः', तुङ्गश्चासावुदयाद्रिश्च तुङ्गोदयाद्रिः 'कर्मधारयः', तुङ्गोदयाद्रेः शिरः तुङ्गोदयाद्रिशिरस्तस्मिन् 'तत्पुरुषः'। बिम्बं कथंभूतम्? 'वियद्विलसदंशुलतावितानं' वियति –आकाशे विलसन्तो–द्योतमाना येऽंशवः–करास्त एव लतावितानं–वल्लिविस्तारो यस्य तद् । विलसन्तश्च तेंऽशवश्च विलसदंशवः 'कर्मधारयः', लतानां वितानं लतावितानं 'तत्पुरुषः', विलसदंशव एव लतावितानं विलसदंशुलतावितानं 'कर्मधारयः', वियति विलसदंशुलतावितानं यस्य तद् 'बहुव्रीहिः'। इत्येकोनत्रिंशत्तमवृत्तार्थः ॥ २९ ॥

* * * *

( कुन्देत्यादि ) ।

व्याख्या—हे पारगत ! तव–भवतो वपुः–शरीरं विभ्राजते–चकास्ते । वपुः किंलक्षणम्? 'कलधौतकान्तं' चामीकररुचिरम् । कलधौतवत् कान्तं कलधौतकान्तं 'तत्पुरुषः'। पुनः किंविशिष्टं वपुः? 'कुन्दावदातचलचामरचारुशोभम्'। चलानि च तानि चामराणि च चलचामराणि 'कर्मधारयः', कुन्दवदवदातानि कुन्दावदातानि 'कर्मधारयः', कुन्दावदातानि च तानि चलचामराणि च कुन्दावदातचलचामराणि 'कर्मधारयः', कुन्दावदातचलचामरैश्चार्वी कुन्दावदातचलचामरचार्वी 'तत्पुरुषः', कुन्दावदातचलचामरचार्वी शोभा यस्य तद् 'बहुव्रीहिः'। कुन्दावदातानि–कुन्दवद् विशदानि चलचामराणि–चपलवालव्यजनानि तैः चारुशोभं–मनोज्ञशोभम् । दृष्टान्तमाह—इव–यथा सुरगिरेः, सुराणां गिरिः सुरगिरिस्तस्य 'तत्पुरुषः' मेरोः शातकौम्भं, शातकुम्भस्येदं शातकौम्भं–सौवर्णं तटं–शिखरं विभ्राजते । कथम्? 'उच्चैः' अतिशयेन । पुनः किंलक्षणं तटम्? 'उद्यच्छशाङ्कशुचिनिर्झरवारिधारम्'। निर्झराणां वारीणि निर्झरवारीणि 'तत्पुरुषः', निर्झरवारीणां धारा निर्झरवारिधाराः 'तत्पुरुषः', शशोऽङ्के यस्य स शशाङ्कः 'बहुव्रीहिः', उद्यन्नसौ शशाङ्कश्चोद्यच्छशाङ्कः 'कर्मधारयः', उद्यच्छशाङ्कवत् शुचयः उद्यच्छशाङ्कशुचयः

उद्यच्छशाङ्कशुचयो निर्झरवारिधारा यत्र तद् 'बहुव्रीहिः'। उद्यत्–उद्गच्छन् यः शशाङ्कः–चन्द्रस्तद्वत् शुचयो–धवला निर्झरवारिधारा–निर्झरजलधारा यत्र। अत्र मेरुतटसमं श्रीनाभेयशरीरं, निर्झरजलधारासमा चामरश्रेणिः। इति त्रिंशत्तमवृत्तार्थः॥ ३०॥

* * * *

( छत्रेत्यादि )।

व्याख्या—हे पवित्रचारित्र! तव–भवतः छत्रत्रयं, छत्राणां त्रयं छत्रत्रयं 'तत्पुरुषः' आतपवारणत्रितयं विभाति–चकास्ते। छत्रत्रयं किंलक्षणम्? 'शशाङ्ककान्तं' चन्द्रमनोहरम्। शशोऽङ्के यस्य स शशाङ्कः 'बहुव्रीहिः', शशाङ्कवत् कान्तं शशाङ्ककान्तं 'तत्पुरुषः'। छत्रत्रयं पुनः किंलक्षणम्? 'स्थितं' निविष्टम्। कथम्? 'उच्चैः' ऊर्ध्वं, मूर्ध्नि स्थितमित्यर्थः। छत्रत्रयं पुनः किंलक्षणम्? 'स्थगितभानुकरप्रतापम्' आच्छादितसूर्यकरानुभावम्। भानोः करा भानुकराः 'तत्पुरुषः', भानुकराणां प्रतापो भानुकरप्रतापः 'तत्पुरुषः', स्थगितो भानुकरप्रतापो येन तद् 'बहुव्रीहिः'। पुनः किंविशिष्टं छत्रत्रयम्? 'मुक्ताफलप्रकरजालविवृद्धशोभम्'। मुक्ताफलानां प्रकरो मुक्ताफलप्रकरः 'तत्पुरुषः', मुक्ताफलप्रकरस्य जालं मुक्ताफलप्रकरजालं 'तत्पुरुषः', मुक्ताफलप्रकरजालेन विवृद्धा मुक्ताफलप्रकरजालविवृद्धा 'तत्पुरुषः', मुक्ताफलप्रकरजालविवृद्धा शोभा यस्य तद् 'बहुव्रीहिः'। मुक्ताफलप्रकरस्य–मुक्ताफलसमूहस्य जालेन–रचनाविशेषेण विवृद्धा–वृद्धिं प्राप्ता शोभा–प्रभा यस्य तत्। छत्रत्रयं किं कुर्वत्? 'प्रख्यापयत्' निवेदयत्। किं कर्मतापन्नम्? 'परमेश्वरत्वं' प्रकृष्टप्रभुत्वम्। परमश्चासावीश्वरश्च परमेश्वरः 'कर्मधारयः', परमेश्वरस्य भावः परमेश्वरत्वं तत्। कस्य? 'त्रिजगतः' त्रिभुवनस्य। त्रयाणां जगतां समाहारस्त्रिजगत् तस्य 'द्विगुः'। इत्येकत्रिंशत्तमवृत्तार्थः॥ ३१॥

* * * *

अथातिशयद्वारेण जिनं स्तौति—( उन्निद्रेत्यादि )।

व्याख्या—हे 'जिनेन्द्र!' जिनानामिन्द्रो जिनेन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः'। तव–भवतः पादौ–चरणौ यत्र भूमौ पदानि–गमने अवस्थानरूपाणि धत्ते–बिभ्रते। 'डु धाञ् धारणपोषणयोः' (पा० धा० १०९२) इति धातुः। तत्र–धरापीठे विबुधा–देवाः पद्मानि–कमलानि परिकल्पयन्ति–निर्मापयन्तीत्यर्थः। कथंभूतौ पादौ? 'उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखशिखाभिरामौ' उन्निद्राणि–विकस्वराणि हेम्नः–सुवर्णस्य नवानि–नूतनानि नवसंख्याकानि वा पङ्कजानि–कमलानि तेषां पुञ्जः–समूहस्तस्य कान्तिः–द्युतिस्तया पर्युल्लसन्ती–समन्तादुल्लसन्ती या नखानां मयूखशिखाः–किरणचूलास्ताभिरभिरामौ–रुचिरौ। नवानि च तानि पङ्कजानि च नवपङ्कजानि 'कर्मधारयः', हेम्नो नवपङ्कजानि हेमनवपङ्कजानि 'तत्पुरुषः', उन्निद्राणि च तानि हेमनवपङ्कजानि च उन्निद्रहेमनवपङ्कजानि 'कर्मधारयः', उन्निद्रहेमनवपङ्कजानां पुञ्जः उन्निद्रहेमनवपङ्कजपुञ्जः 'तत्पुरुषः',

उन्निद्रहेमनवपङ्कजपुञ्जस्य कान्तिरुन्निद्रहेमनवपङ्कजपुञ्जकान्तिः 'तत्पुरुषः', नखानां मयूखा नखमयूखाः 'तत्पुरुषः', नखमयूखानां शिखा नखमयूखशिखाः 'तत्पुरुषः', पर्युल्लसन्त्यश्च ता नखमयूखशिखाश्च पर्युल्लसन्नखमयूखशिखाः 'कर्मधारयः', उन्निद्रहेमनवपङ्कजपुञ्जकान्त्या पर्युल्लसन्नखमयूखशिखाः उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखशिखाः 'तत्पुरुषः', उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखशिखाभिरभिरामौ उन्निद्रहेमनवपङ्कजपुञ्जकान्तिपर्युल्लसन्नखमयूखशिखाभिरामौ 'तत्पुरुषः' । इति द्वात्रिंशत्तमवृत्तार्थः ॥ ३२ ॥

* * * *

अथ संक्षिपति—( इत्थमित्यादि ) ।

व्याख्या—हे 'जिनेन्द्र!' जिनानामिन्द्रो जिनेन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः' । इत्थं–पूर्वोक्तप्रकारेण यथा धर्मोपदेशनविधौ–धर्मव्याख्याक्षणे, धर्मस्योपदेशनं धर्मोपदेशनं 'तत्पुरुषः', धर्मोपदेशनस्य विधिर्धर्मोपदेशनविधिस्तस्मिन् 'तत्पुरुषः', तव विभूतिः–अतिशयरूपा समृद्धिरभूत्–जाता तद्वत् अपरस्य–ब्रह्मादिसुरस्य नाभूत् । अत्र दृष्टान्तमाह–दिनकृतः–सूर्यस्य, दिनं करोतीति दिनकृत् तस्य 'तत्पुरुषः', प्रहतान्धकारा–ध्वस्तध्वान्ता, प्रहतमन्धकारं यया सा प्रहतान्धकारा 'बहुव्रीहिः', यादृग्–यादृशी प्रभा–द्युतिर्वर्तते 'विकाशिनोऽपि' विकाशोऽस्यास्तीति विकाशी तस्य उदितोद्योतस्यापि 'ग्रहगणस्य' ग्रहाणां गणो ग्रहगणस्तस्य 'तत्पुरुषः', भौमादेस्तादृक्–तादृशी प्रभा कुतः कस्माद् भवति? । अपि तु नैव । इति त्रयस्त्रिंशत्तमवृत्तार्थः ॥ ३३ ॥

* * * *

अथ गजभयहरं जिनं स्तौति—( श्च्योतन्मदेत्यादि ) ।

व्याख्या—हे गजपतिगते! भवदाश्रितानां–त्वच्चरणस्थितानां भवन्तमाश्रिता भवदाश्रितास्तेषां 'तत्पुरुषः', एवंविधानां नराणामिति शेषः, भयं–भीतिर्नो भवति–न स्यात् । किं कृत्वा? 'दृष्ट्वा' वीक्ष्य । कं कर्मतापन्नम्? । 'इभ' गजम् । किंभूतमिभम्? 'ऐरावताभं' महाकायत्वादैरावणसमम् । ऐरावतवदाभा यस्य स ऐरावताभस्तं 'बहुव्रीहिः' । पुनः किंलक्षणमिभम्? 'उद्धतम्' अविनीतम् । इभ किं कुर्वन्तम्? 'आपतन्तं' सन्मुखमागच्छन्तम् । पुनः किंलक्षणमिभम् ? 'श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादविवृद्धकोपं' गण्डौ नेत्रे करो मेढ्ं गुदमिति सप्तसु स्थानेषु श्च्योतता–क्षरता मदेनाविलाः–कलुषा विलोलाः–चञ्चलाः कपोलमूले–गण्डप्रदेशे मत्ताः–क्षीबाः सन्तो 'मतवाला' इति लोकप्रसिद्धिः(द्धाः?) ( भ्रमन्तः– ) भ्रमणशीला ये भ्रमरास्तेषां नादेन–कठोरध्वनिना विवृद्धः–पुष्टिं गतः कोपः–क्रोधो यस्य स तम् । श्च्योतंश्चासौ मदश्च श्च्योतन्मदः 'कर्मधारयः', श्च्योतन्मदेनाविलाः श्च्योतन्मदाविलाः 'तत्पुरुषः', कपोलयोर्मूले कपोलमूले 'तत्पुरुषः', कपोलमूलयोर्मत्ताः कपोलमूलमत्ताः 'तत्पुरुषः', भ्रमन्तश्च ते भ्रमराश्च भ्रम-

भ्रमराः 'कर्मधारयः', कपोलमूलमत्ताश्च ते भ्रमद्भ्रमराश्च कपोलमूलमत्तभ्रमद्भ्रमराः 'कर्मधारयः', विलोलाश्च ते कपोलमूलमत्तभ्रमद्भ्रमराश्च विलोलकपोलमूलमत्तभ्रमद्भ्रमराः 'कर्मधारयः', श्च्योतन्मदाविलाश्च ते विलोलकपोलमूलमत्तभ्रमद्भ्रमराश्च श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमराः 'कर्मधारयः', श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमराणां नादः श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादः 'तत्पुरुषः', श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादेन विवृद्धः श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादविवृद्धः 'तत्पुरुषः', श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादविवृद्धः कोपो यस्य सः श्च्योतन्मदाविलविलोलकपोलमूलमत्तभ्रमद्भ्रमरनादविवृद्धकोपस्तं 'बहुव्रीहिः'। इति चतुस्त्रिंशत्तमवृत्तार्थः ॥ ३४ ॥

* * * *

अथ सिंहभयहरं जिनं स्तौति—( भिन्नेभेत्यादि )।

व्याख्या—हे पुरुषसिंह ! 'हरिणाधिपोऽपि' हरिणानामधिपो हरिणाधिपः 'तत्पुरुषः' सिंहोऽपि ते–तव क्रमयुगाचलसंश्रितं–चरणयुग्मपर्वतकृतवासं, क्रमयोर्युगं क्रमयुगं 'तत्पुरुषः', क्रमयुगमेवाचलः क्रमयुगाचलः 'कर्मधारयः', क्रमयुगाचलं संश्रितः क्रमयुगाचलसंश्रितः 'तत्पुरुषः', एवंविधं पुरुषं नाक्रामति–न ग्रहणायोद्यतते, न हन्तुमुद्धावतीत्यर्थः। पुरुषं किंभूतम्? 'क्रमगतं' क्रमयोर्गतः क्रमगतः तं 'तत्पुरुषः', फालप्राप्तमित्यर्थः। हरिणाधिपः किंलक्षणः? 'बद्धक्रमः' बद्धः–कीलितः क्रमः–पराक्रमो यस्याथवा बद्धाः क्रमाः–पादविक्षेपरूपा येन स बद्धक्रमः 'बहुव्रीहिः'। हरिणाधिपः किंविशिष्टः? 'भिन्नेभकुम्भगलदुज्वलशोणिताक्तमुक्ताफलप्रकरभूषितभूमिभागः' भिन्नाभ्यां (–पाटिताभ्यां) हस्तिशिरःपिण्डाभ्यां गलता–पतता उज्वलेन–श्वेतवर्णेन शोणिताक्तेन–रुधिरखरण्टितेन मुक्ताफलप्रकरेण–मौक्तिकसमूहेन भूषितो–मण्डितो भूमिभागो येन सः। एतेन भद्रद्विपहन्तृत्वान्महाबलिष्ठत्वं सूचितम्। भिन्नश्चासाविभश्च भिन्नेभः 'कर्मधारयः', भिन्नेभस्य कुम्भौ भिन्नेभकुम्भौ 'तत्पुरुषः', उज्वलं च तत् शोणितं च उज्वलशोणितं 'कर्मधारयः', गलच्च तद् उज्वलशोणितं च गलदुज्वलशोणितं 'कर्मधारयः', भिन्नेभकुम्भाभ्यां गलदुज्वलशोणितं भिन्नेभकुम्भगलदुज्वलशोणितं 'तत्पुरुषः', भिन्नेभकुम्भगलदुज्वलशोणितेनाक्तः भिन्नेभकुम्भगलदुज्वलशोणिताक्तः 'तत्पुरुषः', मुक्ताफलानां प्रकरः मुक्ताफलप्रकरः 'तत्पुरुषः', भिन्नेभकुम्भगलदुज्वलशोणिताक्तश्चासौ मुक्ताफलप्रकरश्च भिन्नेभकुम्भगलदुज्वलशोणिताक्तमुक्ताफलप्रकरः 'कर्मधारयः', भिन्नेभकुम्भगलदुज्वलशोणिताक्तमुक्ताफलप्रकरेण भूषितो भिन्नेभकुम्भगलदुज्वलशोणिताक्तमुक्ताफलप्रकरभूषितः 'तत्पुरुषः', भूमेर्भागो भूमिभागः 'तत्पुरुषः', भिन्नेभकुम्भगलदुज्वलशोणिताक्तमुक्ताफलप्रकरभूषितो भूमिभागो येन स भिन्नेभकुम्भगलदुज्वलशोणिताक्तमुक्ताफलप्रकरभूषितभूमिभागः 'बहुव्रीहिः'। इति पञ्चत्रिंशत्तमवृत्तार्थः ॥ ३५ ॥

* * * *

अथ दावानलभयहरं जिनं स्तौति—( कल्पान्तेत्यादि )।

व्याख्या—हे कर्मक्षयैकक्षयकृशानो ! त्वन्नामकीर्तनजलं–त्वदभिधानस्तवननीरं, तव नाम त्वन्नाम 'तत्पुरुषः', त्वन्नाम्नः कीर्तनं त्वन्नामकीर्तनं 'तत्पुरुषः', त्वन्नामकीर्तनमेव जलं त्वन्नामकीर्तनजलं 'कर्मधारयः', 'अशेषं' न विद्यते शेषो यत्र सोऽशेषस्तं 'बहुव्रीहिः', विद्युत्पातादिभेदात् सकलं दावानलं–वनवह्निम्, दावश्चासावनलश्च दावानलस्तं 'कर्मधारयः' शमयति–विध्यापयति। किंभूतं दावानलम्? 'कल्पान्तकालपवनोद्धतवह्निकल्पं' कल्पान्तकालपवनेन–युगान्तसमयवातेन उद्धतः–उत्कटो यो वह्निः–अग्निस्तेन कल्पं–सदृशम्। कल्पस्यान्तः कल्पान्तः 'तत्पुरुषः', कल्पान्तश्चासौ कालश्च कल्पान्तकालः 'कर्मधारयः', कल्पान्तकालस्य पवनः कल्पान्तकालपवनः 'तत्पुरुषः', कल्पान्तकालपवनेनोद्धतः कल्पान्तकालपवनोद्धतः 'तत्पुरुषः', कल्पान्तकालपवनोद्धतश्चासौ वह्निश्च कल्पान्तकालपवनोद्धतवह्निः 'कर्मधारयः', कल्पान्तकालपवनोद्धतवह्निना कल्पः तं 'तत्पुरुषः'। पुनः किंभूतं दावानलम्? 'ज्वलितं' प्रदीप्तम्। पुनः किंविशिष्टम्? 'उज्ज्वलं' रक्तम्। पुनः किंलक्षणं दावानलम्? 'उत्स्फुलिङ्गम्' उल्लसद्वह्निकणम्। उद्–ऊर्ध्वं स्फुलिङ्गा यस्य स उत्स्फुलिङ्गस्तं 'बहुव्रीहिः'। दावानलं किं कुर्वन्तम्? 'सन्मुखमापतन्तम्' अभिमुखमागच्छन्तम्। इवोत्प्रेक्षते। विश्वं–जगत् जिघत्सुं–जिग्रसिषुमिव 'घस्(स्लृ) अदने' ( पा० धा० ७१५ ) इति धातुः, अशेषं–सामान्येन सर्वदिग्व्यापकं वा। त्वन्नामस्मरणं दावानलं स्फेटयति। इति षट्त्रिंशत्तमवृत्तार्थः॥ ३६॥

* * * *

अथ भुजङ्गमभयं दलयन्नाह—( रक्तेक्षणमित्यादि )।

व्याख्या—हे नागपतिसेव्य! यस्य पुंसः–पुरुषस्य हृदि–चित्ते त्वन्नामनागदमनी त्वन्नामैव नागदमनी–औषधिविशेषः जाङ्गुलीविद्या वा, तव नाम त्वन्नाम 'तत्पुरुषः', त्वन्नामैव नागदमनी त्वन्नामनागदमनी 'कर्मधारयः', वर्तते इति शेषः, स पुमान् 'निरस्तशङ्कः' निरस्ता शङ्का येन स 'बहुव्रीहिः' निर्भयः सन् 'क्रमयुगेन' क्रमयोर्युगं क्रमयुगं तेन 'तत्पुरुषः' निजचरणयुगलेन 'फणिनं' फणा विद्यन्ते यस्य स फणी तं 'बहुव्रीहिः' सर्पं आक्रामति–घर्षति रज्जुवत्। क्रमयुगग्रहणेन विशेषं द्योतयति। सामान्योऽपि सर्पः पादाहतः कुप्यति, दुष्टदन्दशूकस्य तु का वार्ता?। किंभूतं फणिनम्? 'रक्तेक्षणं' रक्ते ईक्षणे यस्य स तं 'बहुव्रीहिः', ताम्रनेत्रम्। ( पुनः ) किंभूतं फणिनम्? 'समदकोकिलकण्ठनीलम्'। कोकिलस्य कण्ठः कोकिलकण्ठः 'तत्पुरुषः', सह मदेन वर्तते यः स समदः 'बहुव्रीहिः', समदश्चासौ कोकिलकण्ठश्च समदकोकिलकण्ठः 'कर्मधारयः', समदश्चासौ कोकिलश्च समदकोकिलः 'कर्मधारयः', समदकोकिलस्य कण्ठः समदकोकिलकण्ठः 'तत्पुरुषः' इति वा, समदकोकिलकण्ठवन्नीलः समदकोकिलकण्ठनीलः 'तत्पुरुषः', मत्तपिकगलकालम्। फणिनं पुनः किंभूतम्? 'क्रोधोद्धतं' कोपोत्कटम्। क्रोधेनोद्धतः क्रोधोद्धतस्तं

'तत्पुरुषः' । पुनः किंलक्षणं फणिनम्? । 'उत्फणं' ऊर्ध्वीकृतस्फटम् । उद्-ऊर्ध्वं फणा यस्य स उत्फणस्तं 'बहुव्रीहिः' । फणिनं किं कुर्वन्तम्? 'आपतन्तं' सन्मुखं धावन्तम् । इति सप्तत्रिंशत्तमवृत्तार्थः ॥ ३७ ॥

* * * *

अथ रणभयं निरस्यन्नाह—( वल्गत्तुरङ्गेत्यादि ) ।

व्याख्या—हे देवाधिदेव! त्वत्कीर्तनात्—त्वन्नामग्रहणात्, तव कीर्तनं त्वत्कीर्तनं तस्मात् 'तत्पुरुषः' आजौ—सङ्ग्रामे बलवतामपि—शक्तानामपि, बलं विद्यते येषां ते बलवन्तस्तेषां 'बहुव्रीहिः', भूपतीनां—राज्ञां, भुवः पतयो भूपतयस्तेषां 'तत्पुरुषः' बलं—कटकमाशु—शीघ्रं भिदां—भेदमुपैति—प्रयाति, प्रलयं यातीत्यर्थः । बलं किंभूतम्? 'वल्गत्तुरङ्गगजगर्जितभीमनादं' वल्गतां—युद्ध्यमानानां तुरङ्गाणां गजानां च गर्जितानि तैर्भीमा—रौद्रा नादाः—सिंहनादा यत्र तत् । तुरङ्गाश्च गजाश्च तुरङ्गगजाः 'द्वन्द्वः', वल्गन्तश्च ते तुरङ्गगजाश्च वल्गत्तुरङ्गगजाः 'कर्मधारयः', वल्गत्तुरङ्गगजानां गर्जितानि वल्गत्तुरङ्गगजगर्जितानि 'तत्पुरुषः', अथवा वल्गन्तश्च ते तुरङ्गाश्च वल्गत्तुरङ्गाः 'कर्मधारयः', गजानां गर्जितानि गजगर्जितानि 'तत्पुरुषः', वल्गत्तुरङ्गाश्च गजगर्जितानि च वल्गत्तुरङ्गगजगर्जितानि 'द्वन्द्वः', भीमाश्च ते नादाश्च भीमनादाः 'कर्मधारयः', वल्गत्तुरङ्गगजगर्जितैर्भीमनादा यत्र तद् 'बहुव्रीहिः' । दृष्टान्तमाह—इव—यथा तमः—अन्धकारं भिदामुपैति—भेदं गच्छति । तमः किंलक्षणम्? 'उद्यद्दिवाकरमयूखशिखापविद्धं' उद्गच्छत्सुरकराग्रप्रेरितम् । दिवा करोतीति दिवाकरः 'तत्पुरुषः', दिवेति शब्दोऽव्ययमध्येऽस्ति, उद्यंश्चासौ दिवाकरश्चोद्यद्दिवाकरः 'कर्मधारयः', उद्यद्दिवाकरस्य मयूखाः उद्यद्दिवाकरमयूखाः 'तत्पुरुषः', उद्यद्दिवाकरमयूखानां शिखा उद्यद्दिवाकरमयूखशिखाः 'तत्पुरुषः', उद्यद्दिवाकरमयूखशिखाभिरपविद्धं उद्यद्दिवाकरमयूखशिखापविद्धं 'तत्पुरुषः' । इत्यष्टत्रिंशत्तमवृत्तार्थः ॥३८॥

* * * *

अत्रापि सङ्ग्रामभयं निरस्यन्नाह—( कुन्ताग्रेत्यादि ) ।

व्याख्या—हे जिनेश्वर! जना युद्धे—सङ्ग्रामे जयं लभन्ते—प्राप्नुवन्ति । जनाः किंलक्षणाः? 'त्वत्पादपङ्कजवनाश्रयिणः' त्वत्पादकमलकाननभाजः । तव पादौ त्वत्पादौ 'तत्पुरुषः', पङ्के जायन्ते स्मेति पङ्कजानि 'तत्पुरुषः', पङ्कजानां वनं पङ्कजवनं 'तत्पुरुषः', त्वत्पादावेव पङ्कजवनं त्वत्पादपङ्कजवनं 'कर्मधारयः', त्वत्पादपङ्कजवनमाश्रयन्त इत्येवंशीलास्त्वत्पादपङ्कजवनाश्रयिणः 'तत्पुरुषः' । पुनर्जनाः किंभूताः? 'विजितदुर्जयजेयपक्षाः' पराभूतोत्कटशत्रुगणाः । जेतुं योग्या जेयाः, जेयानां पक्षो जेयपक्षः 'तत्पुरुषः', दुःखेन जयो यस्य स दुर्जयः 'बहुव्रीहिः', दुर्जयश्चासौ जेयपक्षश्च दुर्जयजेयपक्षः 'कर्मधारयः',

विजितो दुर्जयजेयपक्षो यैस्ते विजितदुर्जयजेयपक्षाः 'बहुव्रीहिः' । युद्धे किंभूते? 'कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुरयोधभीमे' कुन्ताग्रैर्भिन्नानां–पाटितानां गजानां–हस्तिनां शोणितं–रुधिरं तदेव वारिवाहो–जलप्रवाहस्तस्मिन् वेगावतारात्–त्वरितप्रवेशात् तरणे–प्लवने आतुरैः–व्याकुलैर्योधैर्भीमं–भयानकं तस्मिन् । कुन्तानां अग्राणि कुन्ताग्राणि 'तत्पुरुषः', कुन्ताग्रैर्भिन्नाः कुन्ताग्रभिन्नाः 'तत्पुरुषः', कुन्ताग्रभिन्नाश्च ते गजाश्च कुन्ताग्रभिन्नगजाः 'कर्मधारयः', कुन्ताग्रभिन्नगजानां शोणितं कुन्ताग्रभिन्नगजशोणितं 'तत्पुरुषः', वारिणो वाहो वारिवाहः 'तत्पुरुषः', कुन्ताग्रभिन्नगजशोणितमेव वारिवाहः कुन्ताग्रभिन्नगजशोणितवारिवाहः 'कर्मधारयः', वेगेनावतारो वेगावतारः 'तत्पुरुषः', कुन्ताग्रभिन्नगजशोणितवारिवाहस्य वेगावतारः कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारः ('तत्पुरुषः'), तरणे आतुराः तरणातुराः 'तत्पुरुषः', कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारात् तरणातुराः कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुराः 'तत्पुरुषः', कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुराश्च ते योधाश्च कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुरयोधाः 'कर्मधारयः', कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुरयोधैर्भीमं कुन्ताग्रभिन्नगजशोणितवारिवाहवेगावतारतरणातुरयोधभीमं तस्मिन् 'तत्पुरुषः' । इत्येकोनचत्वारिंशत्तमवृत्तार्थः ॥ ३९ ॥

* * * *

अथ जलापदं प्रशमयन्नाह—( अम्भोनिधावित्यादि )।

व्याख्या—हे भवोदधिपोत! अम्भोनिधौ–समुद्रे अम्भो निधीयतेऽस्मिन्नित्यम्भोनिधिस्तस्मिन् 'तत्पुरुषः', सांयात्रिका जना भवतः स्मरणात् त्रासम्–आकस्मिकं भयं विहाय –त्यक्त्वा व्रजन्ति–क्रमेण स्वस्थानं यान्ति । जनाः किंलक्षणाः? 'रङ्गत्तरङ्गशिखरस्थितयानपात्राः' उच्छलत्कल्लोलाग्रवर्तिवाहनाः । रङ्गन्तश्च ते तरङ्गाश्च रङ्गत्तरङ्गाः 'कर्मधारयः', रङ्गत्तरङ्गाणां शिखराणि रङ्गत्तरङ्गशिखराणि 'तत्पुरुषः', रङ्गत्तरङ्गशिखरेषु स्थितानि रङ्गत्तरङ्गशिखरस्थितानि 'तत्पुरुषः', रङ्गत्तरङ्गशिखरस्थितानि यानपात्राणि येषां ते रङ्गत्तरङ्गशिखरस्थितयानपात्राः 'बहुव्रीहिः' । अम्भोनिधौ कथंभूते? 'क्षुभितभीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्नौ' क्षुभिताः–क्षोभं गताः भीषणानि–रौद्राणि नक्रचक्राणि–दुष्टजलजन्तुवृन्दानि पाठीनपीठौ–मत्स्यभेदौ च भयदो–भयोत्पादक उल्बणः–प्रकटो वाडवाग्निः–वडवानलश्च यत्र स तस्मिन् । नक्राणां चक्राणि नक्रचक्राणि 'तत्पुरुषः', भीषणानि च तानि नक्रचक्राणि च भीषणनक्रचक्राणि 'कर्मधारयः', पाठीनाश्च पीठाश्च पाठीनपीठाः 'द्वन्द्वः', वाडवश्चासावग्निश्च वाडवाग्निः 'कर्मधारयः', उल्बणश्चासौ वाडवाग्निश्च उल्बणवाडवाग्निः 'कर्मधारयः', भयं ददातीति भयदः 'तत्पुरुषः', भयदश्चासावुल्बणवाडवाग्निश्च भयदोल्बणवाडवाग्निः 'कर्मधारयः', भीषणनक्रचक्राणि च पाठीनपीठाश्च भयदोल्बणवाडवाग्निश्च भीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्नयः 'द्वन्द्वः', क्षुभिता

भीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्नयो यत्र स क्षुभितभीषणनक्रचक्रपाठीनपीठभयदोल्बणवाडवाग्निस्तस्मिन् 'कर्मधारयः'। इति चत्वारिंशत्तमवृत्तार्थः ॥ ४० ॥

* * * *

अथ रोगभयं भिन्दन्नाह—( उद्भूतेत्यादि )।

व्याख्या—हे कर्मव्याधिविध्वंसनधन्वन्तरे! मर्त्या–नरा उद्भूतभीषणजलोदरभारभुग्नाः–उत्पन्नरौद्रोदरवृद्धिभारवक्राः, भग्ना इति पाठे तु भग्ना–मोटिताः । जलेन युक्तमुदरं जलोदरं 'तत्पुरुषः', भीषणं च तज्जलोदरं च भीषणजलोदरं 'कर्मधारयः', उद्भूतं च तद् भीषणजलोदरं चोद्भूतभीषणजलोदरं 'कर्मधारयः', उद्भूतभीषणजलोदरस्य भार उद्भूतभीषणजलोदरभारः 'तत्पुरुषः', उद्भूतभीषणजलोदरभारेण भुग्नाः उद्भूतभीषणजलोदरभारभुग्नाः 'तत्पुरुषः', शोच्यादीनां[1] दशाम्–अवस्थाम् उपगताः–प्राप्ताः । 'च्युतजीविताशाः' गलितजीवितवाञ्छाः। जीवितस्याशा जीविताशाः 'तत्पुरुषः', च्युता जीविताशा येभ्यस्ते 'बहुव्रीहिः'। एवंभूताः सन्तो मर्त्याः त्वत्पादपङ्कजरजोऽमृतदिग्धदेहाः–भवच्चरणकमलरेणुसुधालिप्तवपुषः। तव पादौ त्वत्पादौ 'तत्पुरुषः', पङ्के जायेते इति पङ्कजे 'तत्पुरुषः', त्वत्पादावेव पङ्कजे त्वत्पादपङ्कजे 'कर्मधारयः', त्वत्पादपङ्कजयो रजः त्वत्पादपङ्कजरजः 'तत्पुरुषः', त्वत्पादपङ्कजरज एव अमृतं त्वत्पादपङ्कजरजोऽमृतं 'कर्मधारयः', त्वत्पादपङ्कजरजोऽमृतेन दिग्धं त्वत्पादपङ्कजरजोऽमृतदिग्धं 'तत्पुरुषः', त्वत्पादपङ्कजरजोऽमृतदिग्धं देहं येषां ते त्वत्पादपङ्कजरजोऽमृतदिग्धदेहाः 'बहुव्रीहिः' । मकरध्वजतुल्यरूपाः–काममूर्तयः। कमनीयकान्तय इत्यर्थः । मकरो ध्वजे यस्य स मकरध्वजः 'बहुव्रीहिः', मकरध्वजस्य तुल्यं मकरध्वजतुल्यं 'तत्पुरुषः', मकरध्वजतुल्यं रूपं येषां ते मकरध्वजतुल्यरूपाः 'बहुव्रीहिः'। 'भवन्ति' स्युः। यथा सुधापानात् सर्वरोगनाशः, तथा भगवत्पादपद्माश्रयणादपि सकलव्याधेरुपशमः। इत्येकचत्वारिंशत्तमवृत्तार्थः ॥ ४१ ॥

* * * *

अथ बन्धनभयं भिन्दन्नाह—( आपादेत्यादि )।

व्याख्या—हे चक्रेश्वरीचर्चितचरण! मनुजाः–मनुष्या भवन्ति । मनुजाः किंलक्षणाः? 'विगतबन्धभयाः' विध्वस्तबन्धनकभीतयः । बन्धस्य भयं बन्धभयं 'तत्पुरुषः', विगतं बन्धभयं येभ्यस्ते विगतबन्धभयाः 'बहुव्रीहिः' । कथम्? 'स्वयम्' आत्मनैव। कथम्? 'सद्यः' शीघ्रम्। मनुजाः किं कुर्वन्तः? 'स्मरन्तः' ध्यायन्तः। कं कर्मतापन्नम्? 'त्वन्नाममन्त्रं 'ॐ श्रीऋषभाय नमः' इति पदम्। तव नाम त्वन्नाम 'तत्पुरुषः', त्वन्नामैव

---

[1] 'शोच्यां' इति प्रतिभाति।

मन्त्रस्त्वन्नाममन्त्रस्तं 'कर्मधारयः'। कथम्? 'अनिशं' सदा। मनुजाः कथंभूता अपि? 'उरुशृङ्खलवेष्टिताङ्गाः' गुरुलोहदामव्यासवपुषः। उरवश्च ते शृङ्खलाश्च उरुशृङ्खलाः 'कर्मधारयः', उरुशृङ्खलैर्वेष्टितानि उरुशृङ्खलवेष्टितानि 'तत्पुरुषः', उरुशृङ्खलवेष्टितानि अङ्गानि येषां ते उरुशृङ्खलवेष्टिताङ्गाः 'बहुव्रीहिः'। कथम्? 'आपादकण्ठं' पादगलं यावत्। पादौ च कण्ठश्च पादकण्ठं 'समाहारद्वन्द्वः'। 'प्राणितूर्यसेनाङ्गानां द्वन्द्वैकवद्भावः' इति। पादकण्ठं मर्यादीकृत्य आपादकण्ठम् 'अव्ययीभावः'। मनुजाः पुनः किंभूताः? 'बृहन्निगडकोटिनिघृष्टजङ्घाः' विकटान्दुकाग्रपीडितजङ्घाः। बृहच्चासौ निगडश्च बृहन्निगडः 'कर्मधारयः', बृहन्निगडस्य कोटिर्बृहन्निगडकोटिः 'तत्पुरुषः', बृहन्निगडकोट्या निघृष्टे बृहन्निगडकोटिनिघृष्टे 'तत्पुरुषः', बृहन्निगडकोटिनिघृष्टे जङ्घे येषां ते बृहन्निगडकोटिनिघृष्टजङ्घाः 'बहुव्रीहिः'। कथम्? 'गाढं' निबिडम्। इति द्विचत्वारिंशत्तमवृत्तार्थः ॥ ४२ ॥

* * * *

अथाष्टभयनाशेन स्तवं सङ्क्षिपन्नाह—( मत्तेत्यादि )।

व्याख्या—हे अमेयमहिमन्! तस्य–प्राणिनो भयं–भीतिराशु–तत्कालं नाशं–क्षयम् उपयाति–गच्छति इवोत्प्रेक्षते भिया–भयेन, यो मतिमान्–प्राज्ञः, मतिरस्यास्तीति मतिमान् तावकं–भवदीयं तवायं तावकस्तं इमं–प्रयुक्तस्वरूपं स्तवं–स्तोत्रमधीते–पठति। भयं किंविशिष्टम्? 'मत्तद्विपेन्द्र १ मृगराज २ दवानला ३ ऽहि ४ सङ्ग्राम ५ वारिधि ६ महोदर ७ बन्धनो ८ त्थम्'। द्विपानामिन्द्रो द्विपेन्द्रः 'तत्पुरुषः', मत्तश्चासौ द्विपेन्द्रश्च मत्तद्विपेन्द्रः ('कर्मधारयः'), मृगाणा राजा मृगराजः 'तत्पुरुषः', दवश्चासावनलश्च दवानलः 'कर्मधारयः', वारीणि धीयन्तेऽस्मिन्निति वारिधिः, महच्च तदुदरं च महोदरं 'कर्मधारयः', मत्तद्विपेन्द्रश्च मृगराजश्च दवानलश्च अहिश्च सङ्ग्रामश्च वारिधिश्च महोदरं च बन्धनं च मत्तद्विपेन्द्रमृगराजदवानलाहिसङ्ग्रामवारिधिमहोदरबन्धनानि 'द्वन्द्वः', मत्तद्विपेन्द्रमृगराजदवानलाहिसङ्ग्रामवारिधिमहोदरबन्धनेभ्यः उत्थं मत्तद्विपेन्द्रमृगराजदवानलाहिसङ्ग्रामवारिधिमहोदरबन्धनोत्थं 'तत्पुरुषः'। गजेन्द्र १ सिंह २ दावाग्नि ३ सर्प ४ रण ५ समुद्र ६ जलोदर ७ बन्धनो ८ त्पन्नम्। इति त्रिचत्वारिंशत्तमवृत्तार्थः ॥ ४३ ॥

* * * *

अथ स्तवप्रभावसर्वस्वं कविराह—( स्तोत्रेत्यादि )।

व्याख्या—हे 'जिनेन्द्र'! केवलिपते!। जिनानामिन्द्रो जिनेन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः'। इह–जगति यो जनो–लोकोऽजस्रम्–अनवरतं तव–भवतः स्तोत्रस्रजं–स्तवनमालां, स्तोत्रमेव स्रक् स्तोत्रस्रक् तां 'कर्मधारयः', बहुपदगर्भितत्वात् स्तोत्रस्य मालोपमानं, कण्ठ-

१ 'द्वन्द्व एकवद्भावः' इत्यपि पाठ.।

गतां–निजकण्ठलुण्ठितां धत्ते–करोति पठतीत्यर्थः । स्तोत्रस्रजं किंभूताम्? 'निबद्धां' रचिताम् । कैः? 'गुणैः' पूर्वोक्तज्ञानदर्शनचारित्ररूपैः दवरकैः । केन? 'मया' श्रीमानतुङ्गसूरिणा । कया? 'भक्त्या' भावपूर्वम् । स्तोत्रस्रजं किंलक्षणाम्? 'रुचिरवर्णविचित्रपुष्पां' रुचिरा–मनोहरा वर्णा–अकाराद्या द्विपञ्चाशदेव विशेषणाद् भूतानि(?) स्पृहणीयानि विचित्राणि यमकश्लेषानुप्रासद्व्यर्थादीनि तान्येव च पुष्पाणि यस्यां सा रुचिरवर्णविचित्रपुष्पा (ताम्) । रुचिराश्च ते वर्णाश्च रुचिरवर्णाः 'कर्मधारयः', रुचिरवर्णाश्च विचित्राणि च रुचिरवर्णविचित्राणि 'द्वन्द्वः', रुचिरवर्णविचित्राण्येव पुष्पाणि यस्यां सा रुचिरवर्णविचित्रपुष्पा तां 'बहुव्रीहिः'; अथवा रुचिरवर्णा एव विचित्राणि–पञ्चवर्णतया मनोज्ञानि पुष्पाणि यस्यां सा (ताम्), कुसुमानां पञ्चवर्णत्वं प्रसिद्धमेव, अतो विचित्रेतिपदं पुष्पस्यैव विशेषणम् । तं–पुरुषं लक्ष्मीः–राज्यस्वर्गापवर्गसत्का श्रीः अवशा–तद्गतचित्ता । पुरुषं किंलक्षणम्? 'मानतुङ्गं' पूजोन्नतम् । मानेन तुङ्गो मानतुङ्गस्तं मानतुङ्गं 'तत्पुरुषः' । मानतुङ्गमिति विशेषणं कथयता स्तोत्रकर्त्रा कविना मानतुङ्ग इति स्वनाम बन्धननिगडाद्युपद्रवनाशो राजप्रसादश्चासूचि । 'समुपैति' समन्तात् पार्श्वमायातीति मङ्गलम् ॥ ४४ ॥

॥ इति भक्तामरस्तोत्रवृत्तिः समाप्ता ॥

श्रीमत्तपगणगगना–ङ्गणदिनमणिहीरविजयसूरीणाम् ।<br>
शिष्याणुना विरचिता, वृत्तिरियं कनककुशलेन ॥ १ ॥<br>
नयनशररसेन्दु( १६५२ )मिते, वर्षे वैराटनाम्नि वरनगरे ।<br>
बालजनविबोधार्थं, विजयदशम्यां हि स(सा) समास(प्ता?) ॥ २ ॥–युगलम्

श्लोकानां षट्शती षोडशोत्तरा समजायत प्रत्यक्षरं गणनया वृत्तौ संख्या निवेदिताऽत्र, अङ्कतोऽपि ६१६, सूत्रसहितवृत्तेर्ग्रन्थाग्रं ६९६ समाप्तम् ॥

सकलपण्डितशिरोमणिपण्डितश्रीश्रीकेसरसागरगणिशिष्यगणिअनन्तसागरलिपीकृतं संवत् १७६३ वर्षे मृगशिरवदि ४ [दि]दिने श्रीआयुपुरनगरे श्रीशान्तिजिनप्रसादात् ॥ श्रीरस्तु ॥ कल्याणमस्तु ॥ शुभं भवतु ॥ छ ॥ छ ॥

कल्याणमन्दिरस्तोत्र. श्लोक १-२



आचार्यश्रीसिद्धसेनदिवाकरकृतं

# ॥ कल्याणमन्दिरस्तोत्रम् ॥

( श्रीकनककुशलगणिगुम्फितवृत्ति-श्रीमाणिक्यचन्द्रमुनीशसूत्रितविवृतिविभूषितम् )

[1]श्रीऋषभनाथाय नमः ।

कल्याणमन्दिरमुदारमवद्यभेदि
भीताभयप्रदमनिन्दितमङ्घ्रिपद्मम् ।
संसारसागरनिमज्जदशेषजन्तु-
पोतायमानमभिनम्य जिनेश्वरस्य ॥ १ ॥—वसन्ततिलका
यस्य स्वयं सुरगुरुर्गरिमाम्बुराशेः
स्तोत्रं सुविस्तृतमतिर्न विभुर्विधातुम् ।
तीर्थेश्वरस्य 'कमठ'स्मयधूमकेतो-
स्तस्याहमेष किल संस्तवनं करिष्ये ॥ २ ॥—युग्मम्

श्रीकनककुशलगणिगुम्फिता वृत्तिः—

प्रणम्य पार्श्वमिष्टार्थ-सार्थपूर्तिसुरद्रुमम् ।
'कल्याणमन्दिर'स्तोत्रं, विवृणोमि यथामति ॥ १ ॥

कल्याण०, यस्य स्वयं० इत्यनयोर्युग्मरूपयोर्व्याख्या—तस्य संस्तवनं एषोऽहं करिष्ये इति क्रियापदसण्टङ्कः । कर्तर्युक्तिः । 'संस्तवनं' स्तुतिम् । 'एषः' प्रत्यक्षः । अहमिति सिद्धसेन-दिवाकरः । 'करिष्ये' विधास्ये । कस्य? 'तस्य' । तस्य किंलक्षणस्य? 'तीर्थेश्वरस्य' तीर्थ—चतुर्वर्णः सङ्घः प्रथमगणधरो वा तस्येश्वरो—नायकः, तद्विधानात्, तीर्थस्येश्वरः तीर्थेश्वर-स्तस्य 'तत्पुरुषः' । पुनः किंलक्षणस्य तस्य? । 'कमठस्मयधूमकेतोः' कमठस्य यः स्मयः—अहङ्कारस्तस्मिन् धूमकेतुरिव धूमकेतुः । अत्र धूमकेतुरग्निरुत्पातो वा ज्ञातव्यः, "धूम-केतुर्वह्न्युत्पातौ" इत्यनेकार्थ( श्लो० १४८३ )वचनात्[2] । कमठस्य स्मयः कमठस्मयः 'तत्पु-रुषः', कमठस्मये धूमकेतुः कमठस्मयधूमकेतुः तस्य 'तत्पुरुषः' । 'समर्थविशेषणाद् विशेष्यं लभ्यते' इति न्यायात् श्रीपार्श्वनाथस्येत्यर्थः । किं कृत्वा? 'अभिनम्य' प्रणम्य ।

१ 'श्रीसिद्धचक्राय नमः' इति ख-पाठः । २ अयं कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिरचितोऽनेकार्थसंग्रहः ।

अभिनमनं पूर्वमभिनम्य 'तत्पुरुषः'(?)। किं कर्मतापन्नम्? 'अंह्रिपद्मं' पदकमलम्। अंह्री एव पद्मं अंह्रिपद्मं तत् 'कर्मधारयः'। पद्मशब्दः पुंनपुंसकः, पुनर्द्वितीयाज्ञापनाय तदिति। कस्य? 'जिनेश्वरस्य' रागादिशत्रूणां जेतृत्वाज्जिनाः–सामान्यकेवलिनस्तेषां ईश्वरः–प्रभुः, जिनानामीश्वरो जिनेश्वरस्तस्य जिने० 'तत्पुरुषः'। अंह्रिपद्मं किंलक्षणम्? 'कल्याणमन्दिरं' श्रेयोगृहम्। कल्याणानां मन्दिरं कल्याणमन्दिरं तत् 'तत्पुरुषः'। पुनः किंलक्षणमंह्रिपद्मम्? 'उदारं' भव्यानां मनोऽभीष्टदानाद् दातारं प्रशस्तं वा। पुनः किंलक्षणमंह्रिपद्मम्? 'अवद्यभेदि' अवद्यं–पापं भिनत्तीत्येवंशीलं अवद्यभेदि तत् 'तत्पुरुषः'। पुनः किंलक्षणमंह्रिपद्मम्? 'भीताभयप्रदं' भीतानां–जन्मजरामरणादिदुःखबहुलसंसारशत्रोर्भयं प्राप्तानां भव्यानां षड्जीवनिकायरक्षणपालनोपदेशदानादभयं प्रददातीत्येवंशीलं अभयप्रदं 'तत्पुरुषः', भीतानामभयप्रदं भीता० 'तत्पुरुषः'। पुनः किंलक्षणमंह्रिपद्मम्? 'अनिन्दितं' अणुमात्रस्यापि दोषस्याभावादनिन्दनीयं, सर्वदोषरहितमित्यर्थः। न निन्दितं अनिन्दितं 'तत्पुरुषः'। अंह्रिपद्मं किं क्रियमाणम्? 'संसारसागरनिमज्जदशेषजन्तुपोतायमानं' संसारसागरे–भवसमुद्रे निमज्जतां–ब्रुडतां अशेषाणां–सर्वेषां जन्तूनां समुद्धरणात् पोतायमानं–पोतवदाचरत् पोतायमानं, नौतुल्यमित्यर्थः। अशेषाश्च ते जन्तवश्च अशेषजन्तवः 'कर्मधारयः', निमज्जन्तश्च ते अशेषजन्तवश्च निमज्जदशेषजन्तवः 'कर्मधारयः', संसार एव सागरः संसारसागरः 'कर्मधारयः', संसारसागरे निमज्जदशेषजन्तवः संसारसागरनिमज्जदशेषजन्तवः 'तत्पुरुषः', पोत इवाचरतीति पोतायते, पोतायत इति पोतायमानं, संसारसागरनिमज्जदशेषजन्तुषु संसारसागरनिमज्जदशेषजन्तूनां वा पोतायमानं ससारसागरनिमज्जदशेषजन्तुपोतायमानं 'तत्पुरुषः'[1]। एवंविधमंह्रिपद्ममभिनम्य तस्य तीर्थेश्वरस्य संस्तवनं करिष्ये। यत्तदोर्नित्याभिसम्बन्धात् तस्य कस्य? यस्य स्तोत्रं विधातुं सुरगुरुर्न विभुः, भवेदिति शेषः। कर्त्रुक्तिः। 'सुरगुरुः' बृहस्पतिः। सुराणां गुरुः सुरगुरुः 'तत्पुरुषः'। किंविशिष्टः सुरगुरुः? 'सुविस्तृतमतिरपि' सुविपुलबुद्धिरपि। सुविस्तृता मतिर्यस्य स सुविस्तृतमतिः 'बहुव्रीहिः'। किंभूतः? 'विभुः' क्षमः। कथम्?' न'। असमर्थ इत्यर्थः। किं कर्तुम्? 'विधातुं' निर्मातुम्। किं कर्मतापन्नम्? 'स्तोत्रं' स्तवनम्। कथम्? 'स्वयं' आत्मना। कस्य? 'यस्य' तीर्थेश्वरस्य। यस्य किंलक्षणस्य? 'गरिमाम्बुराशेः' गुरुत्वसमुद्रस्य। गुरोर्भावो गरिमा, गरिम्णः अम्बुराशिः गरिमाम्बुराशिस्तस्य गरिमाम्बुराशेः 'तत्पुरुषः'। किलेत्यलीके। अहं तस्य संस्तवनं करिष्ये। किलशब्दोऽत्रालीकार्थे। यस्य स्तोत्रं कर्तुं सुरगुरुरपि न क्षमः, तस्याहमेष मन्दमतिः संस्तवनं करिष्ये इत्येतत् सर्वथाऽसत्यमेवेत्यर्थः। इति प्रथमद्वितीयवृत्तार्थः[3]॥ १–२॥

श्रीमाणिक्यचन्द्रमुनीशविरचिता विवृतिः—

'रैवता'द्रिशिरश्चूला–मणिं नेमिजिनोत्तमम्।
प्रणम्य परया भक्त्या, स्मृत्वा वागधिदेवताम्॥ १॥–अनु०

१ 'तत्पुरुष.' इति क–पाठः। २ 'मन्दिर' इति क–पाठः। ३ 'प्रथमवृत्तद्वयार्थः' इति ख–पाठः।

'कल्याणमन्दिर'स्तोत्र-विवृतिं शिशुबोधिनीम् ।
कुर्वे वाक्योक्तिसंयुक्तां, समासकृतविस्तराम् ॥ २ ॥-युग्मम्

कल्याणेति (यस्येति) । अहं एषः-सिद्धसेनः कविस्तस्य तीर्थेश्वरस्य किल इति सत्ये संस्तवनं करिष्ये । 'करिष्ये' इति क्रियापदम् । कः कर्ता? 'अहम्' । अहं कः? 'एषः' प्रत्यक्षतया दृश्यमानः । कस्य? 'तीर्थेश्वरस्य' । तीर्थेश्वरस्य कस्य? 'तस्य' । कथम्भूतस्य? 'कमठस्मयधूमकेतोः' कमठस्य स्मयः-अहङ्कारस्तत्र धूमकेतुः-अग्निरिव अथवा धूमकेतुरष्टाशीतिग्रहाणां मध्ये ग्रहोऽस्ति स उदितस्तस्यां दिशि सर्वनाशकरो भवति तेन कमठस्मये धूमकेतुग्रह इव, स ग्रहः पुच्छेन आकाशे लक्ष्यते कदाचिदुदेत्यपि, तस्य कमठस्मयधूमकेतोः । अनेन विशेषणेन श्रीपार्श्वनाथस्यैव स्तोत्रं करिष्ये इत्यागतम्, 'समर्थविशेषणाद् विशेष्यं लभ्यते' इति न्यायात् । किं कृत्वा? 'अभिनम्य' । किं कर्मतापन्नम्? 'अंह्रिपद्मं' चरणकमलम् । कस्य? 'जिनेश्वरस्य' तीर्थङ्करस्य । किम्भूतम्? 'कल्याणमन्दिरं' मङ्गलनिलयम् । पुनः किम्भूतम्? 'उदारं' स्फारम् । पुनः किम्भूतम्? 'अवद्यभेदि' अवद्यं-पापं भिनत्तीत्येवंशीलं अवद्यभेदि । भिद्धातोरिन्प्रत्यये अम्लोपे नलोपे च सिद्धम् । पुनः किम्भूतम्? 'भीताभयप्रदं' भीतानां-भयत्रस्तानां प्राणिनाम् अभयं प्रददातीति भीताभयप्रदम् । प्रोपसर्गात् दाधातोर्डप्रत्यये आलोपे च संहितायां अकारलोपे अनुस्वारे कृते भीताभयप्रदमिति सिद्धम् । पुनः किम्भूतम्? 'अनिन्दितं' न निन्दितं अनिन्दितम्, अगर्हितमित्यर्थः । पुनः किम्भूतम्? 'समारसागरनिमज्जदशेषजन्तुपोतायमानं' ससार एव सागरस्तत्र निमज्जन्तो-ब्रुडन्तोऽशेषाः-समस्ता ये जन्तवः-प्राणिनस्तेषां पोत इवाचरत्-बोहित्थमिवाचरत् । यत्तदोर्नित्याभिसम्बन्धात् तस्य कस्य? यस्य सुरगुरुः-बृहस्पतिः स्वयं स्तोत्रं विधातुं-कर्तुं न विभुः-न समर्थो वर्तते । 'वर्तते' इति क्रियापदम् । कः कर्ता? 'सुरगुरुः' । किंलक्षणः? 'विभुः' । कथम्? 'न' । किं कर्तुम्? 'विधातुम्' । किं कर्मतापन्नम्? 'स्तोत्रम्' । कथम्? 'स्वयम्' आत्मना । कस्य? 'यस्य' । यस्य कथम्भूतस्य? 'गरिमाम्बुराशेः' गुरोर्भावो गरिमा, गरिम्णः-महत्त्वस्य अम्बुराशिरिव गरिमाम्बुराशिस्तस्य । सुरगुरुः किंलक्षणः? 'सुविस्तृतमतिः' सुविस्तृता मतिर्यस्य सः ॥

कल्याणानां मन्दिरं कल्याणमन्दिरं तत् कल्याणमन्दिरम् । (अवद्यानां भेदि अवद्य० तत् अवद्य०) । अभयं प्रददातीत्यभयप्रदं, भीतानां अभयप्रदं भीताभयप्रदं तत् । न निन्दितं अनिन्दितं तत् । अंह्रिरेव पद्मं अंह्रिपद्मं तत् । संसार एव सागरः संसारसागरः, अशेषाश्च ते जन्तवश्च अशेषजन्तवः, निमज्जन्तश्च ते अशेषजन्तवः निमज्जदशेषजन्तवः, संसारसागरे निमज्जदशेषजन्तवः संसारसागरनिमज्जदशेषजन्तवः, संसारसागरनिमज्जदशेषजन्तूनां पोतायमानं संसारसागरनिमज्जदशेषजन्तुपोतायमानम् । पोत इवाचरतीति पोतायते, पोतायते इति पोतायमानं, पोतशब्दात् पर आचारार्थे क्यङ्प्रत्ययः । 'दीर्घश्च्वियङ्यक्क्येषु च' (सिद्धहेमे अ० ४, पा० ३, सू० १०८) इति सूत्रेण दीर्घीकृते

आनश्प्रत्यये मागमे च अमोऽकारलोपे अनु(स्वारे कृते) पोतायमानमिति सिद्धम्। अभिपूर्वो णम्धातुस्तदग्रे क्त्वाप्रत्ययः 'पाठे धात्वादेर्णो नः' (सिद्ध० २-३-९७) इति णस्य नकारस्तदनु 'अनञः क्त्वो यप्' (सिद्ध० ३-२-१५४) इति सूत्रेण यबादेशः, 'अव्ययस्य' (सिद्ध० ३-२-७) इति सूत्रेण सिलोपे अभिनम्येति सिद्धम्। सुराणां गुरुः सुरगुरुः। विपूर्वो भूधातुः, विभवतीति विभुः, डुप्रत्यये ऊकारलोपे सौ च विभुः इति सिद्धम्। विधानाय विधातुं विपूर्वो धाधातुः, तुम्प्रत्ययः, 'अव्ययस्य' सिलोपः विधातुमिति सिद्धम्। तीर्थस्य ईश्वरः तीर्थेश्वरः तस्य। 'डुकृंग् करणे' (सिद्ध० धातुपाठे) कृधातुः 'भविष्यन्ती स्ये' (सिद्ध० ३-३-१५) इटि गुणे षत्वे (च) करिष्ये इति सिद्धम्। आत्मगामिफलत्वात् इत्यत्र आत्मनेपदम्। ननु यदि सुरगुरुः स्तोत्रं विधातुं न विभुस्तदाऽहं करिष्ये इति कथं घटते? तत्रोच्यते-सामस्त्येन प्रभोर्गुणान् सुरगुरुरपि स्तोतुं न समर्थः स्यात्, तेन भक्तिप्रेरितमना एकांशेन गुणस्तवनं करिष्ये इति भावः। अत्र विषये अन्योऽपि भावः कविभिः स्वयमूह्यः, यतो नानामतयः कवयः। इति काव्ययुग्मार्थः॥ १-२॥

*The poet declares his intention of praising Lord Pārs'vanātha —*

Having bowed to the lotus-feet of that *Jines'vara* (*Tīrthankara*, Lord *Pārs'vanātha*), who is the ocean of greatness, whom (even) the preceptor of gods (*Bṛhaspati*) himself in spite of his supremely wide knowledge is unable to praise and who is a comet (or fire) in destroying the arrogance of *Kamaṭha*—the feet which are the temple of bliss, which are sublime, which can destroy sins and give safety to the terrified, which are fault-less and are (i e, serve the purpose of) a life-boat for all beings sinking in the ocean of existence, I will indeed compose a hymn (in honour) of Him (1-2)



अथ द्वितीयवृत्तप्रान्तपादगतकिलशब्दोदितालीकमेव विशेषत उद्भावयति—

सामान्यतोऽपि तव वर्णयितुं स्वरूप-
मस्मादृशाः कथमधीश ! भवन्त्यधीशाः ?।
धृष्टोऽपि कौशिकशिशुर्यदिवा दिवाऽन्धो
रूपं प्ररूपयति किं किल घर्मरश्मेः ? ॥ ३ ॥

क० वृ०—हे 'अधीश'! अस्मादृशास्तव स्वरूपं सामान्यतोऽपि वर्णयितुं कथमधीशा भवन्ति? अपि तु न भवन्ति। कर्त्रुक्तिः। अधिकश्चासावीशश्चाधीशस्तस्य सम्बोधनं हे अधीश! 'कर्मधारयः'। हे देवाधिदेव! अस्मादृशा-अस्मद्विधा वयमिव दृश्यन्ते इत्यस्मादृशा मन्दमतयो जनास्तवेति भवतः स्वरूपं-लक्षणं सामान्यतोऽपि-निर्विशेषमपि वर्णयितुं—प्रतिपादयितुं कथमधीशाः-समर्था भवन्ति?। अत्र दृष्टान्तमाह—यदिवेति दृष्टान्तोपद-

र्शने। किल इति प्रसिद्धवार्तायाम्। कौशिकशिशुः घर्मरश्मेः रूपं किं प्ररूपयति?। कर्त्रुक्तिः। 'कौशिकशिशुः' उलूकबालकः। कौशिकस्य शिशुः कौशिकशिशुः 'तत्पुरुषः'। 'घर्मरश्मेः' सूर्यस्य। घर्मा–उष्णा रश्मयो यस्य स घर्मरश्मिस्तस्य 'बहुव्रीहिः'। 'रूपं' भास्वरबिम्बस्वरूपम्। किं 'प्ररूपयति'? यथावस्थितं कथयति?, अपि तु नैव सूर्यस्य रूपं वक्तुं समर्थः। कथम्भूतोऽपि कौशिकशिशुः? 'धृष्टोऽपि' दृढहृदयतया प्रगल्भोऽपि। कौशिकशिशुः कथम्भूतः सन्? 'दिवाऽन्धः' सन् दिवसे चक्षुर्विकलः सन्। दिवाशब्दो दिवसवाचकोऽव्ययमध्ये पठितोऽस्ति। इति तृतीयवृत्तार्थः॥ ३॥

मा० वि०—सामान्यतोऽपीति। हे अधीश!–हे स्वामिन्! अस्मादृशा मन्दमतयो जनाः सामान्यतोऽपि–सामान्यप्रकारतोऽपि तव स्वरूपं वर्णयितुं कथं अधीशाः–समर्था भवन्तीत्यन्वयः। 'भवन्ति' इति क्रियापदम्। के कर्तारः? 'जनाः'। जनाः के? 'अस्मादृशाः' छद्मस्था अतिशायिज्ञानरहिताः। 'समर्थविशेषणाद् विशेष्यं लभ्यते' इति जनाः इति पदाध्याहारः। एवमन्यत्राप्यध्याहारोऽविलोक्यमानपदानामप्यूह्यः। किं कर्तुम्? 'वर्णयितुं' वर्णनाविषयीकर्तुम्। किं कर्मतापन्नम्? 'स्वरूपम्'। कस्य? 'तव'। कुतः? 'सामान्यतः'। कथम्? 'अपि'। उक्तमर्थं दृष्टान्तेन दृढयति। यदिवेति दृष्टान्तोपदर्शने। धृष्टोऽपि–प्रगल्भोऽपि कौशिकशिशुः–घूकबालः किल इति सत्ये घर्मरश्मेः–सूर्यस्य किं रूपं प्ररूपयति?–निवेदयति? अपि तु न प्ररूपयति। 'प्ररूपयति' इति क्रियापदम्। कः कर्ता? 'कौशिकशिशुः'। किं कर्मतापन्नम्? 'रूपम्'। कस्य? 'घर्मरश्मेः'। कथम्? 'किम्'। कथम्? 'यदिवा'। किंलक्षणः कौशिकशिशुः? 'धृष्टः'। कथम्? 'अपि'। पुनः किम्भूतः? 'दिवाऽन्धः' दिवसान्धः॥

सामान्यादिति सामान्यतः पञ्चम्यर्थे तस्प्रत्ययः [पञ्चमीङसिलोपस्त्वव्ययत्वात्]। युष्मत्शब्दः षष्ठी ङस् 'तव मम ङसा' (सिद्ध० २–१–१५) इति ङसा सह तवादेशः। वर्णनाय वर्णयितुं 'वर्ण' इति चुरादिधातुः। 'चुरादिभ्यो णिच्' (सिद्ध० ३–४–१७), तुम्प्रत्ययः इट्प्रत्ययः 'गुणोऽरेदोत्' (सिद्ध० ३–३–२), 'एदैतोऽयाय्' (सिद्ध० १–२–२३)। [स्वरूपं–लक्षणम्] अस्मादृशाः–अस्मत्सदृशा अस्मद्शब्दादग्रे दृश्धातुस्तदग्रे टक्–प्रत्ययः, 'आ द्वेरः' (सिद्ध २–१–४१) इति दकारस्य अकारः, 'लुगस्यादेत्यपदे' (सिद्ध० २–१–११३) स्मस्याकारलोपः अकारे संहिते 'अन्यत्यदादेराः' (सिद्ध० ३–२–१५२) इति सूत्रेण स्मस्याकारस्य चाकारः अस्मादृश इति सिद्धं, तदनु जसि अस्मादृशा इति जातम्। केन प्रकारेण कथं, किम्शब्दात् थम्प्रत्ययः 'किमः कस्तसादौ च' (सिद्ध० २–१–४०) इति सूत्रेण किम्शब्दस्य क इत्यादेशः, 'अव्ययस्य' (सिद्ध० ३–२–७) सिलोपः कथमिति सिद्धम्। अधिउपसर्गोऽधिकार्थः अधि ईशः अधीशस्तस्य सम्बोधनं हे अधीश!। भूधातुः 'वर्तमाना०' (सिद्ध० ३–३–६) बहुवचनं अन्ति, 'कर्तर्यनद्भ्यः शव्' (सिद्ध० ३–४–७१), 'गुणः०' अवादेशः, 'लुगस्यादेत्यपदे' अलोपः भवन्तीति सिद्धम्।

घृष्धातुः क्तप्रत्ययः 'तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ' ( सिद्ध० १-३-६० ) इति सूत्रेण तस्य टः प्रथमा सौ धृष्ट इति सिद्धम् । कौशिकस्य शिशुः कौशिकशिशुः । दिवा इति अव्ययं, दिवा अन्धः दिवाऽन्धः । प्रपूर्वो 'रूप-' धातुः 'चुरादिभ्यो णिच्' इति णिच्प्रत्ययः शव् 'वर्तमाना तिव्' 'गुणः०' अय् प्ररूपयतीति सिद्धम् । घर्मा-उष्णा रश्मयः-किरणा यस्य स घर्मरश्मिस्तस्य । इति तृतीयकाव्यार्थः ॥ ३ ॥

*He points out his incompetency to undertake such a work —*

Oh Lord! how can persons like us succeed in giving even a general outline of Thy nature? Is indeed a young-one of an owl blind by day capable of describing the orb of the hot-rayed one (sun), however presumptuous it may be? (3)

卐 卐 卐 卐

आस्तामहं मन्दमतिः, किन्तु केवलज्ञानी ज्ञानेन जानानोऽपि न जिनगुणान् वक्तुं प्रभूष्णुरित्याह—

मोहक्षयादनुभवन्नपि नाथ ! मर्त्यो
नूनं गुणान् गणयितुं न तव क्षमेत ।
कल्पान्तवान्तपयसः प्रकटोऽपि यस्मा-
न्मीयेत केन जलधेर्ननु रत्नराशिः ? ॥ ४ ॥

क० वृ०—हे नाथ! मर्त्यस्तव गुणान् गणयितुं न क्षमेत । कर्त्रुक्तिः । 'मर्त्यः' मनुष्यः । 'तव' भवतः । 'गुणान्' अनन्तज्ञानादिकान् । 'गणयितुं' सङ्ख्यातुम् । 'न क्षमेत' न समर्थो भवेत् । कथम्? 'नूनं' निश्चयेन । मर्त्यः किं कुर्वन्? 'अनुभवन्नपि' ज्ञानेन जानानोऽपि । कस्मात्? 'मोहक्षयात्' मोहयतीति मोहः, घातिकर्मचतुष्टयं तस्य क्षयात्–विनाशात् । मोहस्य क्षयो मोहक्षयस्तस्मात् 'तत्पुरुषः' । घातिकर्मचतुष्कं ज्ञानावरण१दर्शनावरण२मोहनीया३ऽन्तराय४रूपम् । एतदेव दृष्टान्तेन दृढयन्नाह–नन्विति परप्रश्ने । यस्मात् जलधेः प्रकटोऽपि रत्नराशिः केन मीयेत? । कर्मोक्तिः । 'यस्मात्' कारणात् । 'जलधेः' समुद्रस्य । जलं धीयतेऽस्मिन्निति जलधिस्तस्य । 'रत्नराशिः' चन्द्रकान्तादिरत्ननिकरः । रत्नानां राशिः रत्नराशिः 'तत्पुरुषः' । रत्नराशिः किम्भूतोऽपि? 'प्रकटोऽपि' प्रत्यक्षोऽपि । 'केन' नरेण । 'मीयेत?' प्रमाणीक्रियेत? अपि तु न केनापि मीयते । जलधेः किंविशिष्टस्य? 'कल्पान्तवान्तपयसः' कल्पान्तेन–युगान्तेन वान्तं–विक्षिप्तं पयो–जलं यस्य स तस्य । कल्पस्य अन्तः कल्पान्तः 'तत्पुरुषः', कल्पान्तेन वान्तं कल्पान्तवान्तं 'तत्पुरुषः', कल्पान्तवान्तं पयो यस्य स कल्पान्तवान्तपयास्तस्य 'बहुव्रीहिः' । इति चतुर्थवृत्तार्थः ॥ ४ ॥

मा० वि०—मोहक्षयादिति । हे नाथ! मर्त्यो–मनुष्यो मोहक्षयात्–मोहनीयकर्मक्ष-

१ 'दृढयति' इति ख–पाठः ।

यात् अनुभवन्नपि–साक्षाज्जानन्नपि नूनं–निश्चितं तव गुणान् गणयितुं–सङ्ख्यातुं–इयत्ताविषयीकर्तुं न क्षमेत–न समर्थो भवेत् । 'क्षमेत' इति क्रियापदम् । कथम्? 'न' । कः कर्ता? 'मर्त्यः' । किं कर्तुम्? 'गणयितुम्' । कान्? 'गुणान्' । कस्य? 'तव' । मर्त्यः किं कुर्वन्? 'अनुभवन्' । कथम्? 'अपि' । कस्मात्? 'मोहक्षयात्' । एतदेव दृष्टान्तेन दृढयति–ननु इति । ननु इति सम्भावनायाम् । यस्मात्–कारणात् कल्पान्तवान्तपयसो जलधेः प्रकटोऽपि रत्नराशिः केन मीयेत? अपि तु न मीयेत–न मानविषयीक्रियेत । 'मीयेत' इति क्रियापदम् । केन कर्त्रा? 'केन' । कः कर्मतापन्नः? 'रत्नराशिः' । कस्य? 'जलधेः' । किम्भूतस्य? कल्पान्तेन वान्तं–क्षयं गतं पयो–जलं यस्य स कल्पान्तवान्तपयास्तस्य । रत्नराशिः किंलक्षणः? 'प्रकटः' । मोहस्य क्षयः मोहक्षयस्तस्मात् ॥

अनुपूर्वो भूधातुः । अनुभवतीति अनुभवन् शतृप्रत्ययः शव् गुणः ओ अव् अकारलोपः संहिता ऋदुदितोनोऽन्तः तलोपः सिलोपः अनुभवन् इति सिद्धम् । 'गणण संख्याने' (सिद्ध० धा०) इत्यस्य वर्णयितुंवद् ज्ञेयम् । 'क्षमौच् सहने' । क्षम्धातुः । 'सप्तमी ईत' (सिद्ध० ३-३-७), शव् 'अवर्णस्येवर्णादिनैदोदरल्' (सिद्ध १-२-६), क्षमेत इति सिद्धम् । 'मांङ्क् मानशब्दयोः' (सिद्ध० धा०) माधातुः, 'क्यः शिति' (सिद्ध० ३-४-७०), 'सप्तमी ईत', 'ईर्व्यञ्जनेऽयपि' (सिद्ध० ४-३-९७) इति आकारस्य ईकारः सन्धिः मीयेत इति जातम् । किम्शब्दतृतीया टा, 'किमः कस्तसादौ च' (सिद्ध० २-१-४०) किम्शब्दस्य कः, 'टाङसोरिनस्यौ' (सिद्ध० १-४-५) टाया इनादेशः, केन इति सिद्धम् । जलं धीयतेऽस्मिन् (इति) जलधिः । धाधातुः, किः प्रत्ययः, 'इडेत् पुसि चातो लुक्' (सिद्ध० ४-३-९४) आकारलोपः जलधिरिति जातं तस्य जलधेः । रत्नानां राशिः रत्नराशिः । इति तुर्यकाव्यार्थः ॥४॥

*He suggests that even the omniscient cannot enumerate Thy virtues —*

Oh Lord! a mortal is surely incapable of counting Thy merits, in spite of his realizing them, owing to the annihilation of his infatuation, (for), who can measure the heap of jewels, though obvious, in the ocean emptied of waters at the time of the destruction of the universe? (4)

* * * *

एवं सत्यपि प्रवर्तने हेतुमुपदिशति—

अभ्युद्यतोऽस्मि तव नाथ ! जडाशयोऽपि
कर्तुं स्तवं लसदसङ्ख्यगुणाकरस्य ।
बालोऽपि किं न निजबाहुयुगं वितत्य
विस्तीर्णतां कथयति स्वधियाऽम्बुराशेः ? ॥ ५ ॥

---

१ 'मुपदर्शयति' इति ख–पाठ. ।

क० वृ०—हे नाथ! जडाशयोऽप्यहं तव स्तवं कर्तुमभ्युद्यतोऽस्मि। कर्तर्युक्तिः। अहं किंलक्षणोऽपि? 'जडाशयोऽपि' अज्ञोऽपि। जड आशयो यस्य सः (जडा०) 'बहुव्रीहिः'। अहं किंलक्षणः? 'अभ्युद्यतः' कृतोद्यमोऽस्मि। किं कर्तुम्? 'कर्तुम्'। कं कर्मतापन्नम्? 'स्तवं' स्तोत्रम्। कस्य? 'तव'। तव किंलक्षणस्य? 'लसदसङ्ख्यगुणाकरस्य' 'दीप्यदसङ्ख्येय-गुणखानेः। न विद्यते सङ्ख्या येषां तेऽसङ्ख्याः 'बहुव्रीहिः', असङ्ख्याश्च ते गुणाश्च असङ्ख्यगुणाः 'कर्मधारयः', लसन्तश्च ते असङ्ख्यगुणाश्च लसदसङ्ख्यगुणाः 'कर्मधारयः', लसदसङ्ख्यगुणानामाकरो लसदसङ्ख्यगुणाकरस्तस्य 'तत्पुरुषः'। अत्रार्थे दृष्टान्तमाह—बालोऽपि निजबाहुयुगं वितत्य अम्बुराशेर्विस्तीर्णतां स्वधिया किं न कथयति? अपि तु कथयति। कर्तर्युक्तिः। 'बालः' मूर्खः शिशुश्च प्रोच्यते ततोऽयमर्थः—एकं तावच्छिशुरपरं च मूर्खः सोऽपि। 'निजबाहुयुगं' स्वभुजयुगलम्। बाह्वोर्युगं बाहुयुगं 'तत्पुरुषः', निजं च तत् बाहुयुगं च निजबाहुयुगं 'कर्मधारयः'। 'वितत्य' विस्तार्य। 'स्वधिया' स्वबुद्ध्या। स्वस्य धीः स्वधीस्तया 'तत्पुरुषः'। 'अम्बुराशेः' समुद्रस्य। अम्बुनो राशिर्यत्र सोऽम्बुराशिस्तस्य 'बहुव्रीहिः'। 'विस्तीर्णतां' विशालताम्। विस्तीर्णस्य भावो विस्तीर्णता ताम्। किं न कथयति? अपि तु समुद्रविस्तारं निजबुद्ध्या बालोऽपि बाहुप्रसारणेन कथयति, तथा बालवदहमपि स्तोतुमुद्यतोऽस्मि। इति पञ्चमवृत्तार्थः॥ ५॥

मा० वि०—अभ्युद्यतोऽस्मीति। हे नाथ! अहं जडाशयोऽपि तव स्तवं कर्तुं अभ्युद्यतोऽस्मि—उद्यमवान् जातोऽस्मि। 'अस्मि' इति क्रियापदम्। कः कर्ता? 'अहम्'। किंलक्षणः? 'अभ्युद्यतः'। अहं किंलक्षणः? 'जडाशयः'। किं कर्तुम्? 'कर्तुम्'। कं कर्मतापन्नम्? 'स्तवम्'। कस्य? 'तव'। तव किंलक्षणस्य? 'लसदसङ्ख्यगुणाकरस्य' लसन्तो—दीप्यमाना ये असङ्ख्यगुणाः तेषामाकरः—खानिः तस्य। जडाशयः सन् स्तोत्रे कथं प्रवृत्तस्तदर्थे दृष्टान्तमाह—बालोऽपि किं निजबाहुयुगं वितत्य स्वधिया अम्बुराशेः—समुद्रस्य विस्तीर्णतां—पृथुलतां न कथयति? अपि तु कथयति, तथा अहमपि स्वबुद्ध्यनुसारेण तव स्तवं कर्तुमभ्युद्यतोऽस्मीति भावः। 'कथयति' इति क्रियापदम्। कथम्? 'न'। काकूक्त्या निषेधेऽपि अङ्गीकार एव सूच्यते। कः कर्ता? 'बालः'। कथम्? 'अपि'। कां कर्मतापन्नाम्? 'विस्तीर्णताम्'। कस्य? 'अम्बुराशेः'। कया? 'स्वधिया'। किं कृत्वा? 'वितत्य'। किं कर्मतापन्नम्? 'निजबाहुयुगम्'॥

अभिउद्पूर्वो 'यमूं उपरमे' (सिद्ध० धा०) यम्धातुः क्तप्रत्ययः 'यमिरमिनमिगमि०' (सिद्ध० ४-२-५५) इति सूत्रेण मलोपः संहितायां प्रथमा सौ अभ्युद्यत इति सिद्धम्। 'असक् भुवि' (सिद्ध० धा०) अस(धातुः), 'वर्तमाना मिव्' (सिद्ध० ३-३-६) अस्मीति सिद्धम्। जड आशयः—चित्ताभिप्रायो यस्य स जडाशयः। 'डुकृंग् करणे' (सिद्ध० धा०) कृधातुः, तुम्प्रत्ययः, करणाय कर्तुं गुणः 'अव्ययस्य' (सिद्ध०

१ 'दीप्यमानास०' इति प्रतिभाति। २ 'वृत्तभावः' इति ख-पाठः।

३–२–७ ) सिलोपः, कर्तुमिति सिद्धम् । न विद्यते सङ्ख्या येषां ते असङ्ख्याः, असङ्ख्याश्च ते गुणाश्च असङ्ख्यगुणाः, लसन्तश्च ते असङ्ख्यगुणाश्च लसदसङ्ख्यगुणाः, लसदसङ्ख्यगुणानां आकरः लसदसङ्ख्यगुणाकरस्तस्य । बाह्वोर्युगं बाहुयुगं, निजस्य बाहुयुगं निजबाहुयुगं तत् । विपूर्वः 'तनूयी विस्तारे' ( सिद्ध० धा० ) तन्( धातुः ) क्त्वाप्रत्ययः 'अनञः क्त्वो यप्' ( सिद्ध० ३–२–१५४ ) इति यबादेशः 'यमि०' इति सूत्रेण नलोपे 'ह्रस्वस्य तः पित्कृति' ( सिद्ध० ४–४–११३ ) इति तागमे सिलोपे वितत्येति रूपम् । विस्तीर्णस्य भावो विस्तीर्णता ताम् । यथा प्ररूपयति वर्णयति तथा कथयतीति ज्ञेयम् । स्वस्य धीः स्वधीस्तया स्वधिया । अम्बुनः राशिः अम्बुराशिस्तस्य । इति पञ्चमवृत्तार्थः ॥ ५ ॥

*He mentions one by one the reasons of commencing the hymn —*

Oh Lord! I, though dull-witted, have started to sing a song of Thine, the mine of innumerable resplendent virtues (For) does not even a child describe according to its own intellect the vastness of the ocean by stretching its arms?. (5)

* * * *

अथानन्तरोदीरितकाव्यद्वयस्यैवार्थं दृढयन्नाह—

ये योगिनामपि न यान्ति गुणास्तवेश!
वक्तुं कथं भवति तेषु ममावकाशः? ।
जाता तदेवमसमीक्षितकारितेयं
जल्पन्ति वा निजगिरा ननु पक्षिणोऽपि ॥ ६ ॥

क० वृ०—हे ईश! (–हे स्वामिन्!) ये तव गुणा योगिनामपि वक्तुं न यान्तीत्यन्वयः। कर्त्रुक्तिः।'योगिनामपि' रत्नत्रयरूपयोगाराधनेनोत्पन्नज्ञानानामपि योगीन्द्राणाम् । योगो विद्यते येषां ते योगिनस्तेषां 'बहुव्रीहिः' (?)। 'वक्तुं न यान्ति' वाचो गोचरतां न प्राप्नुवन्तीति भावः। तेषु गुणेषु ममावकाशः कथं भवतु? । कर्त्रुक्तिः। अत्रार्थे सर्वथा मम वचनावकाशो नैवास्तीत्यर्थः । तदियमसमीक्षितकारिता जाता । कर्तर्युक्तिः । तस्मात् कारणादेव स्तोतुमवकाशाभावे सत्यपि इयं प्रस्तुतस्तुतिकरणविषया असमीक्षितकारिता–अविमृष्टविधायिता । समीक्षितं करोतीत्येवं समीक्षितकारी, न समीक्षितकारी असमीक्षितकारी 'तत्पुरुषः', असमीक्षितकारिणो भावो असमीक्षितकारिता, मम जाता । अनवकाशेऽपीयं स्तुतिरविचारेण कर्तुं प्रारब्धेति भावः । 'वा' अथवा । नन्विति सम्यगूवादे । 'पक्षिणोऽपि' पक्षौ विद्यन्ते येषां ते पक्षिणो निजगिरा जल्पन्ति । कर्त्रुक्तिः । 'पक्षिणोऽपि' मनुष्यभाषया भाषितुमज्ञाः पतत्रिणोऽपि । 'निजगिरा' स्वभाषया । निजा चासौ गीश्च निजगीस्तया

१ 'कर्तर्युक्ति.' इति ख-पाठः । २ चिन्त्योऽयमुल्लेखः, 'अस्त्यर्थे' इति प्रतिभाति ।

'कर्मधारयः'। 'जल्पन्ति' वदन्ति। नात्रायुक्तं किञ्चित्। यथा पक्षिणः स्वभाषया भाषन्ते, तथाऽहमपि प्रवृत्तोऽस्मीति नाविमृष्टकारिता। इति षष्ठवृत्तार्थः[1]॥ ६॥

मा० वि०—ये योगिनामपीति। हे ईश!–हे स्वामिन्! ये तव गुणा योगिनामपि वक्तुं न यान्ति–ये गुणा योगिनामपि वक्तुं योग्या न भवन्ति, गुणानामानन्त्याद् वा पृथक्कर्तृणामेकजिह्वावत्त्वात् सङ्ख्यातायुष्कत्वाच्चेति भावः। 'यान्ति' इति क्रियापदम्। कथम्? 'न'। के कर्तारः? 'गुणाः'। गुणाः के? 'ये'। केषाम्? 'योगिनाम्'। कस्य? 'तव'। किं कर्तुम्? 'वक्तुम्'। तेषु गुणेषु ममावकाशः कथं भवतु? । 'भवतु' इति क्रियापदम्। कः कर्ता? 'अवकाशः'। केषु? 'तेषु'। किं कर्तुम्? 'वक्तुम्'। डमरुकमणिन्यायेन 'वक्तुं' इति क्रियापदं द्वयोरप्युक्त्योर्योज्यम्, अन्यथा वाक्यासङ्गतिः स्यात्। तत्–तस्मात् कारणात् इयं असमीक्षितकारिता जाता, अविचारितकर्तृत्वं जातमिति भावः। 'जाता' इति क्रियापदम्। कः कर्ता? 'असमीक्षितकारिता'। कथम्? 'एवम्'। वा इति पक्षान्तरे। यथा असमीक्षितकारिता न भवति इति पक्षान्तरे। नन्विति वितर्के। पक्षिणोऽपि निजगिरा–निजवाण्या जल्पन्ति–वदन्ति। 'जल्पन्ति' इति क्रियापदम्। के कर्तारः? 'पक्षिणः'। कथम्? 'अपि'। कया? 'निजगिरा'॥

यद्शब्दः प्रथमाबहुवचनं जस 'आ द्वेरः' (सिद्ध० २–१–४१) इति दकारस्य अकारः, 'लुगस्यादेत्यपदे' (सिद्ध० २–१–११३) अकारलोपः अकारसंहिता 'जस इः' (सिद्ध० १–४–९) अवर्णेन सह एत्वे ये इति सिद्धम्। 'यांक् प्रापणे' (सिद्ध० धा०) याधातुः 'वर्तमाना अन्ति' (सिद्ध० ३–३–६) संहिता यान्तीति सिद्धम्। 'वचंक् [परि]भाषणे' (सिद्ध० धा०) वच्(धातुः) तुम्प्रत्ययः 'चजः कगम्' (सिद्ध० २–१–८६) सिलोपः वक्तुं इति सिद्धम्। भूधातुः 'पञ्चमी तुव्' (सिद्ध० ३–३–८) 'गुणः०' (सिद्ध० ३–३–२) अव संहितायां भवतु इति जातम्। तद्शब्दः सुपि 'आ द्वेरः', 'लुगस्यादेत्यपदे', 'एद् बहुस्भोसि' (सिद्ध० १–४–४) तेष्विति सिद्धम्। 'जनैचि प्रादुर्भावे' (सिद्ध० धा०)। जन्धातुः क्तप्रत्ययः 'आः खनिसनिजनः' (सिद्ध० ४–२–६०) इति सूत्रेण नस्य आत्वं स्त्रीलिङ्गत्वादाप् सेर्लोपश्च। समीक्षितं करोतीति समीक्षितकारी, समीक्षितकारिणो भावः समीक्षितकारिता, न समीक्षितकारिता असमीक्षितकारिता, अविचारितकारितेत्यर्थः। जल्पधातुः 'वर्तमाना अन्ति' शव् 'लुगस्यादेत्यपदे' जल्पन्तीति सिद्धम्। निजस्य गीस्तया निजगिरा। पक्षौ विद्येते येषां ते पक्षिणः, पक्षशब्दः, अस्त्यर्थे इन्प्रत्ययः, पक्षस्य अकारलोपः पक्षिन् इति जातं, प्रथमा जसि नस्य णत्वे पक्षिण इति सिद्धम्। इति षष्ठकाव्यार्थः॥ ६॥

Oh Lord! whence can it be within my scope to describe Thy merits, when even the masterly saints fail to do so? Therefore, this attempt of mine is a thoughtless act, or why, even birds do speak in their own tongue. (6)

* * * *

1 'षष्ठवृत्तभावार्थः' इति ख-पाठ.।

आस्तामचिन्त्यमहिमा जिन! संस्तवस्ते
नामापि पाति भवतो भवतो जगन्ति ।
तीव्रातपोपहतपान्थजनान् निदाघे
प्रीणाति पद्मसरसः सरसोऽनिलोऽपि ॥ ७ ॥

क० वृ०—हे जिन! ते–तव संस्तवः आस्तामित्यन्वयः । कर्त्रुक्तिः । 'संस्तवः' स्तोत्रम् । संस्तवः कथम्भूतः? 'अचिन्त्यमहिमा' अचिन्तनीयमाहात्म्यः । चिन्तनार्हश्चिन्त्यः, न चिन्त्योऽचिन्त्यः, महतो भावो महिमा, अचिन्त्यो महिमा यस्य सः 'बहुव्रीहिः' । 'आस्तां' दूरे तिष्ठतु । भवतो नामापि भवतो जगन्ति पाति । कर्त्रुक्तिः । हे देव! । 'भवतः' तव । 'नामापि' श्रीपार्श्व इत्यभिधानमपि । 'भवतः' भवात्–ससारात् । 'जगन्ति' विश्वानि । 'पाति' रक्षति । दृष्टान्तमाह–निदाघे पद्मसरसोऽनिलोऽपि तीव्रातपोपहतपान्थजनान् प्रीणातीत्यन्वयः । कर्त्रुक्तिः । 'प्रीणाति' इति क्रियापदम् । कः कर्ता? 'अनिलः' वायुः । 'प्रीणाति' प्रीतिमुत्पादयति । कान् कर्मतापन्नान्? 'तीव्रातपोपहतपान्थजनान्' तीव्र आतपस्तेनोपहता–व्याकुलीकृता ये पान्थजनास्तान् । पथि गच्छन्तीति पान्थाः, पान्थाश्च ते जनाश्च पान्थजनाः 'कर्मधारयः', तीव्रश्चासावातपश्च तीव्रातपः 'कर्मधारयः', तीव्रातपेनोपहतास्तीव्रातपोपहताः 'तत्पुरुषः', तीव्रातपोपहताश्च ते पान्थजनाश्च तीव्रातपोपहतपान्थजनास्तान् 'कर्मधारयः' । 'निदाघे' ग्रीष्मे । अनिलः किंलक्षणः? 'सरसः' सूक्ष्मजलशीकरपरिगत इतियावत् । सह रसेन–जलेन वर्तते यः सः 'बहुव्रीहिः' । कस्य? 'पद्मसरसः' पद्मैरुपलक्षितं सरः पद्मसरस्तस्य 'मध्यमपदलोपी तत्पुरुषः' । आस्तां स्वच्छं स्वादु शीतलं जलं, पद्मसरसोऽनिलोऽपि पान्थनरान् प्रीणाति । दृष्टान्तोपनयोऽत्राग्रेऽपि च सर्वत्र स्वयं भावनीयः । इति सप्तमवृत्तार्थः ॥ ७ ॥

मा० वि०—आस्तामिति । हे जिन! ते–तव संस्तव आस्तां–तिष्ठतु । 'आस्ताम्' इति क्रियापदम् । कः कर्ता? 'संस्तवः' । कस्य? 'ते' । संस्तवः किंलक्षणः? अचिन्त्यः–अचिन्तनीयो महिमा यस्य सः 'अचिन्त्यमहिमा' । भवतः–तव भवतः–संसारात् जगन्ति–विश्वानि नामापि–अभिधानमपि पाति–रक्षति । 'पाति' इति क्रियापदम् । किं कर्तृ? 'नाम' । कथम्? 'अपि' । कस्य? 'भवतः' । कस्मात्? 'भवतः' । कानि कर्मतापन्नानि? 'जगन्ति' प्रति । उक्तमर्थं दृष्टान्तेन दृढयति–पद्मसरः आस्तां–तिष्ठतु, पद्मसरसः–पद्मतडाकस्य सरसः अनिलो–वायुरपि तीव्रातपोपहतपान्थजनान् प्रति प्रीणाति–सन्तुष्टिं विधत्ते । 'प्रीणाति' इति क्रियापदम् । कः कर्ता? 'अनिलः' । किंलक्षणः? 'सरसः' । कस्य? 'पद्मसरसः' । कान् प्रति? तीव्रेण आतपेन उपहता ये पान्थजनास्तान् प्रति । कस्मिन्? 'निदाघे' ग्रीष्मर्तौ ॥

'आसिक् उपवेशने' ( सिद्ध० धा० ) आस्धातुः पञ्चमी तां आस्तां इति सिद्धम् । अचिन्त्यमहिमन्शब्दः प्रथमा सिः 'नि दीर्घः' ( सिद्ध० १-४-८५ ) इति सूत्रेण दीर्घः नलोपः सिलोपः 'अचिन्त्यमहिमा' इति सिद्धम् । युष्मद्शब्दः षष्ठी ङस् 'ङे-ङसा ते-मे' ( सिद्ध० २-१-२३ ) इत्यनेन ङसा सह ते आदेशः । नामन्शब्दः प्रथमा सिः 'अनतो लुप्' ( सिद्ध० १-४-५९ ) सिलोपः नलोपश्च नाम इति सिद्धम् । भवत्शब्दः ङसः संहितायां भवतः इति जातम् । भवशब्दः पञ्चम्यर्थे तस्प्रत्ययः पञ्चमी ङसिलोपः भवतः इति सिद्धम् । जगत्शब्दः द्वितीयाबहुवचनं शस् 'नपुंसकस्य शिः' ( सिद्ध० १-४-५५ ) इति सूत्रेण शसः शिरादेशः शिस्थाने इरिति लिख्यते 'धुटां प्राक्' (सिद्ध० १-४-६६ ) इति नोऽन्तः संहितायां जगन्ति जातम् । तीव्रश्चासौ आतपश्च तीव्रातपः, तीव्रातपेन उपहताः तीव्रातपोपहताः, पान्थाश्च ते जनाश्च पान्थजनाः, तीव्रातपोपहताश्च ते पान्थजनाश्च तीव्रातपोपहतपान्थजनास्तान् । 'प्रींग्श् तृप्तिकान्त्योः' ( सिद्ध० धा० ) प्रीधातुः 'क्र्यादेः' ( सिद्ध० ३-४-७९ ) इति श्ना, 'वर्तमाना तिव्' ( सिद्ध० ३-३-६ ), नकारस्य णकारः प्रीणाति इति सिद्धम् । पद्मैरुपलक्षितं सरः पद्मसरस्तस्य । सरस्शब्दः षष्ठीङस् संहितायां सरसः इति जातम् । सह रसेन-पानीयेन वर्तते यः स सरसः । 'सहस्य सोऽन्यार्थे' ( सिद्ध० ३-२-१४३ ) सहस्य सः । इति सप्तमकाव्यार्थः ॥ ७ ॥

*God's name brings to an end the cycle of births and deaths.*

Oh *Jina* ! Let Thy hymn whose sublimity is inconceivable be out of consideration, ( for ), even Thy name saves the ( living beings of the ) three worlds from ( this ) worldly existence Even the cool breeze of a lotus-lake gives delight in summer to the travellers tormented by the immense heat ( of the sun ) (7)

* * * *

ननु यस्य देवस्य चिन्तने दर्शने सततं चेतसि धारणे च भक्तस्य नरस्य किमपि फलं न स्यात् तेन देवेन स्तुतेनापि किं भवेदित्याशङ्क्य कविः स्तोतव्यजिनेन्द्रस्य चिन्तने दर्शने सततं चेतसि धारणे च क्रमेण फलं प्रतिपिपादयिषुः काव्यत्रयमाह—

हृद्वर्तिनि त्वयि विभो! शिथिलीभवन्ति
जन्तोः क्षणेन निबिडा अपि कर्मबन्धाः ।
सद्यो भुजङ्गममया इव मध्यभाग-
मभ्यागते वनशिखण्डिनि चन्दनस्य ॥ ८ ॥

क्र० सू०—हे विभो! त्वयि हृद्वर्तिनि जन्तोः निबिडा अपि कर्मबन्धाः क्षणेन शिथिलीभवन्ति । कर्तृयुक्तिः । 'त्वयि' भवति । 'हृद्वर्तिनि' हृदयमध्यवर्तिनि सति । हृदि वर्तते

इत्येवंशीलो हृद्वर्ती तस्मिन् 'तत्पुरुषः'। 'जन्तोः' जीवस्य। 'कर्मबन्धाः' जीवप्रदेशैः सह कर्माणूनां वह्न्ययःपिण्डन्यायेनान्योन्यानुगमनस्वरूपाः कर्मबन्धाः। कर्मणां बन्धाः कर्मबन्धाः 'तत्पुरुषः'। 'निबिडा अपि' सुदृढा अपि। 'क्षणेन' अचिरात्। 'शिथिलीभवन्ति' अशिथिलाः शिथिला भवन्ति इति शिथिलीभवन्ति। निबिडबन्धभावं विहाय शिथिलीभावं भजन्ते (इत्यर्थः)। उक्तमर्थं दृष्टान्तेन दृढयति—इव–यथा वनशिखण्डिनि मध्यभागमभ्यागते सद्यश्चन्दनस्य भुजङ्गममया बन्धाः शिथिलीभवन्ति। कर्त्रुक्तिः। 'वनशिखण्डिनि' वनमयूरे। शिखण्डाः–पिच्छानि सन्त्यस्येति शिखण्डी, वनस्य शिखण्डी वनशिखण्डी तस्मिन् 'तत्पुरुषः'। 'मध्यभागं' मध्येनोपलक्षितो भागो मध्यभागस्तं 'तत्पुरुषः' मध्यमपदलोपी। अर्थाच्चन्दनशाखिनो मध्यदेशं समुपागते सद्यः–तत्कालं चन्दनस्य–चन्दनद्रुमस्य 'भुजङ्गममयाः' भुजङ्गाः प्रचुरा येषु ते भुजङ्गममयाः बन्धाः शाखासु कुण्डलितसर्पशरीरवेष्टा इव–यथा शिथिलीभवन्ति। इत्यष्टमवृत्तार्थः॥ ८॥

मा० वि०—हृद्वर्तिनीति। हे विभो! त्वयि हृद्वर्तिनि सति जन्तोः–जीवस्य निबिडा अपि कर्मबन्धाः शिथिलीभवन्ति। 'शिथिलीभवन्ति' इति क्रियापदम्। के कर्तारः? 'कर्मबन्धाः'। कस्य? 'जन्तोः'। केन? 'क्षणेन'। कस्मिन् सति? 'त्वयि' सति। त्वयि किंलक्षणे? हृदि वर्तत इत्येवंशीलो हृद्वर्ती तस्मिन्। कर्मबन्धाः किंलक्षणाः? 'निबिडाः' घनाः। अमुमेवार्थं दृष्टान्तेनोपस्कुरुते—इव–यथा चन्दनस्य–चन्दनतरोः भुजङ्गममया बन्धाः सद्यः–शीघ्रं वनशिखण्डिनि–वनमयूरे मध्यभागं अर्थाद् वनमध्यभागं अभ्यागते सति शिथिलीभवन्ति। 'शिथिलीभवन्ति' इति क्रियापदम्। के कर्तारः? 'बन्धाः'। बन्धाः किंलक्षणाः? भुजङ्गमैः प्रकृताः 'भुजङ्गममयाः'। कस्य? 'चन्दनस्य'। कस्मिन् सति? 'वनशिखण्डिनि' सति। किंलक्षणे? 'अभ्यागते' समागते। कं कर्मतापन्नम्? 'मध्यभागम्'। कथम्? 'सद्यः' शीघ्रम्॥

हृद्पूर्वो 'वृतूङ् वर्तने' (सिद्ध० धा०) वृत्धातुः शीलार्थे इन् संहितायां वर्तिन् इति जातं, सप्तम्यां ङौ वर्तिनि इति सिद्धम्। युष्मद्शब्दः सप्तमी ङौ युष्म् अद् इति विश्लेषः 'त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्' (सिद्ध० २–१–११) इति सूत्रेण युष्म् इत्यस्य त्व इत्यादेशः, 'टाङ्योसि यः' (सिद्ध० २–१–७) इति दस्य यकारः 'लुगस्यादेत्यपदे' (सिद्ध० २–१–११३) त्वस्याकारलोपे संहितायां त्वयीति सिद्धम्। विभुशब्दः सम्बोधने सिः 'ह्रस्वस्य गुणः' (सिद्ध० १–४–४१) इति सिना सह ओत्वे विभो! इति जातम्। अशिथिलाः शिथिला भवन्ति इति शिथिलीभवन्ति। शिथिलशब्दः अभूततद्भावे च्विप्रत्ययः 'ईश्च्वाववर्णस्यानव्ययस्य' (सिद्ध० ४–३–१११) इति सूत्रेण अकारस्य ईकारः, च्वेर्लोपे शिथिली इति जातं, भवन्तीति पूर्ववत्, शिथिलीभवन्तीति अखण्डं पदं ज्ञेयम्। जन्तुशब्दः षष्ठी ङसि 'ङित्यदिति' (सिद्ध० १–४–२३)

१ 'अशीविषाः' इति अ–पाठः।

इति सूत्रेण ओत्वे 'एदोद्भ्यां ङसिङसो रः' ( सिद्ध० १–४–३५ ) इति ङसो रत्वे रस्य विसर्गत्वे 'जन्तोः' इति सिद्धम्। निबिडा अपि इत्यत्र 'रोर्यः' ( सिद्ध० १–३–२६ ) इति रस्य यत्वे 'स्वरे वा' ( सिद्ध० १–३–२४ ) इति लुप्ते सन्ध्यभावे 'निबिडा अपि' इति जातम्। कर्मणां बन्धाः कर्मबन्धाः। भुजङ्गममया इत्यत्र प्रकृत्यर्थे मयट्प्रत्ययः जसि भुजङ्गममयाः। मध्यश्चासौ भागश्च मध्यभागस्तम्। अभि–आङ्पूर्वो गम्धातुः क्तप्रत्ययः 'यमिरमि०' ( सिद्ध० ४–२–५५ ) इति सूत्रेण मलोपः, संहितायां सप्तम्यां 'अभ्यागते' इति जातम्। शिखण्डः–कलापः सोऽस्यास्तीति शिखण्डी। वनस्य शिखण्डी वनशिखण्डी तस्मिन् वनशिखण्डिनि। इन्प्रत्यये पूर्वाकारलोपे संहितायां सप्तम्यां सिद्धिः। इत्यष्टमकाव्यार्थः ॥ ८ ॥

*He mentions the result of contemplating God*

Oh Lord! when Thou art enshrined in the heart by a living being, his firm fetters of *Karmans*, however tight they may be, become certainly loose within a moment like the serpent-bands of a sandal tree, immediately when a wild peacock arrives at its centre (8)

* * * *

मुच्यन्त एव मनुजाः सहसा जिनेन्द्र!
रौद्रैरुपद्रवशतैस्त्वयि वीक्षितेऽपि।
गोस्वामिनि स्फुरिततेजसि दृष्टमात्रे
चौरैरिवाशु पशवः प्रपलायमानैः ॥ ९ ॥

क० वृ०—हे जिनेन्द्र! त्वयि वीक्षितेऽपि सहसा रौद्रैरुपद्रवशतैर्मनुजा मुच्यन्त एवेत्यन्वयः। कर्मोक्तिः। हे 'जिनेन्द्र!' जिनानामिन्द्रो जिनेन्द्रस्तस्य सम्बोधनम्। 'त्वयि' भवति। 'वीक्षितेऽपि' दृष्टमात्रेऽपि। 'सहसा' शीघ्रम्। 'रौद्रैः' भयङ्करैः। 'उपद्रवशतैः' बहुवचनाद् बहुभिः। उपद्रवाणां शतान्युपद्रवशतानि तैः 'तत्पुरुषः'। 'मनुजाः' नराः। 'मुच्यन्ते एव' त्यज्यन्त एव। त्वय्यालोकिते बहून्युपद्रवशतानि मनुजान् त्यक्त्वा नश्यन्त्येवेति भावः। अत्र दृष्टान्तमाह—इव–यथा स्फुरिततेजसि गोस्वामिनि दृष्टमात्रे प्रपलायमानैश्चौरैराशु पशवो मुच्यन्ते इत्यन्वयः। कर्मोक्तिः। 'स्फुरिततेजसि' स्फुरितप्रत्यूषसमये। स्फुरितं जगत्प्रकाशतया विस्तृतं तेजो–विभा यस्य स तस्मिन्। स्फुरितं तेजो यस्य स स्फुरिततेजास्तस्मिन् 'बहुव्रीहिः'। 'गोस्वामिनि' किरणनाथे रवौ। गवां स्वामी गोस्वामी तस्मिन् 'तत्पुरुषः'। अथच 'गोस्वामिनि' भूमिपाले। गोः–पृथिव्याः स्वामी गोस्वामी तस्मिन् 'तत्पुरुषः'। अथवा 'गोस्वामिनि' गोपाले। 'दृष्टमात्रे' सति आलोकितमात्रे। केवलं दृष्टो दृष्टमात्रस्तस्मिन् सति। ( 'प्रपलायमानैः' ) प्रकर्षेण पलायमानैः पृष्ठा-

गलसबलवाहरिक(?)लोकभयेन नश्यद्भिः । 'चौरैः' तस्करैः । 'आशु' शीघ्रम् । 'इव' यथा । 'पशवः' धेनुप्रभृतयः । मुच्यन्ते ॥ इति नवमवृत्तार्थः ॥ ९ ॥

मा० वि०—मुच्यन्त इति । हे जिनेन्द्र! रौद्रैरुपद्रवशतैः त्वयि वीक्षितेऽपि सति मनुजाः-मनुष्या मुच्यन्ते एवेति निश्चयेन । 'मुच्यन्ते' इति क्रियापदम् । कैः कर्तृभिः? 'उपद्रवशतैः' । के कर्मतापन्नाः? 'मनुजाः' । कथम्? 'एव' । कथम्? 'सहसा' शीघ्रम् । किंलक्षणैः उपद्रवशतैः? 'रौद्रैः' भीषणैः । कस्मिन् सति? 'त्वयि' सति । त्वयि किंलक्षणे? 'वीक्षिते' दृष्टे । कथम्? 'अपि' । उक्तार्थं दृष्टान्तयति—इव-यथा चौरैः गोस्वामिनि-सूर्ये दृष्टमात्रे सति पशवो मुच्यन्ते । 'मुच्यन्ते' इति क्रियापदम् । कैः कर्तृभिः? 'चौरैः' । के कर्मतापन्नाः? 'पशवः' । कस्मिन् सति? 'गोस्वामिनि' सूर्ये । गोस्वामिनि कीदृशे? 'दृष्टमात्रे' सति । गोस्वामिनि किंलक्षणे? 'स्फुरिततेजसि' दीप्तकिरणे । कथम्? 'आशु' शीघ्रम् । चौरैः किंलक्षणैः? 'प्रपलायमानैः' नश्यद्भिः ॥

'मुच्लृंती मोक्षणे' ( सिद्ध० धा० ) मुच्(धातुः) 'वर्तमाना अन्ते' ( सिद्ध० ३-३-६ ) 'क्यः शिति' (सिद्ध० ३-४-७०) क्यप्रत्ययः यस्याकारलोपे संहितायां मुच्यन्ते इति सिद्धम् । उपद्रवानां शतानि उपद्रवशतानि तैः । गवां-किरणानां स्वामी गोस्वामी तस्मिन् । स्फुरितं तेजो यस्य स स्फुरिततेजास्तस्मिन् । केवलं दृष्टो दृष्टमात्रस्तस्मिन् । प्रपरोपसर्गाभ्यां परः 'अयि वयि पयि मयि ( नयि चयि रयि ) गतौ' ( सिद्ध० धा० ) अयधातुः आनश् प्रत्ययः शव् अतोम् आने मकारागमः रस्य लकारः संहितायां प्रपलायमान इति जातं मिसि प्रपलायमानैः । इति नवमकाव्यार्थः[1] ॥ ९ ॥

*He points out the advantage of seeing God.*

Oh Lord of the *Jinas*! No sooner art Thou merely seen by persons, than they are indeed spontaneously released from hundreds of horrible adversities, like the beasts from the thieves that are fleeing away at the mere sight of (1) the sun resplendent with lustre, (2) the king or (3) the cowherd shining with valour (9)

* * * *

त्वं तारको जिन! कथं भविनां त एव
त्वामुद्वहन्ति हृदयेन यदुत्तरन्तः? ।
यद्वा दृतिस्तरति यज्जलमेष नून-
मन्तर्गतस्य मरुतः स किलानुभावः ॥ १० ॥

---

१ 'काव्यार्थलेशः' इति ख-पाठः ।

क० वृ०—हे जिन! त्वं कथं भविनां तारकः, भवसीति शेषः। कर्त्रुक्तिः। संसारसागरात् तारयतीति तारकः–तारयिता 'भविनां'–संसारिणां भवो विद्यते येषां ते भविनस्तेषां जन्तूनां कथं भवसि यद्–यस्मात् त एव भविनोऽर्थात् संसाराब्धिमुत्तरन्तस्त्वां हृदयेन–चित्तेनोद्वहन्ति। कर्त्रुक्तिः। यदि त्वं प्राणिभिः स्वहृदयेनोह्यसे, तर्हि त्वं कथं तारकोऽभिधीयसे? । वहनीयस्य तारकत्वं न स्यादिति भावार्थः। यद्वा–अथवा घटतेऽयमर्थः। कथं घटते इति चेदुच्यते। नूनमेष दृतिर्यज्जलं तरति। कर्त्रुक्तिः। 'नूनं' निश्चयेन। 'एषः' सकललोकप्रत्यक्षः 'दृतिः' दइवडउइति नाम्ना लोकप्रसिद्धो यत् जलं–नद्यादिनीरं तरति किलेति सत्ये सोऽनुभावोऽन्तर्गतस्य मरुतः, वर्तते इति शेषः। 'अन्तर्गतस्य' मध्यगतस्य। अन्तर् गतः अन्तर्गतस्तस्य। 'मरुतः' वायोः। सोऽनुभावः–प्रभावोऽस्ति। न पुनर्दृतेरयम्–अत्रोपनयो यथा–दृतेस्तारको वायुः प्रोच्यते, तथा त्वमपि भव्यहृदयगतोऽपि तत्तारणात् तारकः प्रोच्यसे। इति दशमवृत्तार्थः॥ १०॥

मा० वि०—त्वं तारको जिनेति। हे जिन! त्वं भविनां–संसारिणां कथं तारकः। 'वर्तसे' इति क्रियापदम्। कः कर्ता? 'त्वम्'। किंलक्षणः? 'तारकः'। केषाम्? 'भविनाम्'। कथम्? 'कथम्'। ते एव भविनः त्वां यद्–यस्मात् कारणात् उत्तरन्तः अर्थात् संसारसमुद्रं हृदयेन उद्वहन्ति। 'उद्वहन्ति' इति क्रियापदम्। के कर्तारः? 'ते'। कथम्? 'एव'। कं कर्मतापन्नम्? 'त्वाम्'। केन? 'हृदयेन'। किं कुर्वन्तः? 'उत्तरन्तः'। कथम्? 'यत्'। यो यं उद्वहति स तस्य तारक इति प्रकटं, प्रत्युत ते भविनस्तव तारकाः त्वं भविनां तारकः कथमिति भावः। यद्वा इति पक्षान्तरे। दृतिः–प्रसेवकः यत् जलं प्रति तरति। 'तरति' इति क्रियापदम्। कः कर्ता? 'दृतिः'। किम्? 'जलम्'। एष स नूनं–निश्चितं अन्तर्गतस्य–मध्यगतस्य मरुतो–वायोः किल इति सत्ये अनुभावो–महिमा वर्तते। 'वर्तते' इति क्रियापदम्। कः कर्ता? 'अनुभावः'। कः? 'एषः'। कः? 'सः'। कस्य? 'मरुतः'। कीदृशस्य? 'अन्तर्गतस्य'। कथम्? 'नूनम्'। कथम्? 'किल'॥

तारयतीति तारकः। 'तॄ प्लवनतरणयोः' (सिद्ध० धा०) तॄधातुः णिग्प्रत्ययः 'णकतृचौ' (सिद्ध० ५–१–४८) णकप्रत्ययः 'वृद्धि०' (सिद्ध० ३–३–१) 'णेरनिटि' (सिद्ध० ४–३–८३) णिग्लोपः संहितायां सां तारक इति। भवः–संसारोऽस्ति येषां ते भविनस्तेषाम्। युष्मद्शब्दः द्वितीया अम् 'अमौ मः' (सिद्ध० २–१–१६) इति अमो म् आदेशः, 'त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्' (सिद्ध० २–१–११) इति युष्म इत्यवयवस्य त्व आदेशः, 'युष्मदस्मदोः' (सिद्ध० २–१–६) इति दकारस्य अकारः त्वस्य अलोपे संहितायां त्वामिति। उत्पूर्वो 'वहीं प्रापणे' (सिद्ध० धा०) वहूधातुः 'वर्तमाना अन्ति' (सिद्ध० ३–३–६) शव् अलोपे संहितायां उद्वहन्तीति जातम्। उत्पूर्वः 'तॄ प्लवनतरणयोः' तॄधातुः शतृप्रत्ययः शव् 'गुणः०' (सिद्ध० ३–३–२) प्रथमा जस् नोऽन्तः पूर्वाकारलोपः 'अघोषे प्रथमोऽशिटः'

१ 'भविनां कथं' इति ख–पाठः। २ 'भवतो' इति ख–पाठः।

( सिद्ध० १-३-५० ) इति दस्य तत्वे संहितायां उत्तरन्तः इति जातम् । एतद्शब्दः प्रथमा सिः 'आ द्वेरः' ( सिद्ध० २-१-४१ ) इति दस्य अकारः पूर्वाकारलोपश्च, 'तः सौ सः' ( सिद्ध० २-१-४२ ) इति तस्य सः सकारस्य षकारश्च, 'एतदश्च व्यञ्जनेऽनग्नञ्समासे' ( सिद्ध० १-३-४६ ) इति सूत्रेण सेर्लोपे एषः इति सिद्धम् । अन्तर् गतः अन्तर्गतस्तस्य । अन्तर् इति अव्ययम् । मरुत्शब्दः ङसि मरुतः इति सिद्धम् । तद्शब्दस्य एषवत् प्रक्रियायां सः इति जातं, परं सकारस्य षत्वं न ॥ इति दशमकाव्यार्थः[1] ॥ १० ॥

*He suggests the advantage of constant contemplation about God.*

Oh *Jina* ! How art Thou the saviour of mundane beings when ( on the contrary ) they themselves carry Thee in their hearts while crossing ( the ocean of existence ) ? Or indeed, that a leather bag ( for holding water ) floats in water, is certainly the effect of the air inside it (10)

卐 卐 卐 卐

अथ रागद्वेषयोः सद्भावे पारमार्थिकी देवस्य स्तोतव्यता न स्यादित्यतो रागद्वेषमूलयोः कामक्रोधयोः क्षयं जिनेश्वरकृतं प्रतिपादयिषुस्तदन्त(?)रागद्वेषक्षयसमुद्भूतं जिनप्रौढिमानं च विवक्षुः काव्यमेकमाह—

यस्मिन् हरप्रभृतयोऽपि हतप्रभावाः
सोऽपि त्वया रतिपतिः क्षपितः क्षणेन ।
विध्यापिता हुतभुजः पयसाऽथ येन
पीतं न किं तदपि दुर्धरवाडवेन ? ॥ ११ ॥

क० व्या०—यस्मिन् हरप्रभृतयोऽपि हतप्रभावा जाताः । कर्त्रुक्तिः । 'यस्मिन्' कन्दर्पे—कामविषये । 'हरप्रभृतयोऽपि' हर-हरि-विरञ्चिप्रमुखा अपि देवाः । हरः प्रभृतिर्येषु ते हरप्रभृतयः 'बहुव्रीहिः' । 'हतप्रभावाः' गतानुभावाः । कामेन हरादयोऽपि देवा विजिता इत्यर्थः । हतः प्रभावो येषां ते हतप्रभावाः 'बहुव्रीहिः' । 'जाताः' बभूवुः । यत्तदोर्नित्याभिसम्बन्धात् सोऽपि रतिपतिस्त्वया क्षणेन क्षपितः इत्यन्वयः । कर्मोक्तिः । सोऽपि विजितहराद्यनेकदेवोऽपि रतिपतिः—कामो रतेः पतिः रतिपतिः 'तत्पुरुषः' त्वया क्षपितः—क्षयं नीतः । 'क्षणेन' स्तोककालेन । उक्तार्थसमर्थनाय दृष्टान्तमाह—अथ येन पयसा हुतभुजो [2]विध्यापिताः । पयसेति कर्तृपदम् । हुतभुज इति कर्मपदम् । कर्मोक्तिः । अथशब्दोऽन्वादेशे । किञ्चिदुक्ते पुनर्विशेषकथनमन्वादेशः । येन । 'पयसा' पानीयेन । 'हुतभुजः' अग्नयः । हुतं भुञ्जन्ति इति हुतभुजः 'तत्पुरुषः' । 'विध्यापिताः' निर्वाणं प्रापिताः । उद्दूलाव्या इति लोकोक्तिः । दुर्धरवाडवेन तदपि किं न पीतम् ? अपि तु पीतम् । कर्मोक्तिः । तदपि पयो दुर्धरवाडवेन—उद्धतवडवाग्निना दुर्धरश्चासौ वाडवश्च दुर्धरवाडवस्तेन 'कर्म-

१ 'काव्यार्थदिक्' इति ख-पाठः । २ 'बध्यापिता' इति ग-घ-पाठः ।

धारयः'। किं न पीतं ?–किं न जठरान्तर्नीतं ? अपि तु तदपि पीतमेव। अग्निसमा हरादिदेवाः पानीयतुल्यः कामो वडवाग्निसदृशो भगवानिति उपनयस्तु सुकर एव। अस्मिन् वृत्ते कवीन्द्रेण–श्रीसिद्धसेनदिवाकरेण पठ्यमानेऽमोघवचःशक्त्या लिङ्गभेदोऽजायत। वीतरागस्वरूपाभिधानाच्च वीतरागस्य श्रीपार्श्वनाथस्य मूर्तिः प्रकटीबभूव। इत्येकादशवृत्तार्थः ॥११॥

मा०वि०—यस्मिन्निति। हे जिन! यस्मिन् रतिपतौ हरप्रभृतयः–ईश्वरादयो देवा हतप्रभावा वर्तन्ते। 'वर्तन्ते' इति क्रियापदम्। के कर्तारः? 'हरप्रभृतयः'। कस्मिन्? 'यस्मिन्'। किंलक्षणाः? हतः प्रभावो–महिमा येषां ते 'हतप्रभावाः'। सोऽपि रतिपतिः–कामः त्वया क्षणेन क्षपितः–क्षयं नीतः। 'क्षपितः' इति क्रियापदम्। केन कर्त्रा? 'त्वया'। कः कर्मतापन्नः? 'रतिपतिः'। केन? 'क्षणेन'। रतिपतिः कः? 'सः' प्रसिद्धावदातः। कथम्? 'अपि'। उक्तार्थं निदर्शनविषयीकरोति। अथेति युक्तार्थे। येन पयसा–पानीयेन हुतभुजो–वह्नयो विध्यापिताः। 'विध्यापिताः' इति क्रियापदम्। केन कर्त्रा? 'येन'। केन? 'पयसा'। के कर्मतापन्नाः? 'हुतभुजः'। तदपि पयो–जलं दुर्धरवाडवेन–उत्कटसमुद्राग्निना किं न पीतम्? अपि तु पीतम्। 'पीतम्' इति क्रियापदम्। कथम्? 'न'। अत्र काकुध्वनिना अङ्गीकार एवागतः। केन कर्त्रा? 'दुर्धरवाडवेन'। किं कर्मतापन्नम्? 'तत्'। कथम्? 'अपि'। अपिरत्रातिशयार्थः। अत्र काव्ये जिनेति सम्बोधनपदमध्याहार्यम्, अन्यथा भ्राजमानं न स्यात् ॥

यद्शब्दः सप्तमी ङौ 'आ द्वेरः' (सिद्ध० २–१–४१) इति दस्य अत्त्वे पूर्वाकारलोपे 'ङेः स्मिन्' (सिद्ध० १–४–८) इति ङेः स्मिन्आदेशे यस्मिन्निति सिद्धम्। हरः प्रभृतिर्येषां ते हरप्रभृतयः। प्रभृतिशब्दे 'जस्येदोत्' (सिद्ध० १–४–२२) इति एत्त्वे ए अय् कृते जसि हरप्रभृतयः इति सिद्धम्। हतः प्रभावो येषां ते हतप्रभावाः। युष्मद्शब्दस्य टायां 'टाङ्योसि यः' (सिद्ध० २–१–७) इति दस्य यत्वे त्वया इति सिद्धम्। अत्र विश्लेषादि पूर्वोक्तत्वान्नोक्तं, परमभ्यूह्यम्। रत्याः पतिः रतिपतिः। विपूर्वः 'ध्यै चिन्तायां' (सिद्ध० धा०) ध्यैधातुः 'आत् सन्ध्यक्षरस्य' (सिद्ध० ४–२–१) इति सूत्रेण आकारः णिग्प्रत्ययः 'अर्तिरीब्लीह्रीक्नूयिक्ष्माय्यातां पुः' (सिद्ध० ४–२–२१) इति पुगागमः क्तप्रत्ययः इडागमः सेट् 'क्तयोः' (सिद्ध० ४–४–४०) इति णिग्लोपः जसि विध्यापिता इति जातम्। हुतं भुञ्जन्तीति हुतभुजः। 'पीङ्च् पाने' (सिद्ध० धा०) पीधातुः क्तप्रत्ययः प्रथमा सौ क्लीबे पीतं इति जातम्। दुर्धरश्चासौ वाडवश्च दुर्धरवाडवस्तेन। इत्येकादशवृत्तव्याख्यालेशः ॥ ११ ॥

*He establishes the pre-eminence of Lord Pārs'va in virtue of His dispassion.*

Even that Cupid (the husband of *Rati*) who baffled even *Hara ( S'iva )* and others was destroyed within a moment by Thee. ( For ), is not even that water which extinguishes ( earthly ) conflagrations swallowed up by the irresistible submarine fire ? (11)

* * * *

स्वामिन्ननल्पगरिमाणमपि प्रपन्ना-
स्त्वां जन्तवः कथमहो हृदये दधानाः ।
जन्मोदधिं लघु तरन्त्यतिलाघवेन
चिन्त्यो न हन्त महतां यदिवा प्रभावः ॥ १२ ॥

क० वि०—हे स्वामिन्! जन्तवस्त्वां प्रपन्ना हृदयेऽनल्पगरिमाणमपि त्वां दधाना अहो कथमतिलाघवेन जन्मोदधिं तरन्तीत्यन्वयः । कर्त्रुक्तिः । हे 'स्वामिन्' ! हे प्रभो! । 'जन्तवः' देहिनः । 'त्वां' भवन्तम् । 'प्रपन्नाः' स्वामित्वेनाश्रिताः सन्तः । 'हृदये' निजमानसे । 'अनल्पगरिमाणमपि' अतिवहुप्रौढिमानमपि । गुरोर्भावः गरिमा, न अल्पः अनल्पः, अनल्पो गरिमा यत्र सोऽनल्पगरिमा तं 'बहुव्रीहिः' । त्वाम् । 'दधानाः' धरन्तः । अहो इत्याश्चर्ये । कथमिति प्रश्ने । 'अतिलाघवेन' अल्पस्यापि भारस्याभावादतिलघुत्वेन । लघोर्भावः लाघवम्, अतिशयेन लाघवमतिलाघवं तेन । 'जन्मोदधिं' भवसमुद्रमित्यर्थः । जन्मैवोदधिः जन्मोदधिस्तं 'तत्पुरुषः' । 'लघु' शीघ्रम् । तरन्ति । ये महान्तं भारं वहन्ति ते कथं समुद्रं तरन्ति? । महदाश्चर्यमेतत् । यदिवा महतां प्रभावो हन्त न चिन्त्यो वर्तते । कर्त्रुक्तिः । 'यदिवा' अथवा । 'महतां' जगत्त्रयप्रकृष्टानाम् । 'प्रभावः' माहात्म्यम् । हन्तेति निश्चयेन । न चिन्त्यः चिन्तनार्हश्चिन्त्यो–न विचार्यः, मनसा महतां माहात्म्यं चिन्तयितुं न शक्यते, बहुत्वात् । इति द्वादशवृत्तभावार्थः ॥ १२ ॥

मा० वि०—स्वामिन्निति । हे स्वामिन्! अनल्पगरिमाणं अपि त्वां हृदये दधानाः प्रपन्ना जन्तवः जन्मोदधिं लघु–शीघ्रं यथा स्यात् तथा अहो आश्चर्यं कथं तरन्ति? 'तरन्ति' इति क्रियापदम् । के कर्तारः? 'जन्तवः' । किं कर्मतापन्नम्? 'जन्मोदधिं' भवसमुद्रम् । जन्तवः किं कुर्वाणाः? 'दधानाः' । कस्मिन्? 'हृदये' । कम्? 'त्वाम्' । त्वां कथम्भूतम्? गुरोर्भावो गरिमा गुरुत्वमित्यर्थः, न विद्यते अल्पो गरिमा यस्य सः अनल्पगरिमा तं 'अनल्पगरिमाणम्' । कथम्? 'अपि' । जन्तवः किंलक्षणाः? 'प्रपन्नाः' आश्रिताः। कथम्? 'लघु' । केन? 'अतिलाघवेन' अतिलघुतया । अयं भावः—लघुपदार्थं तुम्बादिकं हृदये दधानो जन्तुर्जलं तरति । अत्र–इह आश्चर्यम्-त्वां यद् अनल्पगरिमाणं हृदये दधाना जन्तवो जन्मोदधिं तरन्ति । इदं व्याख्यानं गुरुशब्दस्य द्व्यर्थत्वात् शब्दच्छलेन बोध्यं बहुपुद्गलोपचितः पदार्थो गुरुः, गृणाति तत्त्वमिति वा गुरुः इति गुरुशब्दस्य द्व्यर्थता । यदिवेति पक्षान्तरे । हन्त इति हर्षे । महतां प्रभावो–महिमा न चिन्त्यः–न चिन्तनीयः । 'चिन्त्यः' इति क्रियापदम् । कथम्? 'न' । कैः कर्तृभिः? 'पण्डितैः' (अध्याहार्यं पदमिदम्) । कः कर्मतापन्नः? 'प्रभावः' । केषाम्? 'महताम्' । कथम्? 'यदिवा' । कथम्? 'हन्त' । त्वमपि महान् वर्तसे तेन तवापि अचिन्त्यमहिमवत्त्वमिति भावः ॥

१ 'जगत्प्रकृष्टानाम्' इति ब–पाठः ।

'डुधांगक् धारणपोषणयोः' (सिद्ध० धा०) धाधातुः आनशप्रत्ययः । 'ह्वःशिति' (सिद्ध० ४-१-१२) द्वित्वं, 'ह्रस्वः' (सिद्ध० ४-१-३९) इति पूर्वस्य ह्रस्वत्वं 'द्वितीयतुर्ययोः पूर्वौ' (सिद्ध० ४-१-४२) इति पूर्वधस्य दत्वं, 'श्नश्चातः' (सिद्ध० ४-२-९६) इति आलोपः जसि दधाना इति जातम् । जन्म एव उदधिः जन्मोदधिस्तम् । अतिलघोर्भावोऽतिलाघवं तेनातिलाघवेन ॥ इति द्वादशकाव्यार्थलेशः ॥ १२ ॥

*Power of the great is unimaginable.*

Oh Master ! How do the beings who resort to Thee soon cross the ocean of births (and deaths) with the greatest ease, when they carry in their heart, Thee, that art excessively heavy (dignified)? Or why, prowess of the great is incomprehensible (12)

* * * *

क्रोधस्त्वया यदि विभो ! प्रथमं निरस्तो
ध्वस्तास्तदा बत कथं किल कर्मचौराः? ।
प्लोषत्यमुत्र यदिवा शिशिराऽपि लोके
नीलद्रुमाणि विपिनानि न किं हिमानी? ॥ १३ ॥

क० वृ०—हे विभो! यदि त्वया प्रथमं क्रोधो निरस्त इत्यन्वयः। कर्मोक्तिः। 'प्रथमं' पूर्वम् । त्वया यदि 'क्रोधः' कोपः । 'निरस्तः' मूलतोऽपि क्षिप्तः । तदा बत कर्मचौराः कथं ध्वस्ताः? । कर्मोक्तिः । तदा बतेत्यामन्त्रणे । हे स्वामिन्! त्वयेति शेषः । 'कर्मचौराः' कर्मतस्कराः । कर्माण्येव चौराः कर्मचौराः 'कर्मधारयः' । किलेति सम्भावनायाम् । कथमिति प्रश्ने । 'ध्वस्ताः' व्यापादिताः । हननं तु क्रोधाकुलचेतसो नरस्य स्यात्, त्वया तु क्रोधं विनाऽपि कर्मचौरा निहता इत्येतत् कथं सम्भाव्यत इत्यर्थः । यदिवा शिशिराऽपि हिमानी नीलद्रुमाणि विपिनान्यमुत्र लोके किं न प्लोषति? अपि तु प्लोषति । कर्त्रुक्तिः । 'यदिवा' अथवा । 'शिशिराऽपि' शीतलस्वभावाऽपि । 'हिमानी' महद् हिमम् । नीलाः—शाद्वला द्रुमाः—तरवो यत्र तानि नीलद्रुमाणि 'बहुव्रीहिः' । 'विपिनानि' वनानि । 'अमुत्र' अस्मिन् । 'लोके' विश्वे । 'किं न प्लोषति?' किं न दहति? । अपि तु हिमानी शीतस्वरूपाऽपि वनानि दहत्येव प्रसिद्धमेतद् । इति त्रयोदशवृत्तार्थः ॥ १३ ॥

मा० वि०—क्रोधस्त्वयेति । हे विभो! यदि त्वया क्रोधः प्रथमं निरस्तः—क्षिप्तः । 'निरस्तः' इति क्रियापदम् । केन कर्त्रा? 'त्वया' । कः कर्मतापन्नः? 'क्रोधः' । कथम्? 'प्रथमं' पूर्वम् । बत इति आश्चर्ये । तदा त्वया किल इति सत्ये कर्मचौराः कथं ध्वस्ताः? —हताः?, क्रोधं विना हननासम्भवात्, ततोऽयं प्रश्नगर्भवाक्यार्थः । 'ध्वस्ताः' इति क्रियापदम् । केन कर्त्रा? 'त्वया' । के कर्मतापन्नाः? 'कर्मचौराः' । कथम्? 'तदा' । कथम्?

'बत' । कथम्? 'किल' । उक्तमर्थं दृष्टान्तयति–यदिवेति पक्षान्तरे । अमुत्र लोके–अस्मिन् लोके शिशिराऽपि हिमानी नीलद्रुमाणि विपिनानि प्रति किं न प्लोषति? अपि तु प्लोषत्येव–दहत्येव । 'प्लोषति' इति क्रियापदम् । कथम्? 'न' । का कर्त्री? 'हिमानी' महद् हिमं हिमानी । कानि कर्मतापन्नानि? 'विपिनानि' वनानि । हिमानी किंलक्षणा? 'शिशिरा' शीतला । कथम्? 'अपि' । विपिनानि किंलक्षणानि? नीला द्रुमा येषु तानि 'नीलद्रुमाणि' ॥

निर्पूर्वः 'असूच् क्षेपणे' ( सिद्ध० धा० ) अस्(धातुः) क्तप्रत्ययः प्रथमा सिः निरस्तः इति सिद्धम् । ध्वंसूङ् धातुः, क्तप्रत्ययः, 'नो व्यञ्जनस्यानुदितः' ( सिद्ध० ४–२–४५ ) इति न्लोपः, जसि ध्वस्ताः इति सिद्धम् । कर्माण्येव चौराः कर्मचौराः । 'उषू प्लुषू दाहे' ( सिद्ध० धा० ) प्लुषधातुः 'वर्तमाना तिव्' ( सिद्ध० ३–३–६ ) शव् 'लघोरुपान्त्यस्य' ( सिद्ध० ४–३–४ ) 'गुणः' ( सिद्ध० ३–३–२ ) प्लोषति । अदस्शब्दः सप्तम्यर्थे त्रप्रत्ययः 'आ द्वेरः' ( सिद्ध० २–१–४१ ) सस्य अः, 'लुगस्यादेत्यपदे' ( सिद्ध० २–१–११३ ) पूर्वस्याकारस्य लोपः, 'मोऽवर्णस्य' ( सिद्ध० २–१–४५ ) इति दस्य मः, 'मादुवर्णोऽनु' ( सिद्ध० २–१–४७ ) इति अकारस्य उकारः सप्तमी ङिलोपोऽव्ययत्वात् । नीलद्रुमशब्दः जस् 'नपुंसकस्य शिः' ( सिद्ध० १–४–५५ ) इति शिरादेशः, 'स्वराच्छौ' ( सिद्ध० १–४–६५ ) इति नोऽन्तः, 'नि दीर्घः' ( सिद्ध० १–४–८५) नकारस्य णकारः नीलद्रुमाणीति सिद्धम् । तथैव विपिनानीति ज्ञेयम् । महद् हिमं हिमानी । हिमशब्दात् 'यवयवनारण्यहिमाद् दोषलिप्युमहत्त्वे' (सिद्ध०२–४–६५) इति ङीप्रत्ययः आनागमश्च सिलोपे हिमानीति जातम् ॥ इति त्रयोदशकाव्यार्थः ॥ १३ ॥

How couldst Thou indeed ( manage to ) destroy *Karman*-thieves, when Thou, oh Omnipresent one ! hadst at the very outset annihilated anger ? Or why, does not the mass of snow though cold burn forests having dark-blue ( or fig ) trees ? (13)

✽ ✽ ✽ ✽

त्वां योगिनो जिन! सदा परमात्मरूप-
मन्वेषयन्ति हृदयाम्बुजकोशदेशे ।
पूतस्य निर्मलरुचेर्यदिवा किमन्य-
दक्षस्य सम्भवि पदं ननु कर्णिकायाः? ॥ १४ ॥

क० वृ०—हे जिन! सदा योगिनो हृदयाम्बुजकोशदेशे परमात्मरूपं त्वामन्वेषयन्तीत्यन्वयः । कर्तर्युक्तिः[1] । 'सदा' निरन्तरम् । 'योगिनः' मुनयः । योगो विद्यते येषां ते

1 कर्त्रुक्तिः इति ध–पाठः ।

योगिनः ('बहुव्रीहिः')। 'हृदयाम्बुजकोशदेशे' हृदयकमलकर्णिकामध्यदेशे । हृदयमेवाम्बुजं हृदयाम्बुजं 'कर्मधारयः', हृदयाम्बुजस्य कोशो हृदयाम्बुजकोशः 'तत्पुरुषः', हृदयाम्बुजकोशस्य देशो हृदयाम्बुजकोशदेशः 'तत्पुरुषः' तस्मिन् । 'परमात्मरूपं' परब्रह्मसमम् । परमश्चासावात्मा च परमात्मा 'कर्मधारयः', परमात्मैव रूपं यस्य स परमात्मरूपस्तं 'बहुव्रीहिः' । एवंविधं त्वामन्वेषयन्ति–मार्गयन्ति, ज्ञानचक्षुषा विलोकयन्तीत्यर्थः। नन्विति प्रश्ने । यदिवा पूतस्य निर्मलरुचेः अक्षस्य कर्णिकायाः अन्यत् पदं–स्थानं किं सम्भवि? अपि तु न । कर्तर्युक्तिः[१] । 'यदिवा' अथवा । 'पूतस्य' पवित्रस्य । 'निर्मलरुचेः' विमलकान्तेः । निर्मला रुचिर्यस्य स निर्मलरुचिस्तस्य 'बहुव्रीहिः' । एवंविधस्य अक्षस्य–कमलबीजस्य कर्णिकाया अन्यत् पदं–स्थानं किं सम्भवि? । सम्भवतीत्येवंशीलं सम्भवि । अशुद्धा क्रिया । कर्णिकेव अक्षस्य स्थानं स्यात्, नान्यदिति भावः । मालवदेशे हि पद्मस्य बीजं अक्ष इति व्यपदिश्यते जनैरिति महाकविना तथैवोचे । त्वमपि सकलकर्ममलापगमात् प्रकटीभूतजीवस्वरूपः । पूतो–निर्मलः चारुरुचिश्चासि, अतस्तवापि योगिहृदयाम्बुजान्नापरं स्थानं भवेत् । इति चतुर्दशवृत्तार्थः ॥ १४ ॥

मा० वि०—त्वां योगिन इति । हे जिन! त्वां प्रति योगिनः सदा हृदयाम्बुजकोशदेशे परमात्मरूपं अन्वेषयन्ति–विलोकयन्ति । 'अन्वेषयन्ति' इति क्रियापदम् । के कर्तारः? 'योगिनः' ध्यानिनः ; कं कर्मतापन्नम्? 'त्वाम्' । किंलक्षणम्? 'परमात्मरूपं' परब्रह्मरूपम् । कस्मिन्? हृदयमेवाम्बुज–कमलं तस्य कोशः–कर्णिका तस्य देशो–भागः तस्मिन् ('हृदया०') । यदिवेति युक्तार्थे । नूनम् इति सम्भावनायाम् । पूतस्य निर्मलरुचेरक्षस्य कर्णिकायाः सकाशात् किं अन्यत् पदं सम्भवि? अपि तु न सम्भवि–न सम्भवशीलम् । 'सम्भवि' इति क्रियापदम् । किं कर्तृ? 'पदं' स्थानम् । किम्? 'अन्यत्' पृथक् । कस्याः? 'कर्णिकायाः' बीजकोशात् । कस्य? 'अक्षस्य' कमलबीजस्य, लोके कमलकाकडीति प्रसिद्धस्य । अक्षस्य कथम्भूतस्य? 'पूतस्य' पवित्रस्य । पुनः किंलक्षणस्य 'निर्मलरुचेः' विमलकान्तेः । त्वमपि चाक्षः पूतश्च निर्मलरुचिश्च तेन तवापि योगिनां हृदयाम्बुजकोशदेशे एव स्थितिर्युक्तिमती । अक्षशब्देन जीवः कमलबीजं च, तेनार्थद्वैविध्येन व्याख्यानं शब्दच्छलेन ॥

परमश्चासौ आत्मा च परमात्मा, परमात्मनो रूपं–स्वरूपं तम् (तत्?) । 'पूङ्श् पवने' (सिद्ध० धा०), क्तप्रत्ययः, षष्ठ्यां पूतस्य । निर्मला रुचिर्यस्य स निर्मलरुचिस्तस्य । अन्यशब्दस्य प्रथमा सेः 'पञ्चतोऽन्यादेरनेकतरस्य दः' इति (सिद्ध० १–४–५८) सूत्रेण दत्वनिष्पत्तिः । सम्भवोऽस्यास्तीति सम्भवि न्लोपे सेर्लोपे च सिद्धिः । कर्णिकाशब्दः

[१] कर्त्रुक्तिः इति च–पाठ ।

पञ्चमी ङसि 'आपो ङितां यैयास्यास्याम्' (सिद्ध० १-४-१७) इति यास् आदेशे सस्य रुत्वे विसर्गत्वे च सिद्धिः कर्णिकायाः ॥ इति चतुर्दशकाव्यार्थप्रतीतिः ॥ १४ ॥

Oh *Jina!* the *Yogins* always search after Thee, the supreme soul in the interior of their heart-lotus-bud. Or why, is there any other abode for the pure and the unsulliedly splendid lotus-seed than the pericarp ?. (14)

※ ※ ※ ※

अथ जिनस्य ध्यातारोऽपि जिनसदृशा एव जायन्ते इति एतज्जिनमाहात्म्यं प्रतिपादयन् काव्यत्रयमाह[1]—

ध्यानाज्जिनेश! भवतो भविनः क्षणेन
देहं विहाय परमात्मदशां व्रजन्ति ।
तीव्रानलादुपलभावमपास्य लोके
चामीकरत्वमचिरादिव धातुभेदाः ॥ १५ ॥

क० वृ०—हे जिनेश! भवतो ध्यानाद् भविनो देहं विहाय परमात्मदशां क्षणेन व्रजन्तीत्यन्वयः । कर्तृयुक्तिः । जिनानामीशो जिनेशस्तस्य सम्बोधनं हे जिनेश! । 'भवतः' तव । 'ध्यानात्' जापात् । 'भविनः' प्राणिनः । भवो विद्यते येषां ते भविनः । 'देहं' शरीरम् । 'विहाय' त्यक्त्वा । 'परमात्मदशां' परमब्रह्मावस्थाम् । परमश्चासावात्मा च परमात्मा 'कर्मधारयः', परमात्मनो दशा परमात्मदशा तां 'तत्पुरुषः' । 'क्षणेन' क्षणात् । 'व्रजन्ति' प्राप्नुवन्ति । दृष्टान्तमाह—इव—यथा तीव्रानलादुपलभावमपास्य लोके धातुभेदाश्चामीकरत्वमचिराद् व्रजन्ति । कर्तृयुक्तिः । 'तीव्रानलात्' प्रबलाग्नियोगात् । तीव्रश्चासावनलश्च तीव्रानलस्तस्मात् 'कर्मधारयः' । 'उपलभावं' पाषाणत्वम् । उपलस्य भावः उपलभावः तं 'तत्पुरुषः' । 'अपास्य' परित्यज्य । 'लोके' जगति । 'धातुभेदाः' धातुतया प्रसिद्धाः पाषाणविशेषाः । धातूनां भेदा धातुभेदाः 'तत्पुरुषः' । 'चामीकरत्वं' स्वर्णत्वम् । चामीकरस्य भावः चामीकरत्वं तत् । 'अचिरात्' क्षणात् । 'व्रजन्ति' प्राप्नुवन्ति । इति पञ्चदशवृत्तार्थः ॥ १५ ॥

मा० वि०—ध्यानादिति । हे जिनेश! भविनो—जन्मिनो भवतः—तव ध्यानात् क्षणेन देहं विहाय—त्यक्त्वा परमात्मदशां व्रजन्ति—गच्छन्ति । 'व्रजन्ति' इति क्रियापदम् । के कर्तारः? 'भविनः' । काम्? 'परमात्मदशां' परब्रह्मावस्थाम् । किं कृत्वा? 'विहाय' । कं कर्मतापन्नम्? 'देहम्' । कस्मात्? 'ध्यानात्' । कस्य? 'भवतः' तव । केन? 'क्षणेन' । उक्तार्थं प्रतीतिविषयीकुरुते—इव—यथा धातुभेदा—धातुप्रकाराः तीव्रानलात्—तीव्राग्नेरुप-

---

१ '०मत्राह' इति ध-पाठः ।

लभावं-पाषाणत्वं अपास्य-त्यक्त्वा चामीकरत्वं-सुवर्णत्वं अचिरात्-शीघ्रं व्रजन्ति। 'व्रजन्ति' इति क्रियापदम्। के कर्तारः? 'धातुभेदाः'। किं कर्मतापन्नम्? 'उपलभावम्'। कस्मात्? 'तीव्रानलात्'। कस्मिन्? 'लोके'। कस्मात्? 'अचिरात्'॥

विपूर्वः 'ओहांक् त्यागे' (सिद्ध० धा०) हाधातुः, विहानं पूर्वं विहाय क्त्वाप्रत्ययः, 'अनञः क्त्वो यप्' (सिद्ध० ३-२-१५४) इति यबादेशः विहाय इति सिद्धम्। परमश्चासावात्मा परमात्मा, परमात्मनो दशा परमात्मदशा ताम्। 'व्रज गतौ' व्रज्धातुः 'वर्तमाना० अन्ति' (सिद्ध० ३-३-६) शव् अलोपे व्रजन्तीति जातम्। तीव्रश्चासौ अनलश्च तीव्रानलस्तस्मात्। उपलस्य भावः उपलभावस्तम्। अपासनं पूर्वं अपास्य अपपूर्वोऽसूधातुः 'असूच् क्षेपणे' (सिद्ध० धा०) दिवादिः प्राक्काले क्त्वाप्रत्ययः 'अनञः क्त्वो यप्' (सिद्ध० ३-२-१५४) इति यबादेशः, सिलोपः अपास्य इति सिद्धम्। चामीकरस्य भावः चामीकरत्वम्। धातूनां भेदाः धातुभेदाः॥ इति पञ्चदशवसन्ततिलकाच्छन्दोऽर्थलेशः॥ १५॥

*Meditation of Jina leads to equality with Him*

Oh Lord of the *Jinas*! by meditating upon Thee mundane beings attain in a moment the supreme status leaving aside their body, as is the case in this world with pieces of ore which soon cease to be stones and become gold by the application of severe heat. (15)

✻ ✻ ✻ ✻

अन्तः सदैव जिन! यस्य विभाव्यसे त्वं
भव्यैः कथं तदपि नाशयसे शरीरम्?।
एतत् स्वरूपमथ मध्यविवर्तिनो हि
यद् विग्रहं प्रशमयन्ति महानुभावाः॥ १६॥

क० वृ०—हे जिन! यस्यान्तर्-मध्ये त्वं भव्यैः विभाव्यसे-ध्यायसे। कर्मोक्तिः। तदपि शरीरं त्वं कथं नाशयसे? इति कर्त्रुक्तिः। तदेव स्थानं तव नाशयितुं न युक्तमिति भावः। अथ विग्रहशब्देन शरीरं युद्धं च प्रोच्यते इति विग्रहशब्दस्य द्व्यर्थतां विचिन्त्य स्तुतिकारः शरीरस्यायुक्ततां विग्रहशब्दच्छलेन परिहरन्नाह। अथ मध्यविवर्तिन एतत् स्वरूपं, वर्तते इति शेषः। कर्त्रुक्तिः। अथेति अथवा। द्वयोर्विरोधिनोर्मध्ये-अन्तर् विवर्तत इत्येवंशीलो मध्यविवर्ती, मध्यस्थः उभयपक्षतुल्यः, मध्ये विवर्तत इत्येवंशीलो मध्यविवर्ती तस्य 'तत्पुरुषः'। 'हि' निश्चयेन। 'एतत्' वक्ष्यमाणम्। 'स्वरूपं' स्वभावः। अस्ति। एतत् किमित्याह यद् विग्रहं-सङ्ग्रामं महानुभावा-महाप्रभावा महान् अनुभावो येषां ते महानुभावाः 'बहु-

१ 'अभयस्येति सिलोप.' इत्यधिकः ख-पाठ.।

व्रीहिः' मध्यस्था जनाः प्रशमयन्ति-उपशमयन्ति । कर्त्रुक्तिः । पक्षपातरहितानां हि मध्यविवर्तिनां युद्धप्रशमनं युक्तमेव, नायुक्तम् । हे जिन! त्वमपि च भव्यहृदयमध्यविवर्ती वर्तसे, अतस्तवापि मध्यविवर्तिन एतत् स्वरूपं युक्तमेव । यद् उक्तं विग्रहं-शरीरं शमयसि-नाशयसि ॥

ननु नाशयसे इत्यत्र 'चल्याहारार्थेङ्बुधयुधप्रुद्रुस्नुनशजनः' (सिद्ध० ३-३-१०८) इति लक्षणसूत्रेण निषेधादात्मनेपदं नश्धातोः कथं स्यात्? उच्यते—लक्षणसूत्रेण केवलस्य नश्धातोर्णिगन्तस्योपादानात्, इह तु णिगन्तान्नाशेः पुनर्णिगि आत्मनेपदं भविष्यति, तद्यथा—नश्यति शरीरं तन्नश्यद् भव्याः प्रयुञ्जते इति नाशयन्ति, नाशयन्ति शरीरं भव्यास्तान् शरीरं नाशयतस्त्वं प्रयुङ्क्षे इति भव्यैः शरीरं नाशयसे त्वम् । अत्र नाशेर्द्वितीयणिगन्तस्योभयपदित्वादात्मनेपदम्, अथवा नाशं कुर्वन्तीति नाशयन्ति नामधातोर्णिजि नाशयन्ति शरीरं भव्यास्तान् नाशयतस्त्वं प्रयुङ्क्षे इति भव्यैः शरीरं नाशयसे इति नाशनामधातोर्णिगन्तस्योभयपदित्वात् आत्मनेपदं नायुक्तम् । इति षोडशवृत्तार्थः ॥ १६ ॥

मा० वि०—अन्तः सदैव इति । हे जिन! यस्य अन्तर्-मध्ये भव्यैः त्वं विभाव्यसे-चिन्त्यसे । 'विभाव्यसे' इति क्रियापदम् । कैः कर्तृभिः? 'भव्यैः' । कः कर्मतापन्नः? 'त्वम्' । कथम्? 'अन्तर्' । कथम्? 'सदैव' । कस्य? 'यस्य' । तदपि शरीरं त्वं भव्यैः कथं नाशयसे? । 'नाशयसे' इति क्रियापदम् । कः कर्ता? 'त्वम्' । किं कर्मतापन्नम्? 'शरीरम्' । किंविशिष्टम्? 'तत्' । कथम्? 'अपि' । कैः? 'भव्यैः' । अथ मध्यविवर्तिनः पुरुषस्य एतत् स्वरूपं वर्तते । 'वर्तते' इति क्रियापदम् । किं कर्तृ? 'स्वरूपम्' । किम्? 'एतत्' । कस्य? 'मध्यविवर्तिनः' । 'हि' निश्चितम् । एतत् किम्? यत् महानुभावा विग्रहं प्रशमयन्ति । 'प्रशमयन्ति' इति क्रियापदम् । के कर्तारः? 'महानुभावाः' । कं कर्मतापन्नम्? 'विग्रहं' युद्धम् ॥

विपूर्वो भूधातुः सौत्रः 'भूङ् प्राप्तौ' (सिद्ध० धा०) णिङ् 'वर्तमाना से' (सिद्ध० ३-३-६), 'वृद्धि०' (सिद्ध० ३-३-१) आवादेशः, 'क्यः शिति' (सिद्ध० ३-४-७०), क्यप्रत्ययः, 'णेरनिटि' (सिद्ध० ४-३-८३) णिङ्लोपः विभाव्यसे इति जातम् । युष्मद्शब्दः प्रथमा सिः 'त्वमहं सिना प्राक् चाकः' (सिद्ध० २-१-१२) इति सिना सह त्वमादेशः । नश्यति शरीरं तत् नश्यत् भव्याः प्रयुञ्जते इति नाशयन्ति, तान् नाशयतः त्वं प्रयुनक्षि इति नाशयसे । 'नशौच् अदर्शने' (सिद्ध० धा०) नश्धातुः प्रयोक्तृव्यापारे णिग् पुनरपि णिग् एकस्य णिगो लोपः 'वर्तमाना से' शव्, 'वृद्धिः', 'गुणः०' (सिद्ध० ३-३-२) अयादेशः नाशयसे इति सिद्धम् । पुनर्णिग् यदा नानीयते तदा नाशयसीति स्यात्, 'चल्याहारार्थेङ्बुधयुधप्रुद्रुस्नुनशजनः' (सिद्ध० ३-३-१०८)

१ 'बहुत' इति क-ख-पाठः । २ 'यस्य शरीरस्य' इति ख-पाठः । ३ 'नशात् भव्याः' इति ख-पाठः ।

इति सूत्रेण परस्मैपदमेवायाति, पुनर्णिगानयने तु आत्मनेपदम् । भव्यैरिति पूर्ववाक्ये उत्तरवाक्येऽपि योज्यं इत्थमेव वाक्यसङ्गतेः । मध्ये विवर्तत इत्येवंशीलो मध्यविवर्ती तस्य । द्वयोर्युध्यमानयोर्मध्योपविष्टः पुरुषः दक्षिणपार्श्वस्थं वामपार्श्वस्थं च निषेधयति, तेन त्वं मध्यस्थः–अन्तर्वर्ती विग्रहं–युद्धं नाशयस्येव, तत्त्वतो मध्यवर्ती–रागद्वेषानाकुलितचित्तः, विग्रहं–शरीरं युद्धं च तेन शब्दच्छलेनेदं व्याख्यानम् । अथवा एतत् स्वरूपं वर्तते–महानुभावाः–महाप्रभावयुक्ता मध्यविवर्तिनो–रागद्वेषानाकुलिताः विग्रहं–युद्धं प्रशमयन्ति । मध्यविवर्तिनः इत्यत्र षष्ठयन्तजसन्तव्याख्यानयोर्मध्ये यत् सुन्दरं प्रतिभाति तद् ग्राह्यम् । प्रपूर्वः शम्धातुः णिग्प्रत्ययः 'वृद्धिः' 'गुणः' शव् अयादेशः 'वर्तमाना अन्ति' (सिद्ध० ३–३–६), 'शमोऽदर्शने' (सिद्ध० ४–२–२८) इति ह्रस्वः अलोपे प्रशमयन्तीति जातम् ॥ १६ ॥ इति षोडशकाव्यभावना ॥

Oh *Jina*! How is it that Thou destroyest that very body of the *Bhavyas* in the interior of which they enshrine Thee? Or why, this is the nature of an arbitrator (one who remains impartial), for, great personages bring the discord (the body) to an end [or this is the nature, for, great persons who are impartial remove the quarrel] (16)

※ ※ ※ ※

आत्मा मनीषिभिरयं त्वदभेदबुद्ध्या
ध्यातो जिनेन्द्र! भवतीह भवत्प्रभावः ।
पानीयमप्यमृतमित्यनुचिन्त्यमानं
किं नाम नो विषविकारमपाकरोति? ॥ १७ ॥

क० वृ०—हे जिनेन्द्र! अयमात्मा त्वदभेदबुद्ध्या इह मनीषिभिर्ध्यातो भवत्प्रभावो भवतीत्यन्वयः । कर्त्रुक्तिः । जिनानामिन्द्रो जिनेन्द्रः 'तत्पुरुषः', तस्य सम्बोधनं हे जिनेन्द्र! । 'त्वदभेदबुद्ध्या' त्वदेकबुद्ध्या । न विद्यते भेदो यस्यां सा अभेदा 'बहुव्रीहिः', अभेदा चासौ बुद्धिश्चाभेदबुद्धिः 'कर्मधारयः', त्वत्तोऽभेदबुद्धिस्त्वदभेदबुद्धिस्तया 'तत्पुरुषः' । 'अयं' स्वसंवेदनप्रत्यक्षः । 'आत्मा' जीवः । 'इह' जगति । 'मनीषिभिः' पण्डितैः । मनीषा–बुद्धिर्विद्यते येषां ते मनीषिणस्तैः । ध्यातः सन् भवत्प्रभावः–त्वत्समानमहिमा भवद्वत् प्रभावो यस्य सः 'बहुव्रीहिः' भवति । उक्तमर्थं दृष्टान्तेन द्रढयति—पानीयमपि अमृतमित्यनुचिन्त्यमानं किं (नाम) नो विषविकारमपाकरोति? अपि तु अपाकरोत्येवेति । कर्त्रुक्तिः । 'पानीयमपि' जलमपि । 'अमृतं' पीयूषम् । 'इति' एवम् । 'अनुचिन्त्यमानं' ध्यायमानं सत् । अनुचिन्त्यते इत्यनुचिन्त्यमानं 'तत्पुरुषः' (१) । नामेति प्रसिद्धार्थे (अव्ययम्) ।

१ '०तम्' इति क–पाठः ।

किं नो–निषेधार्थे विषविकारं विषस्य विकारः विषविकारः तं '[illegible]' अपाकरोति–निरस्यति? । अपि तु जलमप्यमृतबुद्ध्या ध्यायमानं विषविकारमपाकरोति । यतो हि केवलमपि श्वेतध्यानं सर्पादिविषापहाराय स्यात्, किं पुनः पानीयममृततया श्वेतध्यानेन ध्यायमानम्? । इति सप्तदशवृत्तार्थः ॥ १७ ॥

मा० वि०—आत्मेति । हे जिनेन्द्र! अयं आत्मा मनीषिभिः–पण्डितैः त्वदभेदबुद्ध्या (इह) ध्यातः सन् भवत्प्रभावो भवति । 'भवति' इति क्रियापदम् । कः कर्ता? 'आत्मा' । कः? 'अयम्' । किंलक्षणः? 'ध्यातः' । कैः? 'मनीषिभिः' । कया? त्वत्तोऽभेदबुद्धिस्त्वदभेदबुद्धिस्तया ('त्वद०') । आत्मा किंलक्षणः? 'भवत्प्रभावः' भवतः–तव प्रभावो यस्य स भवत्प्रभावः । उक्तमर्थं दृष्टान्तेन सुघटितं करोति–पानीयं अपि अमृतं इति अनुचिन्त्यमानं नामेति कोमलामन्त्रणे विषविकारं किं नो अपाकरोति? अपि तु अपाकरोति–निराकरोति । 'अपाकरोति' इति क्रियापदम् । किं कर्तृ? 'पानीयम्' । किं क्रियमाणम्? 'अनुचिन्त्यमानम्' । कथम्? 'इति' । इतीति किम्? इदं अमृतं, मन्त्रादिसंस्कृतत्वात् । कं कर्मतापन्नम्? 'विषविकारं' सर्पादिफेनादिविषविकारम् ॥

आत्मन्शब्दः प्रथमा सिः 'नि दीर्घः' ( सिद्ध० १–४–८५ ) इति दीर्घः सिलोपे, न्लोपश्च आत्मा इति सिद्धम् । मनीषा–बुद्धिरस्ति एषां ते मनीषिणस्तैः । इदम्शब्दः प्रथमा सिः 'अयमियं पुंस्त्रियोः सौ' ( सिद्ध० २–१–३८ ) इति सूत्रेण अयमादेशः । अभेदा चासौ बुद्धिश्च अभेदबुद्धिः, त्वत्तः अभेदबुद्धिस्त्वदभेदबुद्धिस्तया । युष्मद्शब्दः 'त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्' ( सिद्ध० २–१–११ ) इति सूत्रेण युष्म इत्यस्य त्वादेशः 'लुगस्यादेत्यपदे' ( सिद्ध० २–१–११३ ) इति अलोपे त्वद् इति सिद्धम्, अग्रे सुगमम् । 'ध्यैं चिन्तायाम्' ( सिद्ध० धा० ) ध्यैधातुः, 'आत् सन्ध्यक्षरस्य' ( सिद्ध० ४–२–१ ) इति आत्, क्तप्रत्ययः प्रथमा सिः ध्यातः इति सिद्धम् । (पां पाने) पाधातुः अनीयप्रत्ययः क्लीबे सौ पानीयं इति सिद्धम् । न म्रियते अनेन इति अमृतम् । 'मृंत् प्राणत्यागे' (सिद्ध० धा०) क्तप्रत्ययः, नञः अत्वे क्लीबे सौ अमृतं इति सिद्धम् । अनुपूर्वः 'चितुण् स्मृत्यां' ( सिद्ध० धा० ) चिन्त्धातुः 'चुरादिभ्यो णिच्' ( सिद्ध० ३–४–१७ ), 'उदितः स्वरान्नोऽन्तः' (सिद्ध० ४–४–९८) आनशप्रत्ययः क्यप्रत्ययः मागमः, 'णेरनिटि' (सिद्ध० ४–३–८३) णिलोपः क्लीबे सौ अनुचिन्त्यमानं इति जातम् । नो निषेधार्थे अव्ययम् । विषस्य विकारो विषविकारस्तम् । अपआउपसर्गाभ्यां परः कृधातुः 'वर्तमाना तिव्' ( सिद्ध० ३–३–६ ), 'कृग्तनादेरुः' ( सिद्ध० ३–४–८३ ) उप्रत्ययः, 'गुणः०' ( सिद्ध० ३–३–२ ), 'उश्नोः' ( सिद्ध० ४–३–२ ) इति उकारस्य गुणः अपाकरोति इति जातम् । इति सप्तदशकाव्यार्थे संक्षेपः[1] ॥ १७ ॥

---

१ 'काव्यार्थसंक्षेपः' इति ख–पाठः ।

*Efficacy of meditation is extra-ordinary*

Oh Lord of the *Jinas!* this soul, when meditated upon by the talented as non-distinct from Thee attains to Thy prowess in this world Does not even water when looked upon as nectar verily destroy the effect of poison? (17)

⁂ ⁂ ⁂ ⁂

त्वामेव वीततमसं परवादिनोऽपि
*नूनं विभो! हरिहरादिधिया प्रपन्नाः।
किं काचकामलिभिरीश! सितोऽपि शङ्खो
नो गृह्यते विविधवर्णविपर्ययेण? ॥ १८ ॥

क० वृ०—हे विभो! परवादिनोऽपि त्वामेव वीततमसं हरिहरादिधिया नूनं प्रपन्नाः, सन्तीति शेषः। कर्तर्युक्तिः[1]। हे नेतः!। 'परवादिनोऽपि' आसतां स्वतीर्थ्याः, परतीर्थिका अपि 'वादिनो' वादो विद्यते येषां ते वादिनः, परे च ते वादिनश्च परवादिनः 'कर्मधारयः'। त्वामेव 'वीततमसं' गतपापं गततमोगुणं वा वीतरागमित्यर्थः। वीतं तमो यस्मात् स वीतनमास्तं 'बहुव्रीहिः'। 'हरिहरादिधिया' विष्णुरुद्रादिबुद्ध्या। हरिश्च हरश्च हरिहरौ 'द्वन्द्वः' हरिहरावादी येषा ते हरिहरादयः 'बहुव्रीहिः', हरिहरादीनां धीर्हरिहरादिधीस्तया 'तत्पुरुषः'। 'नूनं' निश्चयेन। 'प्रपन्नाः' आश्रिता वर्तन्ते। त्वामेव वीतरागं परेऽपि वादिनोऽन्यदेवबुद्ध्या आराधयन्तः सन्तीत्यर्थः। उक्तार्थसमर्थनाय दृष्टान्तमुपदिशति–हे ईश! [3]सितोऽपि शङ्खः काचकामलिभिर्विविधवर्णविपर्ययेण किं नो गृह्यते? अपि तु गृह्यते। कर्मोक्तिः[2]। हे 'प्रभो'[4]!। 'सितोऽपि' धवलोऽपि। 'शङ्खः' कम्बुः। 'काचकामलिभिः' चक्षूरोगवद्भिः। काचकामलो विद्यते येषां ते काचकामलिनस्तैः 'बहुव्रीहिः'। 'विविधवर्णविपर्ययेण' विविधाश्च ते वर्णाश्च विविधवर्णाः 'कर्मधारयः', विविधवर्णानां विपर्ययः विविधवर्णविपर्ययस्तेन 'तत्पुरुषः' पीतादिनानावर्णविपर्यासेन किं नो गृह्यते? अपि तु चक्षूरोगिभिः धवलोऽपि शङ्खः पीतोऽयमित्यादिबुद्ध्यैव ज्ञायते। इत्यष्टादशवृत्तार्थः॥ १८ ॥

मा० वि०—त्वामेवेति। हे विभो! परवादिनोऽपि त्वां एव वीततमसं नूनं–निश्चितं हरिहरादिधिया प्रपन्नाः सन्ति। 'सन्ति' इति क्रियापदम्। के कर्तारः? 'परवादिनः'। कथम्? 'अपि'। परवादिनः किंलक्षणाः? 'प्रपन्नाः' आश्रिताः। कं कर्मतापन्नम्? 'त्वाम्'। कथम्? 'एव'। त्वां कथम्भूतम्? 'वीततमसं' वीतं–गतं तमः–अज्ञानं यस्य स वीततमास्तम्। कया? 'हरिहरादिधिया' हरिश्च हरश्च हरिहरौ, तौ आदी येषां ते हरिहरादयस्तेषां धीः–बुद्धिस्तया। उक्तमर्थं दृष्टान्तसङ्कलितं करोति—हे ईश! काचकामलिभिः पुरुषैः

[1] 'कर्त्रुक्ति' इति ख-पाठः। [2] 'इति कर्मोक्तिः' इति ख-पाठः। [3] 'शितोऽपि' इति घ-पाठः। [4] 'जिन!' इति ग-पाठः।

सितोऽपि शङ्खः विविधवर्णविपर्ययेण किं नो गृह्यते? अपि तु गृह्यते। 'गृह्यते' इति क्रियापदम्। कथम्? 'नो'। कैः? 'काचकामलिभिः' काचकामलो रोगोऽस्ति एषां ते काचकामलिनस्तैः। कः कर्मतापन्नः? 'शङ्खः'। किंलक्षणः? 'सितः' श्वेतः। कथम्? 'अपि'। केन? विविधाश्च ते वर्णाश्च विविधवर्णाः, विविधवर्णानां विपर्ययः विविधवर्णविपर्ययस्तेन ॥

प्रपूर्वः 'पदिंच् गतौ' (सिद्ध० धा०) पद्धातुः क्तप्रत्ययः, 'रदादमूर्च्छमदः क्तयोर्दस्य च' (सिद्ध० ४-२-६९) इति सूत्रेण क्तस्य नः दस्यापि नः जसि प्रपन्नाः इति जातम्। (ग्रहीश् उपादाने) ग्रह्धातुः 'वर्तमाना ते' (सिद्ध० ३-३-६), 'क्यः' शिति (सिद्ध० ३-४-७०) क्यः, 'ग्रहव्रश्चभ्रस्जप्रच्छः' (सिद्ध० ४-१-८४) इति य्वृत् रकारस्य ऋकारः। काचकामलरोगवन्तो जनाः सितमपि शङ्खादिपदार्थं पञ्चवर्णं पश्यन्ति, तथा परवादिनः त्वामेव हरिहरादिबुद्ध्या प्रपन्ना इत्यर्थः। इत्यष्टादशवृत्तार्थलेशः ॥ १८ ॥

Oh omnipotent Being! even the followers of the other (non-*Jaina*) schools of philosophy certainly resort to Thee alone, mistaking Thee for *Hari*, *Hara* and others—Thee from whom ignorance has departed. For, Oh God! is not even a white conch mistaken for one having various colours by those who suffer from *Kāchakāmala* (eye-diseases like colour-blindness)? (18)

卐 卐 卐 卐

धर्मोपदेशसमये सविधानुभावा-
दास्तां जनो भवति ते तरुरप्यशोकः।
अभ्युद्गते दिनपतौ समहीरुहोऽपि
किं वा विबोधमुपयाति न जीवलोकः? ॥ १९ ॥

क० वृ०—हे जिन! धर्मोपदेशसमये सविधानुभावात् तरुरप्यशोको भवतीत्यन्वयः। कर्तर्युक्तिः। 'धर्मोपदेशसमये' धर्मदेशनाक्षणे। धर्मस्योपदेशो धर्मोपदेशः 'तत्पुरुषः', धर्मोपदेशस्य समयो धर्मोपदेशसमयस्तस्मिन् 'तत्पुरुषः'। 'ते' तव। 'सविधानुभावात्' सविधं—समीपं तस्यानुभावः—प्रभावस्तस्मात्। सविधस्यानुभावः सविधानुभावस्तस्मात् 'तत्पुरुषः'। 'तरुरपि' वृक्षोऽप्यव्यक्तचेतनोऽपि। 'अशोको भवति' वृक्षो हि नाम्नाऽशोकः स्यात्। जनो—भव्यलोको व्यक्तचेतनस्त्वास्तां—दूरे तिष्ठतु। कोऽर्थः? जनस्त्वशोकः—शोकवर्जितो भवत्येव भवत्प्रभावादित्यर्थः। उक्तमर्थं दृष्टान्तेन समर्थयति। वा—अथवा दिनपतावभ्युद्गते जीवलोकः समहीरुहोऽपि विबोधं किं नोपयाति? अपि तूपयाति। कर्त्रुक्तिः। 'वा' अथवा। 'दिनपतौ' सूर्ये। दिनस्य पतिर्दिनपतिस्तस्मिन् 'तत्पुरुषः'। 'अभ्युद्गते' उदिते सति।

१ 'इति भावः' इति ख-पाठः। २ 'भावस्तत्पुरुषस्तस्मात्' इति घ-पाठ.। ३ 'चैतन्य' इति घ-पाठः। ४ 'पतिस्तत्पुरुषस्तस्मिन्' इति घ-पाठः।

'जीवलोकः' सकलविश्वप्राणिगणः । जीवैरुपलक्षितो लोकः 'मध्यमपदलोपी तत्पुरुषः'। 'समहीरुहोऽपि' सह महीरुहैः—वनस्पतिभिर्वर्तते यः स समहीरुहः 'बहुव्रीहिः' । विबोधं किं नोपयाति? अपि तु सूर्योदये पत्रसङ्कोचादिलक्षणां निद्रामपहाय वनस्पतयोऽप्यन्यप्राणिगण इव विबोधं गच्छन्ति । इत्येकोनविंशतितमवृत्तार्थः ॥ १९ ॥

मा० वि०—हे जिन! जनः आस्तां—दूरे तिष्ठतु । ते—तव सविधानुभावात् धर्मोपदेशसमये तरुरपि अशोको भवति । 'भवति' इति क्रियापदम् । कः कर्ता? 'तरुः' । कथम्? अपि । तरुः किंलक्षणः? न विद्यते शोको यस्य सः 'अशोकः' । कस्मात्? 'सविधानुभावात्' समीपमाहात्म्यतः । कस्य? 'ते' तव । कस्मिन्? 'धर्मोपदेशसमये' देशनाकाले । तत्त्वतः अशोकनामा तरुर्भवतीत्यर्थः । अथवा न विद्यते शोको यस्मादसौ अशोकः । अथ उपविष्टानां शोकनाशः स्यादित्यन्वर्थाश्रयणादशोकश्च । उक्तमर्थं दृष्टान्तेन सम्यक्करोति—वा—अथवा दिनपतौ अभ्युद्गते सति जीवलोकः किं विबोधं न उपयाति? अपि तु उपयाति । 'उपयाति' इति क्रियापदम् । कः कर्ता? 'जीवलोकः' । कथम्? 'न' । कं कर्मतापन्नम्? 'विबोधम्' । कस्मिन् सति? 'दिनपतौ' सति । किंलक्षणे? 'अभ्युद्गते' उदिते । जीवलोकः कीदृशः? 'समहीरुहः' सह महीरुहैः—वृक्षैर्वर्तते यः स समहीरुहः । कथम्? 'अपि' ॥

धर्मस्य उपदेशः धर्मोपदेशः, धर्मोपदेशस्य समयः धर्मोपदेशसमयस्तस्मिन् । सविधस्य अनुभावः सविधानुभावस्तस्मात् । आस्तां पूर्ववत् । दिनस्य पतिः दिनपतिस्तस्मिन् दिनपतौ । जीवैरुपलक्षितो लोको जीवलोकः । तथा तव समीपमाहात्म्यतो जनः अशोकः स्यादिति किं चित्रम्? । इति एकोनविंशतितमवृत्तव्याख्यानपद्धतिः ॥ १९ ॥

*Jina's vicinity averts sorrow.*

Leave aside the case of a human being, (for), even a tree becomes free from sorrow (*As'oka*) on account of its being in Thy proximity at the time Thou preachest religion. Aye, does not the world of living beings including even trees awake at the rise of the sun? (19)

✻ ✻ ✻ ✻

चित्रं विभो! कथमवाङ्मुखवृन्तमेव
विष्वक् पतत्यविरला सुरपुष्पवृष्टिः? ।
त्वद्गोचरे सुमनसां यदि वा मुनीश!
गच्छन्ति नूनमध एव हि बन्धनानि ॥ २० ॥

क० वृ०—हे विभो! एतच्चित्रम्—आश्चर्यं, वर्तते इति शेषः । तदेवाह—सुरपुष्पवृष्टिः अविरलाऽवाङ्मुखवृन्तमेव कथं विष्वक् पततीत्यन्वयः । कर्त्रुक्तिः । 'सुरपुष्पवृष्टिः' सुरमुक्तकुसुमवृष्टिः । पुष्पाणां वृष्टिः पुष्पवृष्टिः 'तत्पुरुषः', सुराणां पुष्पवृष्टिः सुरपुष्पवृष्टिः

'तत्पुरुषः'। 'अविरला' निरन्तरा। न विरला अविरला 'तत्पुरुषः'। 'अवाङ्मुखवृन्तमेव' अधोमुखबिन्टमेव यथा स्यात् तथा। अवाङ् मुखं एव अवाङ्मुखं, अवाङ्मुखं वृन्तं यत्र तत् 'बहुव्रीहिः'। अवाङ् इत्यव्ययमधोवाचकम्। 'विष्वक्' समन्तात्। गमनाद् भूमौ गच्छतीत्यर्थः। यदिवा हे मुनीश! मुनीनामीशो मुनीशस्तस्य सम्बोधनं 'तत्पुरुषः'। 'त्वद्गोचरे' भवद्विषये। तव गोचरस्त्वद्गोचरस्तस्मिन् 'तत्पुरुषः'। 'सुमनसां' भक्त(शुभ?)-चित्तानां देवानां वा। सुष्ठु मनो येषां ते सुमनसः 'बहुव्रीहिः' तेषाम्। 'नूनं' निश्चयेन। 'बन्धनानि' बन्धाः स्नेहाद्यान्तरबन्धनानि निगडादिबाह्यबन्धनानि चाध एव गच्छन्ति-अधस्तादेव यान्ति, नाशमुपयान्तीति यावत्। पुष्पाण्यपि हि सुमनसः प्रोच्यन्ते तासां बन्धनानि वृन्तानि त्वदग्रेऽधोमुखानि स्फुरन्ति। वा युक्तमधोमुखवृन्तपुष्पवृष्टिपतनम्। सुमनस्शब्दः स्त्रीलिङ्गो बहुवचनान्तश्च। इति विंशतितमवृत्तार्थः॥ २०॥

मा० वि०—चित्रमिति। हे विभो! एतच्चित्रं वर्तते। 'वर्तते' इति क्रियापदम्। किं कर्तृ? 'चित्रम्'। एतत् किम्? सुरपुष्पवृष्टिः अवाङ्मुखवृन्तमेव कथं पतति?। 'पतति' इति क्रियापदम्। का कर्त्री? 'सुरपुष्पवृष्टिः'। कथम्? 'अवाङ्मुखवृन्तम्'। सुरपुष्पवृष्टिः कथम्भूता? 'अविरला' घना, सच्छिद्रा न। कथम्? 'विष्वक्' समन्तात्। यदिवेति पक्षान्तरे। हे मुनीश! त्वद्गोचरे सुमनसां बन्धनानि नूनं-निश्चितं अध एव गच्छन्ति। 'गच्छन्ति' इति क्रियापदम्। कानि कर्तृणि? बन्धनानि। केषाम्? 'सुमनसां' सुष्ठु मनो येषां ते सुमनसस्तेषाम्। कथम्? 'अधः' नीचैः। कथम्? 'एव' त्वद्गोचरे सुमनसां स्नेहादिबन्धनानि त्रुट्यन्ति। पुष्पाण्यपि सुमनसस्तासामपि बन्धनानां अधःपतनं युक्तमेवेति भावः। सुमनस्शब्देन सहृदया जनाः पुष्पाणि च प्रोच्यन्ते। बन्धनशब्देन स्नेहनिगडादिना यन्त्रणं पुष्पाणां वृन्तं चोच्यते। अतोऽर्थद्वैविध्येन शब्दच्छलत इदं व्याख्यानम्॥

अवाङ् मुखानि येषां तानि अवाङ्मुखानि, अवाङ्मुखानि वृन्तानि यत्र तत् 'अवाङ्मुखवृन्तं' क्रियाविशेषणमिदम्। (विषु अञ्चतीति क्विपि विष्वग्) अव्ययत्वात् सेर्लोपः (?)। (पुष्पाणां वृष्टिः पुष्पवृष्टिः,) सुराणां पुष्पवृष्टिः सुरपुष्पवृष्टिः, अथवा सुरैः कृता पुष्पवृष्टिः सुरपुष्पवृष्टिः। तव गोचरः त्वद्गोचरस्तस्मिन्। 'गम्लृ गतौ' (सिद्ध० धा०) गम्धातुः अन्ति शव् 'गमिषद्यमश्छः' (सिद्ध० ४-२-१०६) इति सूत्रेण मस्य छः, 'स्वरेभ्यः' (सिद्ध० १-३-३०) इति छस्य द्वित्वं, 'अघोषे प्रथमोऽशिटः' (सिद्ध० १-३-५०) इति पूर्वछस्य चः शवः अलोपे गच्छन्तीति सिद्धम्। अधस् इत्यव्ययम्। इति विंशतितमकाव्यार्थे विचारः॥ २०॥

*Jina's presence is miraculous*

Oh pervader of the universe! it is a matter of surprise that uninterrupted shower of celestial blossoms falls all around with their stalks turned downwards; or why, (it is natural that) in Thy presence, oh master of saints! fetters (stalks) of the good-minded (flowers) (ought to) certainly fall down. (20)

* * * *

स्थाने गभीरहृदयोदधिसम्भवायाः
पीयूषतां तव गिरः समुदीरयन्ति ।
पीत्वा यतः परमसम्मदसङ्गभाजो
भव्या व्रजन्ति तरसाऽप्यजरामरत्वम् ॥ २१ ॥

क० वृ०—अत्र यत्तच्छब्दौ द्वावपि गम्यौ । हे विभो! यत् तव गभीरहृदयोदधिसम्भवाया गिरः पीयूषतां समुदीरयन्ति, श्रोतार इत्यर्थाद् गम्यते इत्यन्वयः । कर्त्रुक्तिः । 'समुदीरयन्ति' इति क्रियापदम् । के कर्तारः? 'श्रोतारः' । 'समुदीरयन्ति' वदन्ति । कां कर्मतापन्नाम्? 'पीयूषतां' अमृतत्वम् । पीयूषस्य भावः पीयूषता ताम् । कस्याः? 'गिरः' वाचः । गिरः कथम्भूतायाः? 'गभीरहृदयोदधिसम्भवायाः' गम्भीरहृदयाम्बुधिप्रभवायाः । हृदयमेवोदधिर्हृदयोदधिः 'कर्मधारयः', गभीरश्चासौ हृदयोदधिश्च गभीरहृदयोदधिः 'कर्मधारयः', गभीरहृदयोदधिः सम्भवो यस्याः सा गभीरहृदयोदधिसम्भवा तस्याः 'बहुव्रीहिः' । कस्य? 'तव' । कथम्? यत् तत् स्थाने वदन्ति, नास्थाने । स्थाने इत्यव्ययम् । पीयूषं समुद्रसम्भवं स्यात्, गीरपि हृदयादुत्पन्नेत्यर्थः । श्रोतारोऽपि तव गिरममृततया यत् कथयन्ति तत् स्थाने–युक्तमिति भावः । यतो भव्याः परमसम्मदसङ्गभाजस्तरसाऽप्यजरामरत्वं तां पीत्वा व्रजन्तीत्यन्वयः । कर्त्रुक्तिः । 'यतः' यस्माद्धेतोः । भव्याः कर्णाञ्जलिभिस्तां गिरमिति पदद्वयमध्याहार्यम् । 'पीत्वा' निपीय । 'परमसम्मदसङ्गभाजः' प्रकृष्टप्रमोदसंयोगवन्तः । परमश्चासौ सम्मदश्च परमसम्मदः 'कर्मधारयः', परमसम्मदस्य सङ्गः परमसम्मदसङ्गः 'तत्पुरुषः', परमसम्मदसङ्गं भजन्तीति परमसम्मदसङ्गभाजः 'तत्पुरुषः' । कथम्? 'तरसाऽपि' तत्कालमपि । 'अजरामरत्वं' जरामरणरहितत्वम् । जरा च मरश्च जरामरौ 'द्वन्द्वः', न विद्येते जरामरौ येषां ते अजरामराः 'बहुव्रीहिः', अजरामराणां भावोऽजरामरत्वं तद् । 'व्रजन्ति' प्राप्नुवन्ति । यथा अमृतपानेऽजरामरत्वं प्राप्यते तथा तव वचनश्रवणेऽप्यजरामरत्वं प्राप्यते, अतस्तव वागमृतमेवेति श्रोतारो युक्तमेव जल्पन्ति । इत्येकविंशतितमवृत्तार्थः ॥ २१ ॥

मा० वि०—स्थाने इति । हे जिन! स्थाने–युक्तं तव गिरः–वाण्याः बुधाः पीयूषतां समुदीरयन्ति–कथयन्ति । 'समुदीरयन्ति' इति क्रियापदम् । के कर्तारः? 'बुधाः' । कां कर्मतापन्नाम्? 'पीयूषताम्' अमृतत्वम् । कस्याः? 'गिरः' वचसः । कथम्? 'स्थाने' । स्थाने इति युक्तार्थे अव्ययम् । गिरः किम्भूतायाः? 'गभीरहृदयोदधिसम्भवायाः' गम्भीरहृदयसमुद्रोत्पन्नायाः । अन्याऽपि या सुधा सा समुद्रोत्पन्ना इयं तथात्वात् सुधि(घे)व उत्पन्नसम्यक्त्वादिगुणेन साम्यं कथयति । यतो–हेतोः भव्याः पीत्वा परमसम्मदसङ्गभाजः सन्तः तरसा–शीघ्रं अजरामरत्वं व्रजन्ति । 'व्रजन्ति' इति क्रियापदम् । के कर्तारः?

'भव्याः'। किं कर्मतापन्नम्? 'अजरामरत्वम्'। कथम्? 'तरसा' शीघ्रम्। किं कृत्वा? 'पीत्वा'। भव्याः किंलक्षणाः? 'परमसम्मदसङ्गभाजः' परमहर्षसङ्गभाजः॥

गभीरं च तत् हृदयं च गभीरहृदयं, गभीरहृदयमेव उदधिः गभीरहृदयोदधिः, गभीरहृदयोदधेः सम्भवा गभीरहृदयोदधिसम्भवा तस्याः। पीयूषस्य भावः पीयूषता ताम्। सम्पूर्वः उत्पूर्वः ईर्धातुः, 'चुरादिभ्यो णिच्' (सिद्ध० ३-४-१७), अन्यत् पूर्ववत्। 'पां पाने' (सिद्ध० धा०) पाधातुः क्त्वाप्रत्ययः, 'ईर्व्यञ्जनेऽयपि' (सिद्ध० ४-३-९७) इति सूत्रेण पीत्वा इति सिद्धम्। परमश्चासौ सम्मदश्च परमसम्मदः, परमसम्मदस्य सङ्गः परमसम्मदसङ्गः, तं भजन्तीति परमसम्मदसङ्गभाजः। जरा च मरश्च जरामरौ, न विद्येते जरामरौ येषां ते अजरामराः, अजरामराणां भावः अजरामरत्वं (तत्)। इत्येकविंशतितमवृत्तार्थः॥ २१॥

*Jina's sermon leads to immortality*

It is proper that Thy speech which springs up from the ocean of Thy grave heart is spoken of as ambrosia, for, by drinking it, the *Bhavyas* who (hence) participate in the supreme joy, quickly attain the status of permanent youth and immortality. (21)

* * * *

स्वामिन्! सुदूरमवनम्य समुत्पतन्तो
मन्ये वदन्ति शुचयः सुरचामरौघाः।
येऽस्मै नतिं विदधते मुनिपुङ्गवाय
ते नूनमूर्ध्वगतयः खलु शुद्धभावाः॥ २२॥

क० वृ०—हे स्वामिन्! अहं एवं मन्ये-एवं सम्भावयामि। शुचयः सुरचामरौघाः सुदूरमवनम्य समुत्पतन्तो वदन्तीत्यन्वयः। कर्त्रुक्तिः। 'सुरचामरौघाः' अमरचालव्यजनसमूहाः। सुराणां चामराणि सुरचामराणि 'तत्पुरुषः', सुरचामराणामोघाः सुरचामरौघाः 'तत्पुरुषः'। तवाग्रतः सुरकरधृतचामरश्रेणयः। 'शुचयः' पवित्रा निर्मला वा। 'सुदूरं' अतिशयेन दूरं यथा स्यादेवम्। 'अवनम्य' अधो नत्वा। अवनमनपूर्वमवनम्य 'तत्पुरुषः'(?)। 'समुत्पतन्तः' सम्यगूर्ध्वं-नभसि गच्छन्तः सन्तः। 'वदन्ति' ज्ञापयन्ति। किं तदित्याह—ये नरा अस्मै मुनिपुङ्गवाय नतिं विदधते इत्यन्वयः। कर्त्रुक्तिः। 'मुनिपुङ्गवाय' मुनिप्रकृष्टाय जिनेन्द्रायेति यावत्। मुनिषु पुङ्गवः मुनिपुङ्गवः 'तत्पुरुषः' तस्मै। 'नतिं' प्रणामम्। 'विदधते' कुर्वन्तीत्यर्थः। ते नरा नूनं शुद्धभावाः खलु ऊर्ध्वगतयो भवन्ति। कर्त्रुक्तिः। ते 'नराः' जनाः। 'नूनं' निश्चयेन। 'शुद्धभावाः'* विशुद्धचेतस्काः सन्तः। शुद्धो भावो येषां ते शुद्धभावाः 'बहुव्रीहिः'। खलु वाक्यालङ्कारे। 'ऊर्ध्वगतयः' ऊर्ध्वं सिद्धिलक्षणा गतिर्येषां ते ऊर्ध्वगतयः 'बहुव्रीहिः'।

अंसमद्वय् 'भवन्ति' इति शेषः। (अस्य भावः-) वयमपि शुद्धभावाः-धवलस्वभावाः सन्तो नत्वा ऊर्ध्वगतयः-उच्चैर्गतयो वर्तामहे। ऊर्ध्वशब्दे धकारो वकाराक्रान्तो विज्ञेयः, यदुक्तं शब्दप्रभेदे (श्लो० ५७)—"ऊर्ध्वशब्दो वकारवान्"। इति द्वाविंशतितमवृत्तार्थः ॥२२॥

मा० वि०—स्वामिन्निति। हे स्वामिन्! अहं मन्ये। 'मन्ये' इति क्रियापदम्। कः कर्ता? 'अहम्'। किं मन्ये तदाह—सुरचामरौघाः सुदूरं अवनम्य समुत्पतन्तो वदन्ति। 'वदन्ति' इति क्रियापदम्। के कर्तारः? 'सुरचामरौघाः'। किं कुर्वन्तः? 'समुत्पतन्तः' ऊर्ध्वं गच्छन्तः। किं कृत्वा? 'अवनम्य' नीचैः भूत्वा। कथम्? 'सुदूरम्' अतिशयेन (दूरम्)। सुरचामरौघाः किंलक्षणाः? 'शुचयः' पवित्रा उज्ज्वला वा। किं वदन्ति तदाह—ये भव्या अस्मै आश्वसेनये जिनेश्वराय नतिं विदधते। 'विदधते' इति क्रियापदम्। के कर्तारः? 'ये' भव्याः। कां कर्मतापन्नाम्? 'नतिम्'। कस्मै? 'अस्मै'। किम्भूताय? 'मुनिपुङ्गवाय' मुनिषु पुङ्गवः मुनिपुङ्गवस्तस्मै। ते भव्या नूनं-निश्चितम् ऊर्ध्वगतयः स्युः। 'स्युः' इति क्रियापदम्। के कर्तारः? 'ते'। किम्भूताः? 'ऊर्ध्वगतयः'। पुनः किम्भूताः? 'शुद्धभावाः' शुद्धो भावः-चित्ताभिप्रायो येषां ते शुद्धभावाः॥

सम्-उत्पूर्वो धातुः पत् शतृप्रत्ययः शव्, 'ऋदुदितः' (सिद्ध० १-४-७०) नोऽन्तः अलोपः जसि समुत्पतन्तः इति सिद्धम्। 'मनि बुधि च (बुधिं मनिंच्?) ज्ञाने' (सिद्ध० धा०) मन्(धातुः) 'वर्तमाना ए' (सिद्ध० ३-३-६). 'दिवादेः श्यः' (सिद्ध० ३-४-७२), 'लुगस्यादेत्यपदे' (सिद्ध० २-१-११३) अलुक्, मन्ये इति जातम्। चामराणां ओघाः चामरौघाः, सुराणां चामरौघाः सुरचामरौघाः। इदम्शब्दः चतुर्थी ङे, 'आ द्वेरः' (सिद्ध० २-१-४१), 'सर्वादेः स्मै स्मातौ' (सिद्ध० १-४-७) ङे स्मै आदेशः, 'अनक्' (सिद्ध० २-१-३६) इति इदम् अ आदेशः अस्मै इति जातम्। विपूर्वः धाधातुः '(वर्तमाना) अन्ते' (सिद्ध० ३-३-६), 'हवः शिति' (सिद्ध० ४-१-१२), 'द्वितीयतुर्ययोः पूर्वौ' (सिद्ध० ४-१-४२) धस्य दः, 'अनतोऽन्तोऽदात्मने' (सिद्ध० ४-२-११४) अन्ते इत्यस्य अते तथा 'श्नश्चातः' (सिद्ध० ४-२-९६) आलोपः, विदधते इति जातम्। ऊर्ध्वं गतयो येषां ते ऊर्ध्वगतयः। स्वयं अवनम्य समुत्पतन्तः सुरचामरौघा अनुकरणं कुर्वन्तः इति सूचयन्तीति भावः। इति द्वाविंशतितमकाव्यप्रपञ्चः ॥ २२ ॥

*The poet describes the fourth Prātihārya*

Oh Lord! I think, the clusters of the sacred (or bright) celestial chowries (*Chāmaras*) which first bend very low and then rise up proclaim that those pure-hearted persons who bow to (Thee) this master of the sages are sure to reach the highest grade (22)



१ 'रस्म भावोवद् (?) भवन्ति' इति क-पाठः, ग-पाठस्तु 'रमन्नवन्ति' इति।

श्यामं गभीरगिरमुज्ज्वलहेमरत्न-
सिंहासनस्थमिह भव्यशिखण्डिनस्त्वाम् ।
आलोकयन्ति रभसेन नदन्तमुच्चै-
श्चामीकराद्रिशिरसीव नवाम्बुवाहम् ॥ २३ ॥

क० वृ०—हे पुरुषोत्तम! श्यामं गभीरगिरमुज्ज्वलहेमरत्नसिंहासनस्थमिह भव्यशिखण्डिनस्त्वामालोकयन्तीत्यन्वयः। कर्त्रुक्तिः। श्यामः शामश्च शब्दावेकार्थौ, श्यामं–कृष्णवर्णं, कविसमये नीलकृष्णयोरेकत्वात् नीलवर्णम्। 'गभीरगिरं' मधुरशब्दम्। गभीरा गीर्यस्य स गभीरगीस्तं 'बहुव्रीहिः'। 'उज्ज्वलहेमरत्नसिंहासनस्थं' देदीप्यमानस्वर्णमिश्ररत्नसिंहासनस्थितम्! हेम च रत्नानि च हेमरत्नानि 'द्वन्द्वः', हेमरत्नानां सिंहासनं हेमरत्नसिंहासनं 'तत्पुरुषः', उज्ज्वलं च तद्धेमरत्नसिंहासनं च उज्ज्वलहेमरत्नसिंहासनं 'कर्मधारयः', उज्ज्वलहेमरत्नसिंहासने तिष्ठतीति उज्ज्वलहेमरत्नसिंहासनस्थः तं 'तत्पुरुषः'। 'भव्यशिखण्डिनः' भव्यमयूराः। शिखण्डाः–पिच्छानि विद्यन्ते येषां ते शिखण्डिनः 'बहुव्रीहिः'। भव्या एव शिखण्डिनो भव्यशिखण्डिनः 'कर्मधारयः'। इह–भरतमध्यभुवि त्वामालोकयन्ति। किमिवेत्याह—इव–यथा रभसेनोच्चैर्नदन्तं नवाम्बुवाहं शिखण्डिनश्चामीकराद्रिशिरसि आलोकयन्तीत्यन्वयः। कर्त्रुक्तिः। 'रभसेन' वेगेन। 'उच्चैर्नदन्तं' अतिशयेन गर्जन्तम्। 'चामीकराद्रिशिरसि' स्वर्णगिरिशिखरे। चामीकरस्याद्रिश्चामीकराद्रिः 'तत्पुरुषः', चामीकराद्रेः शिरश्चामीकराद्रिशिरस्तस्मिन् [1]'तत्पुरुषः'। 'नवाम्बुवाहं' नवमेघम्। अम्बु वहतीत्यम्बुवाहः, नवश्चासावम्बुवाहश्च नवाम्बुवाहः तं 'कर्मधारयः'। शिखण्डिन आलोकयन्ति इत्यत्रापि सम्बध्यते। तथा सिंहासनस्थं त्वां दृष्ट्वा भव्याः प्रमोदन्ते। यथा स्वर्णाचलशिरःस्थं मेघं दृष्ट्वा मयूराः प्रमोदं भजन्ते॥ इति त्रयोविंशतितमवृत्तपरमार्थः[2] ॥ २३ ॥

मा० वि०—श्याममिति। हे स्वामिन्! भव्यशिखण्डिनः त्वां आलोकयन्ति। 'आलोकयन्ति' इति क्रियापदम्। के कर्तारः? 'भव्यशिखण्डिनः'। भव्या एव शिखण्डिनो –मयूराः भव्यशिखण्डिनः। त्वां किम्भूतम्? 'श्यामम्'। पुनः किम्भूतम्? 'गभीरगिरं' गभीरा गीः–वाणी यस्य स गभीरगीस्तम्[3]। पुनः किम्भूतम्? 'उज्ज्वलहेमरत्नसिंहासनस्थं' हेम्ना उपलक्षितानि रत्नानि हेमरत्नानि, हेमरत्नानां सिंहासनं हेमरत्नसिंहासनं, उज्ज्वलं च तत् हेमरत्नसिंहासनं च उज्ज्वलहेमरत्नसिंहासनं, उज्ज्वलहेमरत्नसिंहासने तिष्ठतीति उज्ज्वलहेमरत्नसिंहासनस्थस्तम्। केन? 'रभसेन' आदरेण। इव–उत्प्रेक्ष्यते। चामीकराद्रिशिरसीव नवाम्बुवाहं आलोकयन्ति। 'आलोकयन्ति' इति क्रियापदम्। के कर्तारः? 'भव्याः' मनो-

१ 'चामीकराद्रिशिरसि' इत्यधिको ग–पाठः। २ 'वृत्तार्थः' इति ग–पाठः। ३ 'गभीरगिरं' इत्यधिकः ग–पाठः।

हराः । 'शिखण्डिनः' मयूराः । कं कर्मतापन्नम्? 'नवाम्बुवाहं' नवीनमेघम् । किं कुर्वन्तम्? 'नदन्तं' गर्जन्तम् । कथम्? 'उच्चैः' । कस्मिन्? 'चामीकराद्रिशिरसि' सुवर्णाचलशिखरे। अम्बुवाहं किंलक्षणम्? 'श्यामम्'। पुनः किंलक्षणम्? 'गभीरगिरं' गभीरस्तनितम्॥

स्थाधातुः डप्रत्ययः 'डित्यन्त्यस्वरादेः' ( सिद्ध० २-१-११४ ) इति आलोपः, संहितायां अमि स्थं इति निष्पत्तिः । आङ्पूर्वो लोकणधातुः चुरादिः 'वर्तमाना अन्ति' ( सिद्ध० ३-३-६ ), 'चुरादिभ्यो णिच्' (सिद्ध० ३-४-१७), शेषं पूर्ववत् । नद्धातुः शतृप्रत्ययः 'ऋदुदितः' ( सिद्ध० १-४-७० ) नोऽन्तः, शवप्रत्ययः अलोपे अमि नदन्तं इति जातम् । चामीकरस्य अद्रिः चामीकराद्रिः, चामीकराद्रेः शिरः चामीकराद्रिशिरस्तस्मिन् । नवश्चासौ अम्बुवाहश्च नवाम्बुवाहस्तम् । भगवतो मेघस्योपमानं, रत्नसिंहासनस्य मेरुशिरस उपमानम् । इति त्रयोविंशतितमवृत्तवृत्तिः ॥ २३ ॥

*The poet describes the fifth Prātihārya*

The *Bhavyas* here ardently look at Thee who art dark (in complexion), whose speech is grave and who art seated on a glittering golden lion throne studded with jewels, as is the case with the peacocks who eagerly look at the mightily thundering, dark and fresh cloud which has risen to the summit of the golden mountain ( *Meru* ) (23)



उद्गच्छता तव शितिद्युतिमण्डलेन
लुप्तच्छदच्छविरशोकतरुर्बभूव ।
सान्निध्यतोऽपि यदि वा तव वीतराग!
नीरागतां व्रजति को न सचेतनोऽपि? ॥ २४ ॥

क० वृ०—हे अर्हन्! तव शितिद्युतिमण्डलेनोद्गच्छताऽशोकतरुर्लुप्तच्छदच्छविर्बभूवेत्यन्वयः । कर्त्रुक्तिः । 'शितिद्युतिमण्डलेन' कृष्णकान्तिकलापेन, भामण्डलेनेति यावत् । शितिश्चासौ द्युतिश्च शितिद्युतिः 'कर्मधारयः', शितिद्युतेः मण्डलं शितिद्युतिमण्डलं [1]तेन 'तत्पुरुषः'। 'उद्गच्छता' ऊर्ध्वं गच्छता-प्रसरता। ऊर्ध्वं गच्छतीत्युद्गच्छत् तेन 'तत्पुरुषः' (?)। अशोकतरुः । अशोकश्चासौ तरुश्च अशोकतरुः 'कर्मधारयः' । 'लुप्तच्छदच्छविः' अपलपितपत्रप्रभः । छदानां छविः छदच्छविः 'तत्पुरुषः', लुप्ता छदच्छविर्यस्य सः 'बहुव्रीहिः' । 'बभूव' आसीत् । त्वत्तनुकान्त्या आच्छादितानि अशोकतरुपत्राणि रक्ततां तत्यजुरित्यर्थः । हे वीतराग! यदि वा तव सान्निध्यतोऽपि कः सचेतनोऽपि नीरागतां न व्रजति? अपि तु सर्वोऽपि व्रजतीत्यन्वयः । कर्त्रुक्तिः । हे 'वीतराग!'[2] वीतो-गतो रागो

१ '[illegible]' इति क-पाठः । २ '[illegible]' इति ख-पाठः ।

यस्मात् स वीतरागस्तस्य सम्बोधनं 'बहुव्रीहिः'। 'यदिवा' अथवा। 'तव साम्निध्यतोऽपि' त्वत्सामीप्यादपि। सन्निधेर्भावः साम्निध्यं ततः। अपिशब्दात् त्वद्वचनश्रवणात् त्वद्दर्शनाच्चेत्यपि ज्ञेयम्। 'सचेतनोऽपि' व्यक्तचेतनोऽपि। आस्तामचेतनोऽशोकः। सुखसाध्यान्यवर्णविधानः, किन्तु सचेतनोऽपि न परावर्तयितुं शक्यते इत्यपेरर्थः। सह चेतनया वर्तते यः स सचेतनः 'बहुव्रीहिः'। 'नीरागतां' निर्गतरागताम्। निर्गतो रागादिति नीरागः 'तत्पुरुषः', नीरागस्य भावो नीरागता ताम्। को न व्रजति? । अपि तु तव सामीप्यात् सर्वोऽपि सचेतनाचेतनो नीराग एव हि स्यात्। सचेतनो हि नीरागो-विगतस्नेहादिरागः स्याद्, अचेतनस्त्वशोको नीरागो-विगतरक्तवर्णः स्यात्। इति चतुर्विंशतितमवृत्तार्थः ॥ २४ ॥

मा० वि०—उद्गच्छतेति। हे प्रभो! तव शितिद्युतिमण्डलेन लुप्तच्छदच्छविरशोकतरुर्बभूव। 'बभूव' इति क्रियापदम्। कः कर्ता? 'अशोकतरुः'। किंलक्षणः? 'लुप्तच्छदच्छविः' लुप्ता छदच्छविः-पत्रकान्तिर्यस्य स लुप्तच्छदच्छविः। केन? 'शितिद्युतिमण्डलेन' श्यामद्युतिमण्डलेन। किं कुर्वता? 'उद्गच्छता' ऊर्ध्वं प्रसरता। 'यदिवा' इति पक्षान्तरे। हे वीतराग! तव सान्निध्यतः सचेतनोऽपि नीरागतां को न व्रजति? अपि तु सर्वोऽपि व्रजति। 'व्रजति' इति क्रियापदम्। कः कर्ता? 'सचेतनः'। कः? 'कः'। कथम्? 'न'। कथम्? 'अपि'। कां कर्मतापन्नाम्? 'नीरागताम्'। कुतः? 'सान्निध्यतः' सामीप्यतः। कस्य? 'तव' ॥

उद्गच्छत्शब्दः तृतीया टा संहितायां उद्गच्छता। द्युतीनां मण्डलं द्युतिमण्डलं, शिति च तत् द्युतिमण्डलं च शितिद्युतिमण्डलं तेन। 'भू सत्तायां' (सिद्ध० धा०) भूधातुः, 'परोक्षा णव्' (सिद्ध० ३-३-१२), द्विर्धातुः०' (सिद्ध० ४-१-१) द्वित्वं, 'भूस्वपोरदुतौ' (सिद्ध० ४-१-७०) इति पूर्वभू(भुवो) भः, 'द्वितीयतुर्ययोः पूर्वौ' (सिद्ध० ४-१-४२) भस्य बः, 'भुवो वः परोक्षाद्यतन्योः' (सिद्ध० ४-२-४३), बभूव इति जातम्। नीरागस्य भावो नीरागता ताम्। निरपूर्वो रागः 'रो रे लुग् दीर्घश्चादिदुतः' (सिद्ध० १-३-४१) इति रलोपः नेः दीर्घश्च। सह चेतनया वर्तते यः स सचेतनः। यदि अचेतनोऽशोकतरुर्लुप्तच्छदच्छविर्भवति, तदा सचेतनो जनस्तव साम्निध्यतो नीरागः कथं न भवतीति भावः। रागो रक्तत्वं स्नेहश्च, तेन शब्दच्छलेन व्याख्यानम्। इति चतुर्विंशतितमकाव्यार्थसङ्क्षेपः ॥ २४ ॥

*Even God's presence destroys passions*

The colour of leaves of the *As'oka* tree is obscured by the dark halo of the orb of Thy light *(Bhāmandala)* which is spreading above. Or why, oh passionless one! which animate being is not set free from attachment (and aversion) by the influence of Thy mere presence? (24)



१ 'तनोऽपि' इति ग-पाठः।

भो भो प्रमादमवधूय भजध्वमेन-
मागत्य निर्वृतिपुरीं प्रति सार्थवाहम् ।
एतन्निवेदयति देव! जगत्त्रयाय
मन्ये नदन्नभिनभः सुरदुन्दुभिस्ते ॥ २५ ॥

क० वृ०—मन्ये इत्यव्ययमुत्प्रेक्षायाम् । अहमेवं मन्ये-सम्भावयामि । हे देव! ते सुरदुन्दुभिरभिनभो नदन् जगत्त्रयायैतन्निवेदयति । कर्त्रुक्तिः । 'ते' तव । 'सुरदुन्दुभिः' देवदुन्दुभिः । दुन्दुभिशब्दः पुंलिङ्गो ज्ञेयः । सुराणां दुन्दुभिः सुरदुन्दुभिः 'तत्पुरुषः'। 'अभिनभः' अभि-व्याप्य नभः, नभसीत्यर्थः । नभोऽभि-लक्षीकृत्याभिनभः 'अव्ययीभावः । 'नदन्' शब्दं कुर्वन् । 'जगत्त्रयाय' विश्वत्रयाय । जगतां त्रयं जगत्त्रयं तस्मै 'तत्पुरुषः'[1]। एतत् पूर्वार्धोक्तं निवेदयति-उद्घोषयति। किं तदित्याह-भो भो प्रमादं अवधूय आगत्य निर्वृतिपुरी प्रति सार्थवाहमेनं यूयं भजध्वमित्यन्वयः । कर्त्रुक्तिः[2] । भो भो इत्यामन्त्रणे । 'जगत्त्रयं'(?) लोका इत्यर्थाद् गम्यते । प्रमादं 'अवधूय' परित्यज्य । 'आगत्य' । 'निर्वृतिपुरीं प्रति' मोक्षपुरीं प्रति । निर्वृतिरेव पुरी निर्वृतिपुरी तां 'कर्मधारयः' । 'सार्थवाहं' सार्थं वाहयतीति सार्थवाहस्तम् । 'एनं' अमुं प्रत्यक्षं जिनम् । 'भजध्वं' समाश्रयध्वम् । यदि यूयं मुक्तिनगरीं प्रति यियासवस्तदाऽमुं जिनं मोक्षपत्तनं प्रति सार्थवाहं आगत्याश्रयतेति वदन्निव देवदुन्दुभिर्नभसि ध्वनन्नस्ति । इति पञ्चविंशतितमवृत्तार्थः ॥ २५ ॥

मा० वि०—भो भो इति । हे देव! अहं मन्ये एतद्वाक्यं पूर्ववत् । किं मन्ये इत्याह —ते-तव सुरदुन्दुभिर्नदन् सन् एतत् निवेदयति । 'निवेदयति' इति क्रियापदम् । कः कर्ता? 'सुरदुन्दुभिः' । किं कर्मतापन्नम्? 'एतत्' । कस्मै? 'जगत्त्रयाय' । किं कुर्वन्? 'नदन्' गर्जन् । कथम्? 'अभिनभः' आकाशं अभि-लक्षीकृत्य अभिनभः 'अव्ययीभावः'। एतत् किम्? 'भो भो लोकाः! प्रमादं अवधूय एनं जगदीश्वरं भजध्वं-श्रयध्वम् । 'भजध्वम्' इति क्रियापदम् । के कर्तारः? 'यूयम्' । कं कर्मतापन्नम्? 'एनम्' । किं कृत्वा? 'आगत्य' आगम्य । एनं किंलक्षणम्? 'सार्थवाहम्' । कां प्रति? 'निर्वृतिपुरीं प्रति' मोक्षपुरीं प्रति । किं कृत्वा? 'अवधूय' विहाय । कं कर्मतापन्नम्? 'प्रमादम्' ॥

भोस् इत्यव्ययमामन्त्रणे । 'वीप्सायां' (सिद्ध० ७-४-८०) द्वित्वम् । 'सो रुः' (सिद्ध० २-१-७२), 'अवर्णभोभगोऽघोर्लुगसन्धिः' (सिद्ध० १-३-२२) इति पूर्वभोसशब्दस्य रलोपः । अवपूर्वः धूधातुः क्त्वाप्रत्ययः, 'अनञः क्त्वो यप्' (सिद्ध०

१ 'तत्पुरुषस्तस्मै' इति घ-पाठः । २ 'कर्तर्युक्तिः' इति घ-पाठ । ३ 'सार्थं व(?)जगत्त्रय' इति घ-पाठः । ४ 'विहृताधिकार.' इत्यपि पाठः ।

३-२-१५४ ) इति यबादेशः अवधूय 'अव्ययस्य' ( सिद्ध० ३-२-७ ) सेर्लोपः । एतद्-शब्दः अम् 'त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते' ( सिद्ध० २-१-३३ ) इति एनद्-आदेशः, पूर्ववत् अमि एनम् । आङ्पूर्वो गम्धातुः क्त्वाप्रत्ययः यबादेशः 'यमि०' (सिद्ध० ४-२-५५) इति सूत्रेण मलोपः, 'ह्रस्वस्य तः पित्कृति' ( सिद्ध० ४-४-११३ ) इति तागमः सिलोपः, आगत्य इति जातम् । निर्वृतिश्चासौ पुरी च निर्वृतिपुरी ताम् । सार्थान् वाहयतीति सार्थवाहस्तम् । निपूर्वो विद्धातुः 'वर्तमाना तिव्' (सिद्ध० ३-३-६) णिग्प्रत्ययः, 'गुणः०' ( सिद्ध० ३-३-२ ), शेषं पूर्ववत् । निवेदयति इति जातम् । जगतां त्रयं जगत्त्रयं तस्मै । मन्ये पूर्ववत् । सुराणां दुन्दुभिः-पटहः सुरदुन्दुभिः । इति पञ्चविंशतितमकाव्यार्थभावना ॥ २५ ॥

*The seventh Prātihārya viz., the celestial drum like the previous objects is suggestive*

Oh God! I believe that the celestial drum which is resounding in the sky announces to the three worlds—Haloo, Haloo, shake off idleness, approach ( this God ) and resort to Him—the leader of the caravan leading to ( proceeding towards ) the city of the final emancipation ( 25 )

* * * *

उद्द्योतितेषु भवता भुवनेषु नाथ!
तारान्वितो विधुरयं विहिता[१]धिकारः ।
मुक्ताकलापकलितोच्छ्वसितातपत्र-
व्याजात् त्रिधा धृततनुर्ध्रुवमभ्युपेतः ॥ २६ ॥

क० वृ०—हे नाथ! भवता भुवनेषु उद्द्योतितेषु विहिताधिकारस्तारान्वितो विधुरयं त्रिधा धृततनुः मुक्ताकलापकलितोच्छ्वसितातपत्रव्याजादभ्युपेतोऽस्तीत्यन्वयः । कर्त्रुक्तिः । हे विभो! । 'भवता' त्वया । 'भुवनेषु' बहुवचननिर्देशात् त्रिषु जगत्सु । 'उद्द्योतितेषु' प्रकाशितेषु सत्सु । 'विहिताधिकारः' निष्पादितव्यापारः । विहितोऽधिकारो यस्य सः 'बहुव्रीहिः' । 'विहताऽधिकारः' इति पाठे तु विशेषेण हतो-विनाशितोऽधिकारो यस्य स विहताधिकारः सन् । ताराभिः अन्वितः—सहितः तारान्वितः 'तत्पुरुषः' । 'विधुः' चन्द्रः । (कः ?) 'अयं त्रिधा धृततनुः' कृतमूर्तिः । धृता तनुर्येन स धृततनुः 'बहुव्रीहिः' । कथम् ? 'त्रिधा' त्रयः प्रकारा अस्येति त्रिधा (कथम् ?)। 'ध्रुवं' निश्चयेन । 'मुक्ताकलापकलितोच्छ्वसितातपत्रव्याजात्'

१ 'बहुव्रीहिः' इत्यधिको ग-पाठश्चिन्तनीयः ।

मौक्तिकनिकरसहितोल्लसितच्छत्रत्रयच्छलात् । मुक्तानां कलापो मुक्ताकलापः 'तत्पुरुषः', मुक्ताकलापेन कलितानि मुक्ताकलापकलितानि 'तत्पुरुषः', आतपात् त्रायन्त इत्यातपत्राणि 'तत्पुरुषः', उच्छ्वसितानि च तान्यातपत्राणि उच्छ्वसितातपत्राणि 'कर्मधारयः', मुक्ताकलाप-कलितानि च तानि उच्छ्वसितातपत्राणि च मुक्ताकलापकलितोच्छ्वसितातपत्राणि 'कर्मधारयः', मुक्ताकलापकलितोच्छ्वसितातपत्राणां व्याजं मुक्ताकलापकलितोच्छ्वसितातपत्रव्याजं तस्मात् 'तत्पुरुषः' । नेदं समुक्ताकलापमातपत्रत्रयं, किन्तु सपरिवारो विधुस्त्रिमूर्तिरभ्यु-पेतः-त्वामाश्रितः । अयं भावः-त्वया जगत्सु प्रकाशितेषु सत्सु विफलीभूतनिजक्रियः मुक्ताकलापोपलक्षितच्छत्रच्छद्मना नूनं चन्द्रस्ताराभिरन्वितस्त्रिमूर्तिस्त्वां सेवते । इति षड्-विंशतितमवृत्तार्थः ॥ २६ ॥

भा० वि०—उद्द्योतितेष्विति । हे नाथ! अयं विधुर्ध्रुवं त्वां अभ्युपेतः-आश्रितः । 'अभ्युपेतः' इति क्रियापदम् । कः कर्ता? 'विधुः' चन्द्रः । कः? 'अयम्' । किंलक्षणः? 'तारान्वितः' । ताराभिरन्वितस्तारान्वितः । कथम्भूतः? 'धृततनुः' । धृता तनुः-शरीरं येन स धृततनुः । कथम्? 'त्रिधा' । कस्मात्? 'मुक्ताकलापकलितोच्छ्वसितातपत्रव्या-जात्' मुक्तानां कलापः मुक्ताकलापः मुक्ताकलापेन कलितानि मुक्ताकलापकलितानि, उच्छ्वसितानि च तानि आतपत्राणि च उच्छ्वसितातपत्राणि, मुक्ताकलापकलितानि च तानि उच्छ्वसितातपत्राणि च मुक्ताकलापकलितोच्छ्वसितातपत्राणि, तेषां व्याजः-कपटं तस्मात् । विधुः किम्भूतः? 'विहताधिकारः' विहतः-उद्दलितः अधिकारो यस्य सः । केन? 'भवता' । केषु सत्सु? 'भुवनेषु सत्सु । किंलक्षणेषु? 'उद्द्योतितेषु' । अत एव विहताधि-कारः ॥

उत्पूर्वो द्युत्धातुः क्तप्रत्ययः णिग्प्रत्ययः 'गुणः०' ( सिद्ध० ३-३-२ ) सुपि उद्द्यो-तितेषु सिद्धम् । त्रिप्रकारेण त्रिधा, त्रिशब्दो धाप्रत्ययः, अव्ययत्वात् विभक्तिलोपः । अभि-उपाभ्यां 'इणक् गतौ' ( सिद्ध० धा० ) इधातुः क्तप्रत्ययः सौ अभ्युपेतः इति सिद्धम् ॥ इति षड्विंशतितमकाव्यार्थचिन्ता कृता ॥ २६ ॥

*The poet delineates the eighth or the final Prātihārya*

Oh Lord! as the worlds have been (already) illuminated by Thee, this moon accompanied by stars, (being thus) deprived of her authority has certainly approached Thee by assuming the three bodies in the disguise of the (three) canopies which are shining on account of their being adorned by a cluster of pearls. (26)

* * * *

अथ रत्नादिनिर्मितप्राकारत्रयमध्यस्थायित्वं सुरेन्द्रवन्द्यत्वं चेति (प्रभोः) लोकोत्तरमतिशयद्वयं काव्यद्वयेन वर्णयन्नाह—

स्वेन प्रपूरितजगत्त्रयपिण्डितेन
कान्ति-प्रताप-यशसामिव सञ्चयेन ।
माणिक्य-हेम-रजतप्रविनिर्मितेन
सालत्रयेण[1] भगवन्नभितो विभासि ॥ २७ ॥

क० वृ०—हे 'भगवन्'! भगोऽस्यास्तीति भगवान् तस्य सम्बोधनम् । त्वं सालत्रयेणाभितो विभासि । कर्त्रुक्तिः । 'सालत्रयेण' वप्रत्रिकेण । शालानां त्रयं सालत्रयं 'तत्पुरुषः' तेन[2] । किंलक्षणेन सालत्रयेण? 'माणिक्यहेमरजतप्रविनिर्मितेन' नीलरत्नस्वर्णरूप्यकृतेन' माणिक्यानि च हेम च रजतं च माणिक्यहेमरजतानि 'द्वन्द्वः', माणिक्यहेमरजतैः प्रविनिर्मितं माणिक्यहेमरजतप्रविनिर्मितं [3]तेन 'तत्पुरुषः' । 'अभितः' समन्तात् । 'विभासि' शोभसे । इवोत्प्रेक्षते । कान्तिप्रतापयशसां सञ्चयेन त्वं विभासीत्यन्वयः । कर्त्रुक्तिः । ('कान्तिप्रतापयशसां') द्युतिप्रतापकीर्तीनाम् । 'सञ्चयेन' राशिना । विभासि । [4]पार्श्वनाथशरीरस्य नीलवर्णत्वादिह माणिक्येति पदं प्रयुक्तं कविना । प्रतापयशसी तु कविसमये हि क्रमेण तपनीयरूप्यवर्णौ गीयेते । कान्तिश्च प्रतापश्च यशश्च कान्तिप्रतापयशांसि तेषां 'द्वन्द्वः' । कथम्भूतेन कान्तिप्रतापयशसां सञ्चयेन? 'स्वेन' स्वकीयेन । पुनः किंलक्षणेन कान्तिप्रतापयशसां सञ्चयेन? 'प्रपूरितजगत्त्रयपिण्डितेन' व्याप्तविश्वत्रयपिण्डीभूतेन । प्रपूरितं—व्याप्तं जगत्त्रयं येन स प्रपूरितजगत्त्रयः, स चासौ पिण्डितश्च—पिण्डीभूतश्च तेन । जगतां त्रयं जगत्त्रयं 'तत्पुरुषः', प्रपूरितं जगत्त्रयं येन स प्रपूरितजगत्त्रयः 'बहुव्रीहिः', प्रपूरितजगत्त्रयश्चासौ पिण्डितश्च प्रपूरितजगत्त्रयपिण्डितः 'कर्मधारयः' तेन । व्याप्तविश्वत्रयपिण्डीभूतेन । इति सप्तविंशतितमवृत्ततात्पर्यार्थः[5] ॥ २७ ॥

मा० वि०—स्वेनेति । हे भगवन्! त्वं शालत्रयेण अभितः-समन्तात् विभासि । 'विभासि' इति क्रियापदम् । कः कर्ता? 'त्वम्' । केन? 'शालत्रयेण' वप्रत्रयेण । किंलक्षणेन? 'माणिक्यहेमरजतप्रविनिर्मितेन' माणिक्यं च हेम च रजतं च माणिक्यहेमरजतानि, तैः प्रविनिर्मितं तेन माणिक्यहेमरजतप्रविनिर्मितेन । इवोत्प्रेक्षते । स्वेन—स्वकीयेन कान्तिप्रतापयशसां सञ्चयेन विभासि । 'विभासि' इति क्रियापदम् । कः कर्ता? त्वम् । केन? 'सञ्चयेन' समूहेन । केषाम्? 'कान्तिप्रतापयशसां' कान्तिश्च प्रतापश्च यशश्च कान्तिप्रतापयशांसि तेषां कान्तिप्रतापयशसाम् । सञ्चयेन किंलक्षणेन? 'प्रपूरितजगत्त्रयपिण्डितेन' प्रपू-

१ 'शाल०' इत्यपि पाठः । २ 'तेन तत्पुरुषः' इति क-ख-पाठः । ३ 'तत्पुरुषस्तेन' इति घ-पाठः । ४ श्रीपार्श्वशरीरस्य इति घ-पाठः । ५ 'वृत्तार्थः' इति ग-पाठः ।

रितं जगत्रयं येन स प्रपूरितजगत्रयः, प्रपूरितजगत्रयश्चासौ पिण्डितश्च प्रपूरितजगत्रयपिण्डितस्तेन । जगत्रयं प्रपूर्य यो वर्धितः स पिण्डीभूत इत्यर्थः । माणिक्यानां रक्तत्वात् कान्तीनामुपमानं, हेम्नः पीतत्वात् प्रतापोपमानं, रजतस्य श्वेतत्वात् यशस उपमानम् । भगो-ज्ञानम् अस्यास्तीति भगवान्, तस्य सम्बोधनं हे भगवन्! ॥

भगशब्दः मतुप्प्रत्ययः 'मावर्णान्तोपान्तापञ्चमवर्गान् मतोर्मो वः' (सिद्ध० २-१-९४) मस्य वः, 'ऋदुदितः' (सिद्ध० १-४-७०) नोऽन्तः, 'पदस्य' (सिद्ध० २-१-८९) तलोपः, 'दीर्घङ्याब्व्यञ्जनात् सेः' ( सिद्ध० १-४-४५ ) इति सेर्लोपः भगवन् इति जातम् । 'ह्रस्वाद् ङणनो द्वे' ( सिद्ध० १-३-२७ ) इति सूत्रेण नकारस्य द्वित्वम् । विपूर्वो 'भाक् दीप्तौ' ( सिद्ध० धा० ) भाधातुः वर्तमाना मौ विभासि इति जातम् । इति सप्तविंशतितमकाव्यार्थसमासः ॥ २७ ॥

*The poet depicts the triad of ramparts*

Oh (all)knowing being ! Thou shinest in all directions on account of the triad of the ramparts beautifully made of rubies, gold and silver—the triad which is as it were the store of Thy lustre, prowess and glory, that fill up the three worlds and are amassed together ( 27 )

✠ ✠ ✠ ✠

दिव्यस्रजो जिन! नमत्त्रिदशाधिपाना-
मुत्सृज्य रत्नरचितानपि मौलिबन्धान् ।
पादौ श्रयन्ति भवतो यदि[1]वा परत्र
त्वत्सङ्गमे सुमनसो न रमन्त एव ॥ २८ ॥

क० वृ०—हे जिन! नमत्त्रिदशाधिपानां रत्नरचितानपि मौलिबन्धानुत्सृज्य दिव्यस्रजो भवतः पादौ श्रयन्ति । कर्तर्युक्तिः । 'नमत्त्रिदशाधिपानां' प्रणमद्देवेन्द्राणाम् । त्रिदशानामधिपास्त्रिदशाधिपाः 'तत्पुरुषः', नमन्तश्च ते त्रिदशाधिपाश्च नमत्त्रिदशाधिपाः 'कर्मधारयः' तेषाम् । 'रत्नरचितानपि' मणिविनिर्मितानपि । रत्नैः रचिता रत्नरचिताः 'तत्पुरुषः' तान् । 'मौलिबन्धान्' शिरोमुकुटबन्धनानि । मौलिषु बन्धाः मौलिबन्धाः 'तत्पुरुषः' तान् । मौलीनां बन्धा मौलिबन्धाः 'तत्पुरुषः' तान् इति वा । 'उत्सृज्य' त्यक्त्वा । 'दिव्यस्रजः' अद्भुतपुष्पमालाः । दिव्याश्च ताः स्रजश्च दिव्यस्रजः 'कर्मधारयः' । कर्त्रुक्तिः[2] । स्रज्शब्दः स्त्रीलिङ्गः । 'भवतः' तव । 'पादौ' चरणौ । 'श्रयन्ति' भजन्ते । यदिवा त्वत्सङ्गमे सुमनसः परत्र न रमन्त एवेत्यन्वयः । कर्त्रुक्तिः । 'यदिवा' अथवा । 'त्वत्सङ्गमे' सति ।

१ 'वाऽपरत्र' इत्यपि सम्भवति । २ 'कर्त्रुक्ति.' इति ग-पाठ. ।

तव सङ्गमस्त्वत्सङ्गमस्तस्मिन् 'तत्पुरुषः' । 'सुमनसः' विद्वांसः । 'परत्र न रमन्त एव' अन्यत्र रतिं ध्रुवं न लभन्ते । पुष्पाण्यपि हि सुमनसः प्रोच्यन्ते, अतो युक्तमेव तासां त्वदाश्रयणम् । इत्यष्टाविंशतितमवृत्तार्थः ॥ २८ ॥

मा० वि०—दिव्यस्रज इति । हे जिन! दिव्यस्रजः-दिव्यमाल्यानि नमत्रिदशाधिपानां मौलिबन्धान् उत्सृज्य भवतः पादौ श्रयन्ति । 'श्रयन्ति' इति क्रियापदम् । काः कर्त्र्यः? 'दिव्यस्रजः' । किं कृत्वा? 'उत्सृज्य' उन्मुच्य । कान् कर्मतापन्नान्? 'मौलिबन्धान्' मौलीनां-मुकुटानां बन्धास्तान् । किंलक्षणान्? 'रत्नरचितान्' रत्नै रचिता रत्नरचितास्तान् । केषाम्? 'नमत्रिदशाधिपानां' नमन्तश्च ते त्रिदशाधिपाश्च नमत्रिदशाधिपास्तेषाम् । कौ कर्मतापन्नौ? 'पादौ' । कस्य? 'भवतः' तव । यदि वेति युक्तार्थे । हे जिन! त्वत्सङ्गमे सति सुमनसो-देवाः सुहृदयाश्च जनाः अपरत्र-अन्यत्र न रमन्त एव-न क्रीडन्त एव । 'रमन्ते' इति क्रियापदम् । कथम्? 'न' । के कर्तारः? 'सुमनसः' । कस्मिन्? 'अपरत्र' । कस्मिन् सति? 'त्वत्सङ्गमे' सति । इमा अपि सुमनसः, ततस्त्वत्पादाश्रयणं युक्तमेवेति भावः । सुमनसः पुष्पाण्यपि उच्यन्ते । तेन शब्दच्छलेन व्याख्यानम् ॥

दिव्याश्च ताः स्रजश्च दिव्यस्रजः । उत्पूर्वः 'सृजंत् विसर्गे' ( सिद्ध० धा० ) सृज्-( धातुः ) क्त्वाप्रत्ययः यबादेशः 'अघोषे प्रथमोऽशिटः' ( सिद्ध० १-३-५० ) इति दस्य तः उत्सृज्य इति सिद्धम् । 'श्रिग् सेवायां' ( सिद्ध० धा० ) श्रिधातुः अन्ति शव्, 'गुणः०' ( सिद्ध० ३-३-२ ) अलोपे श्रयन्ति इति सिद्धम् । अपरस्मिन्निति अपरत्र सप्तम्यर्थे त्रप्रत्ययः सप्तमीलोपः अपरत्र । तव सङ्गमः त्वत्सङ्गमस्तस्मिन् त्वत्सङ्गमे । 'रमिं क्रीडायां' ( सिद्ध० धा० ) रम् अन्ते, शेषं पूर्ववत् । इत्यष्टाविंशतितमवृत्तार्थः ॥ २८ ॥

*The poet praises God by resorting to a rhetorical inconsistency*

Oh *Jina!* celestial garlands of the bowing lords of heavens leave aside their diadems, ( even ) though ( they are ) studded with jewels and resort to Thy feet. Or indeed the good-minded ( flowers ) do not find pleasure anywhere else when there is Thy company ( 28 )

❀ ❀ ❀ ❀

अथ जिनस्य परोक्षेऽपि ये जिनमतं प्रपद्यन्ते तानपि जिनो भवात् तारयतीत्याह—

त्वं नाथ! जन्मजलधेर्विपराङ्मुखोऽपि
यत् तारयस्यसुमतो निजपृष्ठिलग्नान्[2] ।
युक्तं हि पार्थिवनिपस्य सतस्तवैव
चित्रं विभो! यदसि कर्मविपाकशून्यः ॥ २९ ॥

क० वि०—हे नाथ! त्वं जन्मजलधेर्विपराङ्मुखोऽपि निजपृष्ठिलग्नान् असुमतो यत्

१ '०समकाव्यविवरणं' इति ख-पाठः । २ 'पृष्ठलग्नान्' इत्यपि पाठः ।

तारयसि । कर्त्रुक्तिः । इह जन्मजलधिशब्देन बहुलत्वाद् भवसमुद्र उच्यते ततोऽयमर्थः–हे नाथ! त्वम् । 'जन्मजलधेः' भवसमुद्रात् । जन्मैव जलधिर्जन्मजलधिः 'कर्मधारयः' तस्मात् । 'विपराङ्मुखोऽपि' प्रतिकूलोऽपि । विपराङ् मुखं यस्य सः 'बहुव्रीहिः' । 'असुमतो' जीवान् । असवो विद्यन्ते येषां ते असुमन्तस्तान् । 'निजपृष्ठिलग्नान्' जिनासेवितज्ञानादिमार्गानुगामिन इत्यर्थः । निजस्य पृष्ठिर्निजपृष्ठिः 'तत्पुरुषः', निजपृष्ठौ लग्ना निजपृष्ठिलग्नाः (तत्पुरुषः) तान् । 'यत् तारयसि' यत् पारं प्रापयसि । 'हि' निश्चितम् । पार्थिवनिपस्य सतस्तवैव तद् युक्तमस्तीत्यन्वयः । कर्त्रुक्तिः । एतदनन्तरोक्तं तव पार्थिवनिपस्य । पृथिव्याः स्वामी पार्थिवः, नितरां पातीति निपः 'तत्पुरुषः', पार्थिवश्चासौ निपश्च पार्थिवनिपः 'कर्मधारयः', पार्थिवान्–नृपान् नितरां पातीति (पार्थिव)निप इति वा तस्य–एवंविधस्य । 'सतः' विद्यमानस्य । युक्तम् । इयमत्र भावना–त्वं विश्वाधिपत्वात् षड्जीवनिकायपालनाच्च पार्थिवो निपश्च सन् पृष्ठलग्नानसुमतो यत् तारयसि तद् युक्तमेव । अन्योऽपि यः पार्थिवो–मृन्मयोऽपि पृथिव्या विकारः पार्थिवो निपो–घटः स्यात् समुद्रस्य जलोपरि स्थितः बुध्नतया विपराङ्मुखोऽपि–अनभिमुखोऽपि निजपृष्ठिलग्नान् जललग्नाद् भागादपरो भागो घटस्य निजं पृष्ठं तत्र लग्नान् नरान् यत् तारयसि तद् युक्तमेव । हे विभो! । इदं 'चित्रं' आश्चर्यम् । वर्तते इति शेषः । इदं किम्? यत् त्वं कर्मविपाकशून्योऽसीत्यन्वयः । कर्त्रुक्तिः । त्वं किंलक्षणः? 'कर्मविपाकशून्यः' कर्मणां–ज्ञानावरणादीनां अष्टानां विपाकः–फलोदयस्तेन शून्यो–रहितः । कर्मणां विपाकः कर्मविपाकः 'तत्पुरुषः', कर्मविपाकेन शून्यः कर्मविपाकशून्यः 'तत्पुरुषः' । घटस्तु कर्मविपाकशून्यो नास्ति, क्रियते इति कर्म, वि–विशेषेण पाकोऽग्निना विपाकः, कर्म च विपाकश्च कर्मविपाकौ 'द्वन्द्वः', कर्मविपाकाभ्यां शून्यः कर्मविपाकशून्यः 'तत्पुरुषः' । इतीदं चित्रम् । इत्येकोनत्रिंशत्तमवृत्तपरमार्थः[1] ॥ २९ ॥

मा० वि०—त्वं नाथेति । हे नाथ! यत् त्वं जन्मजलधेर्विपराङ्मुखोऽपि निजपृष्ठलग्नान् असुमतः–प्राणिनः तारयसि । 'तारयसि' इति क्रियापदम् । कः कर्ता? 'त्वम्' । कान् कर्मतापन्नान्? 'असुमतः' असवः–प्राणाः सन्ति येषां ते असुमन्तः तान् । किम्भूतान्? 'निजपृष्ठलग्नान्' निजस्य पृष्ठं निजपृष्ठं, निजपृष्ठे लग्ना निजपृष्ठलग्नास्तान् । त्वं किंलक्षणः? 'विपराङ्मुखः' पराङ्मुख इत्यर्थः । कस्मात्? 'जन्मजलधेः' जन्म एव जलधिः जन्मजलधिः तस्मात्, संसारसमुद्रादित्यर्थः । तत् पार्थिवनिपस्य सतस्तवैव युक्तम् । 'युक्तम्' इति क्रियापदम् । किं कर्तृ? 'तत्' । कस्य 'तव' । कथम्? 'एव' । तव किम्भूतस्य? 'पार्थिवनिपस्य' । किम्भूतस्य? 'सतः' विद्यमानस्य । पृथिव्याः स्वामी पार्थिवः, नितरां पाति–रक्षति इति निपः, पार्थिवश्चासौ निपश्च पार्थिवनिपस्तस्य, भगवत्पक्षे अयमर्थः । अथ अन्योऽपि यः पार्थिवो निपो–घटो भवति सोऽपि जलधेर्विपराङ्मुखः–विपरीतमुखः निजपृष्ठलग्नान् असुमतस्तारयति । 'तारयति' इति क्रियापदम् । कः कर्ता? 'पार्थिवनिपः'

१ 'वृत्तार्थः' इति ग-पाठः ।

पृथिव्या अयं विकारः पार्थिवः, पार्थिवश्चासौ निपश्च पार्थिवनिपः, मृन्मयो घटः पार्थिव-निपः । किंलक्षणः? 'विपराङ्मुखः' जलभागस्थितमुखतया स विपराङ्मुख एवोच्यते । कान् कर्मतापन्नान्? 'असुमतः' । किम्भूतान्? 'निजपृष्ठलग्नान्' । हे विभो! एतत् चित्रं । यतः कारणात् त्वं कर्मविपाकशून्यः असि । 'असि' इति क्रियापदम् । कः कर्ता? 'त्वम्' । किंलक्षणः? 'कर्मविपाकशून्यः' कर्मणां–ज्ञानावरणीयादीनां विपाकः-फलोपभोगस्तेन शून्यः–रहितः । पार्थिवघटस्तु कर्मभिः–कुम्भकारक्रियाभिः विपचनं–विपाकस्तेन शून्यो न भवति, अग्निविपाकयुक्तो भवतीत्यर्थः ॥

'तॄ प्लवनतरणयोः' (सिद्ध० धा०) तॄधातुः 'वर्तमाना सि' (सिद्ध० ३–३–६) णिग्प्रत्ययः, 'वृद्धिः०' (सिद्ध० ३–३–१), 'गुणः०' (सिद्ध० ३–३–२) शव्, ए अय्, तारयसि इति जातम् । युज्धातुः क्तप्रत्ययः 'चजः कगं' (सिद्ध० २–१–८६), जस्य ग् 'अघोषे प्रथमोऽशिटः' (सिद्ध० १–३–५०) गस्य कः क्लीबे सौ युक्तं इति जातम् । 'असक् भुवि' (सिद्ध० धा०) अस्धातुः शतृप्रत्ययः 'श्नास्त्योर्लुक्' (सिद्ध० ४–२–९०) अलोपः, षष्ठ्यां सतः इति जातम् । अस्धातुः 'वर्तमाना सि' (सिद्ध० ३–३–६) 'अस्तेः सि हस्त्वेति' (सिद्ध० ४–३–७३) इति सूत्रेण सस्य लुक्, असि इति जातम् । इति एकोनत्रिंशत्तमकाव्यार्थविवृतिः[1] ॥ २९ ॥

*Even one who indirectly follows Jina i.e. directly follows Jainism gets liberated*

Oh Lord! though Thou hast turned away Thy face from the ocean of births (and deaths), yet Thou enablest the living beings clinging to Thy back to cross it Nevertheless, this is justifiable in the case of Thine that art the good governor of the world (*Pārthiva-nipa*) This is also seen in the case of an earthen pot (*Parthiva-nipa*) But, this is strange that thou art not subject to the effects of *Karmans* (*Karma-vipāka-s'ūnya*) whereas that earthen pot is not so (There is another interpretation possible, viz, it is strange that Thou enablest the beings to cross *Samsāra* even when Thou art *Karma-vipāka-s'ūnya*, but such is not the case with an earthen pot which is not annealed (29)

❀ ❀ ❀ ❀

अथ विरोधालङ्कारगर्भां जिनस्याचिन्त्यस्वरूपतां त्याजयन्नाह—

विश्वेश्वरोऽपि जनपालक! दुर्गतस्त्वं
किं वाऽक्षरप्रकृतिरप्यलिपिस्त्वमीश! ।
अज्ञानवत्यपि सदैव कथञ्चिदेव
ज्ञानं त्वयि स्फुरति विश्वविकास[2]हेतुः ॥ ३० ॥

---

1 'विवृत्तिः' इति ख–पाठः । 2 'काशहेतुः' इति घ–पाठः ।

क० वृ०—हे जनपालक! त्वं विश्वेश्वरोऽपि दुर्गतोऽसि। कर्त्रुक्तिः। जनान् पालयतीति जनपालः 'तत्पुरुषः', जनपाल एव जनपालकस्तस्य सम्बोधनं हे 'जनपालक'!। 'त्वं विश्वेश्वरोऽपि' जगत्स्वाम्यपि। विश्वस्येश्वरो विश्वेश्वरः'। 'दुर्गतोऽसि' दरिद्रो वर्तसे। अपिशब्दाद् विरोधो गम्यते–यो विश्वेश्वरः स कथं दरिद्र इति व्यक्तं विरोधोद्भावनं, विरोधपरिहारस्त्वेवम्—दुःखेन गम्यते–उलङ्घ्यते इति दुर्गः–संसारस्तस्मात्। हे जनपालक! कोऽर्थः? हे 'जनपालक'! हे लोकरक्षक!। कुतः? 'दुर्गतः' संसारादित्यर्थः। यद्वा जनान् पातीति जनपः, 'तत्पुरुषः' तस्य सम्बोधनं हे जनप! त्वं अलकदुर्गतोऽसि। कर्त्रुक्तिः। अलकैः–चूर्णकुन्तलैः दुर्गतः–दरिद्रो रहितः इत्यर्थः, व्रतानन्तरं केशानामवृद्धेः। अलकैर्दुर्गतः अलकदुर्गतः 'तत्पुरुषः'। एवंविधो वर्तसे त्वम्। हे ईश! किं वा त्वं अक्षरप्रकृतिरपि अलिपिरसि?। कर्त्रुक्तिः। 'वा' अथवा। किमिति कुतः। 'अक्षरप्रकृतिरपि' श्रीपार्श्व इति नाम्नाऽक्षरस्वभावोऽपि। अक्षराणां प्रकृतिर्यत्र सः 'बहुव्रीहिः'। 'अलिपिः' लिपिरहितः। न विद्यते लिपिर्यस्य सः अलिपिः 'बहुव्रीहिः'। अपिशब्दादत्रापि विरोधो गम्यते, यथा योऽक्षरप्रकृतिः स्यात् सोऽलिपिः कथं स्यात् इति विरोधः। अथ विरोधपरिहारमाह—न विद्यते क्षरः–पतनं यस्याः सा अक्षरा 'बहुव्रीहिः', अक्षरा प्रकृतिर्यस्य सोऽक्षरप्रकृतिः 'बहुव्रीहिः'। मोक्षगतत्वादपतनस्वभावः, एवंविधस्त्वमलिपिः–न विद्यते लिपिः–कर्ममलसंसर्गो यस्य सोऽलिपिरिति न विरोधः। तथा अज्ञानवत्यपि त्वयि सदैव विश्वप्रकाशहेतुर्ज्ञानं कथञ्चिदेव स्फुरतीत्यन्वयः। कर्त्रुक्तिः। 'स्फुरति' इति क्रियापदम्। किं कर्तृ? 'ज्ञानम्'। कथम्भूतम्? 'विश्वविकासहेतुः' जगत्प्रकाशकारणम्। विश्वस्य विकासो विश्वविकासः 'तत्पुरुषः', विश्वविकासे हेतुर्विश्वविकासहेतुः 'तत्पुरुषः'। कस्मिन्? 'त्वयि'। किंविशिष्टे त्वयि? 'अज्ञानवति' अज्ञानमस्यास्तीति अज्ञानवान् तस्मिन्। कथम्? 'कथञ्चिदेव' कथमेव। अत्रापिशब्दाद् विरोधो गम्यते–योऽज्ञानवान् स्यात् तस्मिन् कथं ज्ञानं स्फुरतीति विरोधः। विरोधपरिहारस्त्वेवम्—त्वयि ज्ञानं स्फुरतीत्यन्वयः। कर्त्रुक्तिः। त्वयि किं कुर्वति? 'अवति' रक्षति। कान् कर्मतापन्नान्? 'अज्ञान्' मूर्खान् जानन्तीति ज्ञाः, न ज्ञा अज्ञाः 'तत्पुरुषः' तान्। इति त्रिंशत्तमवृत्तार्थः॥ ३०॥

मा० वि०—विश्वेश्वरोऽपीति। हे जनपालक! त्वं विश्वेश्वरोऽपि दुर्गतः किं वर्तसे?। 'वर्तसे' इति क्रियापदम्। कः कर्ता? 'त्वम्'। किम्भूतः? 'दुर्गतः'। त्वं पुनः किम्भूतः? 'विश्वेश्वरः'। अपिः विरोधद्योतकः। यो विश्वेश्वरः स दुर्गतः कथं भवति, यश्च दुर्गतः स विश्वेश्वरः कथम् इति विरोधः। अथ विरोधपरिहारमाह–हे जनप! त्वं विश्वेश्वरः सन् अलकदुर्गतोऽसि। अलकैः–चूर्णकुन्तलैः दुर्गतः–दरिद्री, रहित इत्यर्थः, व्रतानन्तरं केशाप्रवृद्धेः। वा–अथवा हे ईश! त्वं अक्षरप्रकृतिरपि अलिपिः किं वर्तसे?। 'वर्तसे' इति क्रिया-

१ 'ज्ञानं' इत्यधिको ब-पाठः।

पदम् । कः कर्ता ? 'त्वम्' । किम्भूतः ? अक्षरा–वर्णाः अकारककारादिकास्ते एव प्रकृतिः–मूलं यस्य सः अक्षरप्रकृतिः । पुनः त्वं किंलक्षणः ? 'अलिपिः' न लिपिः अलिपिः । अयमपि विरोधः । योऽक्षरप्रकृतिः सोऽलिपिः कथं स्यात्, यश्च अलिपिः सोऽक्षरप्रकृतिः कथम् ? इति विरोधः । अथ परिहारः–अक्षरं–मोक्षः स एव प्रकृतिः–स्वभावो यस्य सोऽक्षरप्रकृतिः । तथापि न लिपिः–अष्टकर्ममलरूपा यस्य सः अलिपिः । हे देव! त्वयि अज्ञानवति अपि ज्ञानं कथञ्चित् स्फुरति ? । काकूक्त्या प्रश्नः । 'स्फुरति' इति क्रियापदम् । किं कर्तृ ? 'ज्ञानम्' । कस्मिन् ? 'त्वयि' । ज्ञानं किंलक्षणम् ? विश्वस्य विकाशः–प्रकाशस्तस्य हेतुः–कारणम् । त्वयि किंलक्षणे ? अज्ञानं अस्त्यस्मिन् इति अज्ञानवति । अपिः विरोधे । कथम् ? 'सदैव' निरन्तरम् । अयमपि दृश्यमान एव विरोधः । अथ परिहारः–हे देव! त्वयि अज्ञान्–मूर्खान् अवति–रक्षति सति सदैव ज्ञानं स्फुरति । विशेषणं प्राग्वत् एव । 'स्फुरति' इति क्रियापदम् । किं कर्तृ ? 'ज्ञानम्' । कस्मिन् ? 'त्वयि' । त्वयि किं कुर्वति ? 'अवति' रक्षति । कान् कर्मतापन्नान् ? 'अज्ञान्' ॥

अव रक्षण-गति-कान्ति प्रीतितृप्तौ(स्यादिषु) इत्यर्थः । अव्धातुः शतृप्रत्ययः शव् 'लुगस्यादेत्यपदे' ( सिद्ध० २–१–११३ ) अलोपे सप्तमी ङौ, अवति इति जातम् । इति त्रिंशत्तमकाव्यार्थप्रपञ्चः ॥ ३० ॥

Oh Saviour of mankind ( *Jana-pālaka* )[1] though Thou art the master of the universe, yet Thou art poor ( *Durgata* ) Oh God ! although Thy very nature is a letter ( *Akshara* ), yet Thou art not forming an alphabet ( Thou art *Alipi* ). Moreover, how is it that knowledge the cause of the illumination of the universe permanently shines in Thee, even when Thou art ignorant ( *Ajñānavati* ) ?

These apparent contradictions can by removed be rendering the verse as follows —

Oh Saviour of mankind ! as Thou art the master of the universe, Thou art realized with great difficulty ( *Durgata* ) Or, Oh Saviour of mankind ( *Janapa* ) ! though Thou art the master of the universe, Thou art bald-headed ( *Alaka-durgata* ) Or Thou are the protector from the mundane existence ( *Durga* ) As Thy very nature is imperishable ( *Akshara* ), Thou art not enshrouded with *Karmans* ( *Alipi* ). And there is no wonder if knowledge, the cause of the illumination of the universe, always shines in Thee, even when Thou redeemest the ignorant ( *Ajñān avati* ) ( 30 ).



---

१ 'अव रक्षण–गति–कान्ति–प्रीति–तृप्ति–अवगमन–प्रवेश–श्रवण–स्वाम्यर्थ–याचन–क्रिया–इच्छा–दीप्ति–अवाप्ति–आलिङ्गन–हिंसा–दान–भाग–वृद्धिषु' इति पाणिनीयो धातुपाठः ।

अथ ये जिनस्य यामवज्ञां कुर्वन्ति सा जिने विफलीभूता सती तेषामेवार्थेऽनर्थाय स्यादित्येतत्कमठदृष्टान्तसूचकवृत्तत्रयेण ज्ञापयन्नाह—

प्राग्भारसम्भृतनभांसि रजांसि रोषा-
दुत्थापितानि 'कमठे'न शठेन यानि ।
छायाऽपि तैस्तव न नाथ! हता हताशो
ग्रस्तस्त्वमीभिरयमेव परं दुरात्मा ॥ ३१ ॥

क० वृ०—हे नाथ! शठेन कमठेन प्राग्भारसम्भृतनभांसि यानि रजांसि रोषादुत्थापितानि इत्यन्वयः। कर्मोक्तिः। कमठेनेति कर्तृपदम्। रजांसीति कर्मपदम्। 'शठेन' मायाविना कमठेन। 'प्राग्भारसम्भृतनभांसि' प्राग्भारेण-सामस्त्येन सम्भृतं-व्याप्तं नभो-गगनं यैस्तानि। प्राग्भारेण सम्भृतं प्राग्भारसम्भृतं 'तत्पुरुषः', प्राग्भारसम्भृतं नभो यैस्तानि 'बहुव्रीहिः'। 'रजांसि' धूलयः। 'रोषात्' कोपात्। 'उत्थापितानि' प्रकटीकृतानि। त्वां प्रतीत्यर्थाल्लभ्यते। तै रजोभिस्तव छायाऽपि न हता। कर्मोक्तिः। अत्र च्छायाशब्दः शोभावाची। वातोत्क्षिप्तानि रजांसि सूर्यातपच्छायां घ्नन्ति, सूर्यं वाऽच्छादयन्ति; तत्र तु छायाऽपि न हता, आस्तां तवावगुण्ठनम्। कमठोत्थापितानि रजांसि त्वय्यकिञ्चित्कराणि जातानीत्यर्थः। तु-पुनः परममीभिरयमेव हताशो दुरात्मा ग्रस्तः। कर्मोक्तिः। 'परं' केवलम्। अमीभिः रजोभिरयमेव कमठो हताशो-दुर्दैवो हता आशा यस्य सः 'बहुव्रीहिः'। 'दुरात्मा' पापात्मा। दुष्ट आत्मा यस्य सः 'बहुव्रीहिः'। 'ग्रस्तः' व्याप्तः। अत्र रजःशब्देन जीवस्यावगुण्ठनलक्षणया कर्माणि प्रोच्यन्ते। पापकर्मभिरयमेव व्याप्त इत्यर्थः। इत्येकत्रिंशत्तमवृत्तार्थः ॥ ३१ ॥

मा० वि०—प्राग्भारेति। हे नाथ! कमठेन यानि रजांसि उत्थापितानि। 'उत्थापितानि' इति क्रियापदम्। केन कर्त्रा? 'कमठेन'। कानि कर्मतापन्नानि? 'रजांसि' धूलयः। कस्मात्? 'रोषात्' क्रोधात्। किम्भूतानि? 'प्राग्भारसम्भृतनभांसि' प्राग्भारेण-बाहुल्येन सम्भृतं-पूर्णं नभो-व्योम यैस्तानि। तै रजोभिस्तव छायाऽपि-शरीरप्रतिकृतिरपि न हता। 'हता' इति क्रियापदम्। कैः कर्तृभिः? 'तैः'। का कर्मतापन्ना? 'छाया'। कथम्? 'अपि'। कथम्? 'न'। शरीरं दूरे तिष्ठतु, छायाऽपि नाक्रान्तेति भावः। तु-पुनः अमीभिः रजोभिः अयमेव दुरात्मा ग्रस्तः। 'ग्रस्तः' इति क्रियापदम्। कैः कर्तृभिः? 'अमीभिः' रजोभिः। कः कर्मतापन्नः? 'अयम्'। किंलक्षणः? हता आशा-वाञ्छा यस्य सः 'हताशः'। 'गोश्चान्ते ह्रस्वोऽनंशि समासेयोबहुव्रीहौ' (सिद्ध० २-४-९६) इति ह्रस्वः सौ हताशः। पुनः किंलक्षणः? दुर्-दुष्टः आत्मा यस्य स दुरात्मा ॥

रजस्शब्दः प्रथमाया जस् 'नपुंसकस्य शिः' (सिद्ध० १-४-५५) इति शिरादेशः, 'धुटां प्राक्' (सिद्ध० १-४-६६) इति नोऽन्तः, 'न्स्महतोः' (सिद्ध० १-४-८६) इति दीर्घः, 'शिड्हेऽनुस्वारः' (सिद्ध० १-३-४०) इति नस्यानुस्वारः, रजांसि इति सिद्धम् । तथैव नभांसि । उद्पूर्वः ष्ठाधातुः 'षः सोऽष्ट्यैष्ठिवष्वष्कः' (सिद्ध० २-३-९८) षस्य सः 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति ठस्य थः इति स्था जातं णिग्प्रत्ययः पुगागमः क्तप्रत्ययः इट् 'सेट्क्तयोः' (सिद्ध० ४-३-८४) इति णिग्लोपः जसि 'उदः स्थास्तम्भः सः' (सिद्ध० १-३-४४) इति सस्य लुक्, 'अघोषे प्रथमोऽशिटः' (सिद्ध० १-३-५०) इति दस्य तः, जसि उत्थापितानि जातम् । हन्धातुः क्तप्रत्ययः नस्य लोपः क्रियमाण सेर्लोपः । ग्रसधातुः क्तप्रत्ययः । अदस् शब्दः भिस् 'आ द्वेरः' (सिद्ध० २-१-४१), 'लुगस्यादेत्यपदे' (सिद्ध० २-१-११३), 'मोऽवर्णस्य' (सिद्ध० २-१-४५) अम इति जातं 'एद् बहुस्भोसि' (सिद्ध० १-४-४), 'बहुष्वेरीः' (सिद्ध० २-१-४९) अमी-भिरिति सूपपन्नम् । इति एकत्रिंशत्तमवृत्तस्य विवृतोऽर्थः ॥ ३१ ॥

*Those who try to harass God are caught in their own trap.*

Masses of dust which entirely filled up the sky and which were thrown up in rage by malevolent *Kamatha* failed to mar, oh Lord, even Thy loveliness. On the contrary, that very wretch whose hopes were shattered, was caught in this trap ( of masses of dust ) ( 31 )

* * * *

यद् गर्जदूर्जितघनौघमदभ्रभीम-
भ्रश्यत्तडिन्मुसलमांसलघोरधारम्[2] ।
दैत्येन मुक्तमथ दुस्तरवारि दध्रे
तेनैव तस्य जिन! दुस्तरवारिकृत्यम् ॥ ३२ ॥

क० वृ०—अथ दुस्तरवारि दैत्येन यन्मुक्तम् । कर्मोक्तिः । दुःखेन तीर्यत इति दुस्तरं, दुस्तरं च तद् वारि च दुस्तरवारि 'कर्मधारयः' । 'दैत्येन' कमठेन । 'मुक्तं' तवोपरि क्षिप्तम् । कथम्भूतं दुस्तरवारि? 'गर्जदूर्जितघनौघं' गर्जन्त ऊर्जिताः—प्रबलाः घनौघाः—मेघसमूहा यत्र तत् । घनानामोघाः घनौघाः 'तत्पुरुषः', ऊर्जिताश्च ते घनौघाश्च ऊर्जित-घनौघाः 'कर्मधारयः', गर्जन्त ऊर्जितघनौघा यत्र तद् 'बहुव्रीहिः' । पुनः किंलक्षणं दुस्त-रवारि? 'अदभ्रभीमभ्रश्यत्तडित्' अदभ्रा—अतिघना भीमा—रौद्राः भ्रश्यन्त्यो—नभसः पतन्त्यः तडितो—विद्युतो यत्र तत् । भ्रश्यन्तश्च तास्तडितश्च भ्रश्यत्तडितः 'कर्मधारयः', भीमाश्च ता भ्रश्यत्तडितश्च भीमभ्रश्यत्तडितः 'कर्मधारयः', अदभ्रा भीमभ्रश्यत्तडितो यत्र तद् 'बहुव्रीहिः' । पुनः किंविशिष्टं दुस्तरवारि? 'मुसलमांसलघोरधारम्' मुसलवन्मां-

१ 'वृत्तार्थः' इति घ-पाठः । २ नाकारोऽपि क्वचित् ।

सला मुसलमांसला लक्षणयाऽतिपुष्टा घोरा-रौद्रा धारा यत्र तत्। घोराश्च ता धाराश्च घोरधाराः 'कर्मधारयः', मुसलवन्मांसला मुसलमांसलाः 'तत्पुरुषः', मुसलमांसला घोरधारा यत्र तद् 'बहुव्रीहिः'। हे जिन! तेनैव तस्य दुस्तरवारिकृत्यं दध्रे इत्यन्वयः। कर्मोक्तिः। यत्तदोर्नित्याभिसम्बन्धात् तेनैव दुस्तरवारिणा। हे 'जिन'! हे वीतराग!। 'तस्य' दैत्यस्य। 'दुस्तरवारिकृत्यं' दुष्टतरवारिकृत्यं, दुष्टखड्गकार्यमिति यावत्। दुष्टश्चासौ तरवारिः दुस्तरवारिः 'कर्मधारयः', दुस्तरवारेः कृत्यं दुस्तरवारिकृत्यं 'तत्पुरुषः'। 'दध्रे' धृतम्, धातूनामनेकार्थत्वात् चक्रे इत्यर्थः। तदेव वारि तस्य सांसारिकदुःखहेतुत्वेन आत्मघाताय जातम्। इति द्वात्रिंशत्तमवृत्तभावः ॥ ३२ ॥

मा० वि०—यद् गर्जदूर्जितेति। हे जिन! यद् दैत्येन दुस्तरवारि मुक्तम्। 'मुक्तं' इति क्रियापदम्। केन कर्त्रा? 'दैत्येन'। किं कर्मतापन्नम्? 'दुस्तरवारि' दुःखेन तीर्यते इति दुस्तरं, दुस्तरं च तत् वारि च दुस्तरवारि। किम्? 'यत्'। कथम्भूतम्? 'गर्जदूर्जितघनौघं' (घनानामोघा घनौघाः मेघसमूहाः) ऊर्जिताश्च ते घनौघाश्च ऊर्जितघनौघाः, गर्जन्त ऊर्जितघनौघा [मेघसमूहा] यत्र तत् गर्जदूर्जितघनौघम्। पुनः किम्भूतम्? 'अदभ्रभीमं' अदभ्रं-प्रचुरं भीमं-भीषणं, अदभ्रं च तत् भीमं च अदभ्रभीमम्। पुनः किम्भूतम्? 'भ्रश्यत्तडित्' भ्रश्यन्त्यः-पतन्त्यः तडितो-विद्युतो यत्र तत् भ्रश्यत्तडित्। अथवा अदभ्राः-प्रचुराः भीमा-रौद्राः भ्रश्यन्त्यः तडितो यस्मिन् तत् इति अखण्डं पदम्। पुनः किम्भूतम्? 'मुसलमांसलघोरधारं मुसलवत् मांसलाः घोरा-रौद्रा धारा यस्मिन् तत्। अथ तेनैव दुस्तरवारिणा-दुस्तरजलेन। तस्य-कमठस्य दुस्तरवारिकृत्यं दध्रे-धृतम्। 'दध्रे' इति क्रियापदम्। केन कर्त्रा? 'तेन'। किं कर्मतापन्नम्? दुर्-दुष्टो यस्तरवारिः-खड्गस्तस्य कृत्यं-कार्यं ('दुस्तरवारिकृत्यम्')। कस्य? 'तस्य'। दुष्टतरवारिकार्यं छिदारूपं तेन स एव हत इति भावः। जिनस्य किमपि न हतम् ॥

'मुच्लृंती मोक्षणे' (सिद्ध० धा०) मुच्धातुः क्तः 'चजः कगं' (सिद्ध० २-१-८६) चस्य कः क्लीबे सौ मुक्तम् इति जातम्। 'धृंग् धारणे' (सिद्ध० धा०) धृधातुः 'परोक्षा ए' (सिद्ध०३-३-१२), ('द्विर्धातुः०' सिद्ध० ४-१-१) द्वित्वं, 'ऋतोऽत्' (सिद्ध०४-१-३८), 'द्वितीयतुर्ययोः पूर्वौ' (सिद्ध० ४-१-४२) पूर्वस्य धस्य दः, 'इवर्णादेरस्वे स्वरे यवरलं' (सिद्ध० १-२-२१) इति ऋकारस्य रत्वं संहितायां दध्रे इति जातम्। दुश्चासौ तरवारिश्च दुस्तरवारिः, दुस्तरवारेः कृत्यं दुस्तरवारिकृत्यम्। इति द्वात्रिंशत्तमकाव्यार्थतात्पर्यम् ॥३२॥

Oh *Jina*! that very shower which was let loose (upon Thee) by the demon (*Kamaṭha*)—the shower which was unfordable and excessively horrible and which was accompanied by a range of thundering mighty clouds, flashes of lightnings horribly emanating (from the sky) and terrible drops of water thick like a club served in his own (*Kamatha's*) case the purpose of a bad sword. (32)



१ 'कथम्भूतं' इति ख-पाठः।

ध्वस्तोर्ध्वकेशविकृताकृतिमर्त्यमुण्ड-
प्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः ।
प्रेतव्रजः प्रति भवन्तमपीरितो यः
सोऽस्याभवत् प्रतिभवं भवदुःखहेतुः ॥ ३३ ॥

क० वृ०—हे प्रभो! दैत्येन यः प्रेतव्रजो भवन्तं प्रति ईरित इत्यन्वयः । कर्मोक्तिः । 'प्रेतव्रजः' प्रेतसमूहः । प्रेतानां व्रजः प्रेतव्रजः 'तत्पुरुषः' । 'भवन्तं प्रति' त्वां प्रति । दैत्येनेति पूर्ववृत्तादत्रापि सम्बध्यते । 'ईरितः' प्रेरितः । अपिशब्दः समुच्चये । स चैवं युज्यते—न केवलं पूर्वकाव्योक्तं वारि दुःखाय जातं, किन्तु सोऽस्य प्रतिभवं दुःखहेतुरभवदित्यन्वयः । कर्तर्युक्तिः । स प्रेतव्रजोऽपि । 'अस्य' दैत्यस्य । 'प्रतिभवं' प्रतिजन्म । भवं भवं प्रति प्रतिभवं 'अव्ययीभावः' । 'भवदुःखहेतुः' संसारक्लेशहेतुः । भवस्य दुःखानि भवदुःखानि 'तत्पुरुषः', भवदुःखानां हेतुर्भवदुःखहेतुः 'तत्पुरुषः' । 'अभवत्' आसीत् । प्रेतव्रजः किंलक्षणः? 'ध्वस्तोर्ध्वकेशविकृताकृतिमर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः' ध्वस्ता—अवस्रंसिता ऊर्ध्वकेशा येन स ध्वस्तोर्ध्वकेशः १, विकृता—रौद्रत्वेन विरूपा आकृतिः—आकारो यस्य स विकृताकृतिः २, मर्त्यानां—नराणां यानि मुण्डानि तेषां प्रालम्बो—लम्बनकं तं बिभर्तीति मर्त्यमुण्डप्रालम्बभृत् ३, भयं ददातीति भीमत्वेन भयदः ४, वक्त्राद्—मुखात् विनिर्यन्—निर्गच्छन् अग्निर्यस्य स वक्त्रविनिर्यदग्निः ५, ततः पञ्चानामपि विशेषणानां 'कर्मधारयः' समासः । ध्वस्ता ऊर्ध्वकेशा येन स ध्वस्तोर्ध्वकेशः 'बहुव्रीहिः', विकृता आकृतिर्यस्य स विकृताकृतिः 'बहुव्रीहिः', मर्त्यानां मुण्डानि मर्त्यमुण्डानि 'तत्पुरुषः', मर्त्यमुण्डानां प्रालम्बो मर्त्यमुण्डप्रालम्बः 'तत्पुरुषः', मर्त्यमुण्डप्रालम्बं बिभर्तीति मर्त्यमुण्डप्रालम्बभृत् 'तत्पुरुषः', भयं ददातीति भयदः 'तत्पुरुषः', विनिर्यंश्चासावग्निश्च विनिर्यदग्निः 'कर्मधारयः', वक्त्राद् विनिर्यदग्निर्यस्य स वक्त्रविनिर्यदग्निः 'बहुव्रीहिः', भयदश्चासौ वक्त्रविनिर्यदग्निश्च भयदवक्त्रविनिर्यदग्निः 'कर्मधारयः', मर्त्यमुण्डप्रालम्बभृच्चासौ भयदवक्त्रविनिर्यदग्निश्च मर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः 'कर्मधारयः', विकृताकृतिश्चासौ मर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निश्च विकृताकृतिमर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः 'कर्मधारयः', ध्वस्तोर्ध्वकेशश्चासौ विकृताकृतिमर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निश्च ध्वस्तोर्ध्वकेशविकृताकृतिमर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः 'कर्मधारयः' । इति त्रयस्त्रिंशत्तमवृत्तार्थः ॥ ३३ ॥

भा० वि०—ध्वस्तोर्ध्वकेशेति । हे जिन! यस्तेन दैत्येन भवन्तं प्रति प्रेतव्रजोऽपि

---

१ 'कर्मुक्तिः' इति ख-पाठः । २ 'ऊर्ध्वं केशा' इति ख-पाठः । ३ 'प्राकम्बनक' इति ख-पाठः । ४ 'विशेषाणां' इति ख-पाठः ।

ईरितः–विकुर्व्य प्रेरितः। 'ईरितः' इति क्रियापदम्। केन कर्त्रा? 'तेन'। कः कर्मतापन्नः? 'प्रेतव्रजः'। कं प्रति? 'भवन्तं' त्वां प्रति। कथम्? 'अपि'। किम्भूतः प्रेतव्रजः–प्रेतसमूहः? 'ध्वस्तोर्ध्वकेशविकृताकृतिमर्त्यमुण्डप्रालम्बभृद्भयदवक्त्रविनिर्यदग्निः' ध्वस्ता न्यग्रोधमञ्जर्य इव प्रत्यङ्कुरीकृता ऊर्ध्वकेशा यस्य स ध्वस्तोर्ध्वकेशः १, विकृता–विरूपा आकृतिः–आकारो यस्य स विकृताकृतिः २, मर्त्यानां–मनुष्याणां मुण्डानि–मस्तकानि तेषां प्रालम्बो–लम्बनकं तं बिभर्तीति मर्त्यमुण्डप्रालम्बभृत् ३, भयं ददातीति भयदः ४, वक्त्रात्–मुखात् विनिर्यन् अग्निर्यस्य स वक्त्रविनिर्यदग्निः ५, ध्वस्तोर्ध्वकेशश्चासौ विकृताकृतिश्च ध्वस्तोर्ध्वकेशविकृताकृतिः, स चासौ मर्त्यमुण्डप्रालम्बभृच्च ध्वस्तो०, स चासौ भयदश्च ध्वस्तो०भयदः, ध्वस्तो०भयदश्चासौ वक्त्रविनिर्यदग्निश्च ध्वस्तो०भयदवक्त्रविनिर्यदग्निः। स प्रेतव्रजः अस्य–कमठस्य प्रतिभवं भवदुःखहेतुः अभवत्–भवति स्म। 'अभवत्' इति क्रियापदम्। कः कर्ता? 'सः'। किंलक्षणः? भवानां–जन्मनां दुःखानि तेषां हेतुः–कारणम्। कथम्? भवं भवं प्रति 'प्रतिभवं,' तीर्थकृदाशातनाया अनन्तदुःखदायिसंसारवृद्धिहेतुत्वात्। कस्य? 'अस्य' दैत्यस्येत्यर्थः ॥

प्रेतानां–भूतानां व्रजः प्रेतव्रजः। इदम्शब्दः षष्ठी ङस् 'आ द्वेरः' (सिद्ध० २–१–४१), 'लुगस्यादेत्यपदे' (सिद्ध० २–१–११३), 'दो मः स्यादौ' (सिद्ध० २–१–३९), 'टाङसोरिनस्यौ' (सिद्ध० १–४–५), 'अनक्' (सिद्ध० २–१–३६) इति सूत्रेण इमस्य अ आदेशे अस्य इति जातम्। 'भू सत्तायां' (सिद्ध० धा०) भूधातुः 'ह्यस्तनी दिव्' (सिद्ध० ३–३–९), 'अड् धातोरादिर्ह्यस्तन्यां चामाङा' (सिद्ध० ४–४–२९) इति अडागमः, शव् 'गुणः०' (सिद्ध० ३–३–२) अव् इति अभवत् जातम्। इति त्रयस्त्रिंशत्तमकाव्यार्थदिङ्मात्रम्[1] ॥३३॥

Even that very troop of the ghosts that was sent against Thee by him (*Kamaṭha*)—the ghosts who wore (round their necks) garlands (reaching their chests) of skulls of human beings, with dishevelled and erect hair and distorted features, and who were belching fire from their dreadful mouths became the cause of mundane sufferings in every birth in his (*Kamaṭha's*) case. (33)

* * * *

अथ ये जिनमाराधयन्ति तेषां प्रशंसां कुर्वन्नाह—

धन्यास्त एव भुवनाधिप! ये त्रिसन्ध्य-
माराधयन्ति विधिवद् विधुतान्यकृत्याः।
भक्त्योल्लसत्पुलकपक्ष्मलदेहदेशाः
पादद्वयं तव विभो! भुवि जन्मभाजः ॥ ३४ ॥

क० वृ०—हे 'भुवनाधिप'! हे जगत्स्वामिन्!। भुवनानामधिपो भुवनाधिपः 'तत्पु-

१ 'दिग्मात्रम्' इति ख-पाठः।

रुषः' तस्य सम्बोधनम्। त एव धन्याः-प्रशस्याः, स्युरिति शेषः, इत्यन्वयः। कर्तुक्तिः। ते के इत्याह-हे विभो! भुवि ये जन्मभाजः त्रिसन्ध्यं तव पादद्वयं विधिवदाराधयन्तीत्यन्वयः। कर्त्रुक्तिः। 'भुवि' पृथिव्याम्। 'जन्मभाजः' देहिनः। जन्म भजन्तीति जन्मभाजः 'तत्पुरुषः'। 'त्रिसन्ध्यं' त्रिकालम्। तिसृणां सन्ध्यानां समाहारः त्रिसन्ध्यम् 'द्विगुः'। 'तव' भवतः। 'पादद्वयं' चरणयुगलम्। पादयोर्द्वयं पादद्वयं 'तत्पुरुषः', पुनर्द्वितीयाज्ञापनाय तदिति। 'विधिवद्' विधिपूर्वकम्। 'आराधयन्ति' सेवन्ते। किंलक्षणा जन्मभाजः? 'विधुतान्यकृत्याः' त्यक्तान्यकार्याः। अन्यानि च तानि कृत्यानि च अन्यकृत्यानि 'कर्मधारयः', विधुतानि अन्यकृत्यानि यैस्ते विधुतान्यकृत्याः 'बहुव्रीहिः'। पुनर्जन्मभाजः किंविशिष्टाः? 'उल्लसत्पुलकपक्ष्मलदेहदेशाः' प्रोल्लसद्रोमाञ्चेन पक्ष्मवच्छरीरभागा येषां ते। देहस्य देशाः देहदेशाः 'तत्पुरुषः', उल्लसंश्चासौ पुलकश्चोल्लसत्पुलकः 'कर्मधारयः', उल्लसत्पुलकेन पक्ष्मला उल्लसत्पुलकपक्ष्मलाः 'तत्पुरुषः', उल्लसत्पुलकपक्ष्मला देहदेशा येषां ते उल्लस०'बहुव्रीहिः'। कया? 'भक्त्या' भावेन। इति चतुस्त्रिंशत्तमवृत्तार्थः॥ ३४॥

मा० वि०—धन्यास्त एवेति। हे भुवनाधिप! ते एव भव्या धन्या वर्तन्ते। 'वर्तन्ते' इति क्रियापदम्। के कर्तारः? 'ते'। कथम्? 'एव'। ते के? 'जन्मभाजः' भविनः। ये हे विभो! त्रिसन्ध्यं तव पादद्वयम् आराधयन्ति। 'आराधयन्ति' इति क्रियापदम्। के कर्तारः? 'जन्मभाजः'। जन्मभाजः के? 'ये'। किं कर्मतापन्नम्? 'पादद्वयम्'। कस्य? 'तव'। कस्याम्? 'भुवि' पृथिव्याम्। जन्मभाजः किम्भूताः? 'विधुतान्यकृत्याः' विधुतानि—त्यक्तानि अन्यानि कृत्यानि—कार्याणि यैस्ते। पुनः किम्भूताः? 'उल्लसत्पुलकपक्ष्मलदेहदेशाः' उल्लसन्तश्च ते पुलकाश्च उल्लसत्पुलकाः, उल्लसत्पुलकैः पक्ष्मलो देहदेशो—देहावयवो येषां ते। कया? 'भक्त्या' कृत्वा। कथम्? 'विधिवत्'॥

भुवनानां—जगताम् अधिपो भुवनाधिपः तस्य सम्बोधनम्। तिसृणां सन्ध्यानां समाहारः त्रिसन्ध्यम् 'अव्ययीभावः' त्रिसन्ध्याशब्दः 'अमव्ययीभावस्यातोऽपञ्चम्याः' (सिद्ध० ३-२-२) इति अम् क्लीबे 'ह्रस्वः' (सिद्ध० ४-१-३९) अव्ययत्वात् सेर्लोपः। पादयोर्द्वयं पादद्वयं (तत्)। जन्मानि भजन्तीति जन्मभाजः। इति चतुस्त्रिंशत्तमकाव्यार्थरहस्यम्॥३४॥

*Those who devote their time in worshipping God are fortunate*

Oh Lord of the universe! blessed are those persons alone who, by leaving aside their other activities worship here the pair of Thy feet, oh mighty one, thrice a day (dawn, noon and sunset) according to the prescribed rules, with the different parts of their bodies covered up with bristling horripilation of devotion. (34)



१ एतत्स्थाने 'द्विगुसमासः पादयोर्द्वयं' इति ख-पाठः। २ 'ढ्याख्यार्थ०' इति क-पाठः।

अथ प्राग्वर्णितस्वरूपस्य विज्ञापयितुं च योग्यस्य देवाधिदेवस्याग्रे कविः स्वात्मविषयं विज्ञाप्यं[1] प्रार्थनीयं च यत् स्वमनसि वर्तते तत् काव्याष्टकेन वर्णयन्नाह[3]—

अस्मिन्नपारभववारिनिधौ मुनीश!
मन्ये न मे श्रवणगोचरतां गतोऽसि।
आकर्णिते तु तव गोत्रपवित्रमन्त्रे
किं वा विपद्विषधरी सविधं समेति? ॥ ३५ ॥

क० वृ०—हे 'मुनीश'! मुनीनामीशो मुनीशः 'तत्पुरुषः' तस्य सम्बोधनम्। अहमेवं मन्ये-एवं सम्भावयामि। अस्मिन्नपारभववारिनिधौ मे श्रवणगोचरतां न गतोऽसीत्यन्वयः। कर्त्रुक्तिः। हे पारगत! 'अस्मिन्' प्रत्यक्षे। 'अपारभववारिनिधौ' अतिविस्तीर्णसंसारसमुद्रे। भव एव वारिनिधिर्भववारिनिधिः ('कर्मधारयः'), न विद्यते पारं यस्य सोऽपारः ('बहुव्रीहिः'), अपारश्चासौ भववारिनिधिश्च अपारभववारिनिधिः 'कर्मधारयः' तस्मिन्। 'मे' मम। 'श्रवणगोचरतां' कर्णविषयताम्। गोचरस्य भावो गोचरता, श्रवणयोः गोचरता श्रवणगोचरता 'तत्पुरुषः' ताम्। त्वं 'न गतोऽसि'। न श्रुतोऽसीति भावः। तु-पुनः तव गोत्रपवित्रमन्त्रे आकर्णिते (सति) किं वा विपद्विषधरी सविधं समेति? अपि तु नेति। कर्त्रुक्तिः। 'तव' भवतः। 'गोत्रपवित्रमन्त्रे' नामपावनमन्त्रे। पवित्रश्चासौ मन्त्रश्च पवित्रमन्त्रः 'कर्मधारयः,' गोत्रमेव पवित्रमन्त्रो गोत्रपवित्रमन्त्रः 'कर्मधारयः' तस्मिन्। 'आकर्णिते' श्रुते सति। 'वा' अथवा। किम्। 'विपद्विषधरी' आपत्सर्पिणी। विषं धरतीति विषधरी, विपदेव विषधरी विपद्विषधरी 'कर्मधारयः'। 'सविधं' समीपम्। 'समेति' समागच्छति। यदि तव नाम श्रुतमभविष्यत् तदा विपद् नायास्यदित्यर्थः। इति पञ्चत्रिंशत्तमवृत्तभावार्थः[4] ॥ ३५ ॥

मा० वि०—अस्मिन्नपारेति। हे मुनीश! अहं मन्ये-जाने। 'मन्ये' इति क्रियापदम्। कः कर्ता? 'अहम्'। किं मन्ये तदाह—अस्मिन् अपारभववारिनिधौ त्वं श्रवणगोचरतां न गतोऽसि। 'असि' इति क्रियापदम्। कः कर्ता? 'त्वम्'। कां कर्मतापन्नाम्? 'श्रवणगोचरतां' कर्णविषयताम्। कथम्? 'न'। कस्मिन्? 'अपारभववारिनिधौ'। कस्मिन्? 'अस्मिन्'। तुरिति विशेषे। वा-अथवा तव गोत्रपवित्रमन्त्रे-नामपवित्रमन्त्रे आकर्णिते किं विपद्विषधरी सविधं समेति?-समागच्छति? अपि तु न। 'समेति' इति क्रियापदम्। का कर्त्री? 'विपद्विषधरी' आपत्सर्पिणी। किं कर्मतापन्नम्? 'सविधं' समीपम्। कस्मिन् सति? 'गोत्रपवित्रमन्त्रे' सति। किम्भूते[5]? 'आकर्णिते' (सति) श्रुते सति। कस्य? 'तव'॥

भव एव वारिनिधिः भववारिनिधिः, अपारश्चासौ भववारिनिधिश्च अपारभववारिनिधिः

१ 'विज्ञपयितु-प्रार्थयितु' इति घ० पाठः। २ 'विज्ञप्य' इति घ-पाठः। ३ 'आह' इति घ-पाठः। ४ 'वृत्तार्थः' इति घ-पाठः। ५ 'किम्भूते' इति प्रतिभाति।

तस्मिन् । (मुनीनामीशः मुनीशः, तत्सं० मुनीश !) श्रवणयोर्गोचरः श्रवणगोचरः, तस्य भावः श्रवणगोचरता ताम् । पवित्रश्चासौ मन्त्रश्च पवित्रमन्त्रः, गोत्रमेव पवित्रमन्त्रः गोत्रपवित्रमन्त्रः तस्मिन् गोत्रपवित्रमन्त्रे । विपदेव विषधरी विपद्विषधरी । इति पञ्चत्रिंशत्तमवृत्तार्थः ॥ ३५ ॥

*The poet commences self-examination and resorts to repentance*

Oh Lord of the saints! I do not believe that Thou hast (Thy name has) ever come within the range of my ears, in this endless ocean of existence, otherwise, can the venemous reptile of disasters approach (me), after the pure incantation (in the form) of thy appellation has been listened to (by me)? (35)

* * * *

जन्मान्तरेऽपि तव पादयुगं न देव!
मन्ये मया महितमीहितदानदक्षम् ।
तेनेह जन्मनि मुनीश! पराभवानां
जातो निकेतनमहं मथिताशयानाम् ॥ ३६ ॥

क० वृ०—हे देव! अहमेवं मन्ये–एवं सम्भावयामि । ईहितदानदक्षं तव पादयुगं जन्मान्तरेऽपि मया न महितमित्यन्वयः । कर्मोक्तिः । 'ईहितदानदक्षं' वाञ्छितवितरण-प्रवीणम् । ईहितं च तद् दानं च ईहितदानं 'कर्मधारयः', ईहितदाने दक्षं ईहितदानदक्षं 'तत्पुरुषः' । 'तव' भवतः । 'पादयुगं' क्रमद्वन्द्वम् । पादयोर्युगं पादयुगं 'तत्पुरुषः' । 'जन्मान्तरेऽपि' भवान्तरेऽपि । एकस्मात् जन्मनो अन्यज्जन्म जन्मान्तरं तस्मिन् । 'न महितं' –न पूजितम् । हे 'मुनीश!' मुनीनामीशो मुनीशः 'तत्पुरुषः' तस्य सम्बोधनम् । तेन मथिताशयानां पराभवानां–उपद्रवाणां निकेतनमिह जन्मनि अहं जातः, अस्मीति शेषः, अन्वयः । कर्त्रुक्तिः । 'तेन' कारणेन । 'मथिताशयानां' व्यथितचित्तानाम् । मथित आशयो यैस्ते मथिताशयाः 'बहुव्रीहिः' तेषाम् । पराभवानाम् । 'निकेतनं' गृहम् । 'इह' अत्र । 'जन्मनि' भवे । अहं जातोऽस्मि । तव पादपूजको हि पराभवभवनं न स्यादेव । इति षट्त्रिंशत्तमवृत्तार्थः ॥ ३६ ॥

मा० वि०—जन्मान्तरेऽपीति । हे देव! अहं मन्ये–जानामि । जन्मान्तरेऽपि मया तव पादयुगं न महितं–न पूजितम् । 'महितम्' इति क्रियापदम् । केन कर्त्रा? 'मया' । कथम्? 'न' । किं कर्मतापन्नम्? 'पादयुगम्' । कस्य? 'तव' । कस्मिन्? 'जन्मान्तरे' । कथम्? 'अपि' । एकस्माज्जन्मनोऽन्यज्जन्म जन्मान्तरं तस्मिन्, अन्यजन्मन्यपि । पाद-युगं किंलक्षणम्? 'ईहितदानदक्षम्' ईहितं–वाञ्छितं यद् दानं तत्र दक्षम् । हे मुनीश!

१ 'काव्यार्थोपनिषद्' इति ख-पाठः । २ 'अन्वयोऽयम्' इति ख-पाठः । ३ 'वृत्तभावार्थः' इति ख-पाठः ।

तेन कारणेन इह 'जन्मनि' इह भवे पराभवानां निकेतनं—गृहं जातोऽस्मि । 'अस्मि' इति क्रियापदम् । कः कर्ता ? 'अहम्' । कथम्भूतः ? 'जातः' । किं जातः ? 'निकेतनं' गृहम् । केषाम् ? 'पराभवानाम्' अनर्थानाम् । किम्भूतानाम् ? 'मथिताशयानां' मथित आशयः—चित्ताभिप्रायो यैस्ते मथिताशयास्तेषाम् ॥

'अर्हं मह पूजायां' ( सिद्ध० धा० ) महधातुः । क्तप्रत्ययः इट् क्लीबे सौ महितं इति जातम् । जनानां बान्धव इव जनबान्धवस्तस्य सम्बोधनं हे जनबान्धव ! । ईहितं च तद् दानं च ईहितदानं, ईहितदाने दक्षम् ईहितदानदक्षम् इति षट्त्रिंशत्तमकाव्यार्थकल्पना ॥ ३६ ॥

*A worshipper of God can never suffer from humiliations and disappointments*

Oh God ! I believe that Thy ( pair of ) feet capable of granting desired gifts has not been worshipped by me even in the previous births That is why I have ( now ) become in this birth an object of humiliations and an abode of frustrated hopes. ( 36 )



नूनं न मोहतिमिरावृतलोचनेन
पूर्वं विभो! सकृदपि प्रविलोकितोऽसि ।
मर्माविधो विधुरयन्ति हि मामनर्थाः
प्रोद्यत्प्रबन्धगतयः कथमन्यथैते ? ॥ ३७ ॥

क० वृ०—हे विभो ! नूनं मोहतिमिरावृतलोचनेन मया पूर्वं सकृदपि त्वं न प्रविलोकितोऽसि इत्यन्वयः । कर्तर्युक्तिः । 'नूनं' निश्चयेन । 'मोहतिमिरावृतलोचनेन' मोहान्धकाराच्छादितनेत्रेण । मोह एव तिमिरं मोहतिमिरं 'कर्मधारयः', मोहतिमिरेणावृते मोहतिमिरावृते 'तत्पुरुषः', मोहतिमिरावृते लोचने यस्य स मोहतिमिरावृतलोचनः 'बहुव्रीहिः' तेन । मयेतिशेषः । 'पूर्वं' प्रथमम् । 'सकृदपि' एकशोऽपि । त्वं 'न प्रविलोकितोऽसि' प्रकर्षेण—चित्तैकाग्र्यरूपेण न विलोकितोऽसि—न निरीक्षितोऽसि । अत्रार्थे हेतुमाह—अन्यथा मर्माविधः प्रोद्यत्प्रबन्धगतयोऽनर्था एते हि मां कथं विधुरयन्तीत्यन्वयः । कर्त्रुक्तिः । 'अन्यथा' त्वद्दर्शने सति । 'मर्माविधः' मर्मभेदिनः । मर्माणि आविध्यन्तीति मर्माविधः 'तत्पुरुषः' । 'प्रोद्यत्प्रबन्धगतयः' उत्पद्यमानपरम्पराप्रवृत्तयः । प्रोद्यन्तश्च ते प्रबन्धाश्च प्रोद्यत्प्रबन्धाः 'कर्मधारयः', प्रोद्यत्प्रबन्धानां गतिर्येषु ते (प्रोद्य०) 'बहुव्रीहिः' एवंविधाः ।

१ 'कर्त्रुक्तिः' इति ख-पाठः ।

'अनर्थाः' न अर्थाः अनर्थाः । 'एते' प्रत्यक्षरूपाः । 'हि' यस्मात् । कथं मां विधुरयन्ति-क्लेशयन्ति । यदि हि त्वं दृष्टोऽभविष्यः तदा न मां एते अनर्था व्यधुरयिष्यन् । इति सप्तत्रिंशत्तमवृत्तार्थः ॥ ३७ ॥

मा० वि०—नूनमिति । हे विभो! नूनं-निश्चितं त्वं मया पूर्वं-पूर्वजन्मनि सकृदपि न प्रविलोकितोऽसि-न दृष्टोऽसि । 'असि' इति क्रियापदम् । कः कर्ता? 'त्वम्' । केन? 'मया' । त्वं किम्भूतः? 'प्रविलोकितः' । कथम्? 'न' । कथम्? 'पूर्वम्' । कथम्? 'सकृदपि' एकवारमपि । मया किंलक्षणेन? मोहो-मौढ्यं स एव तिमिरम्-अन्धकारं तेन आवृते-आच्छादिते लोचने यस्य स तेन । एवं कथं ज्ञातं तत्रार्थे हेतुमाह—हि-निश्चितम् अन्यथा माम् एते अनर्थाः-क्लेशाः कथं विधुरयन्ति?-पीडयन्ति? । 'विधुरयन्ति' इति क्रियापदम् । के कर्तारः? 'अनर्थाः' । क कर्मतापन्नम्? 'माम्' । अनर्थाः किंलक्षणाः? 'मर्माविधः' मर्माणि आविध्यन्ति-भिन्दन्ति इति मर्माविधः, मर्मस्थानभेदका इत्यर्थः । पुनः किंलक्षणाः? 'प्रोद्यत्प्रबन्धगतयः' प्रोद्यन्त्यः-प्रभवन्त्यः प्रबन्धगतयः-सन्तानगतयो येभ्यस्ते, प्रादुर्भवत्परम्पराका इत्यर्थः ॥

प्रविपूर्वः 'लोकृङ् दर्शने' ( सिद्ध० धा० ) लोकृधातुः क्तप्रत्ययः इट् प्रविलोकितः इति जातम् । असीति पूर्ववत् । आङ्पूर्वः 'व्यधंच् ताडने' ( सिद्ध० धा० )व्यध्( धातुः ) आविध्यन्तीति आविधः क्विप्प्रत्ययः क्विपो लोपः 'ज्याव्येव्यधिव्यचिव्यथेरिः' ( सिद्ध० ४-१-७१ ) इति य्वृत् यस्य इकारः जसि आविधः इति जातम् । विधुरं कुर्वन्तीति विधुरयन्ति, 'णिज् बहुलं नाम्नः कृगादिषु' (सिद्ध० ३-४-४२) णिज्प्रत्ययः, 'त्र्यन्त्यस्वरादेः', ( सिद्ध० ७-४-४३ ) इति रस्य अलोपः, 'गुणः०' ( सिद्ध० ३-३-२ ) शव्, ए अय्, 'लुगस्यादेत्यपदे' (सिद्ध० २-१-११३) अलोपः विधुरयन्ति । यदि पूर्वं त्वं दृष्टो भवेत्, तदा मां अनर्थाः कथं पीडयन्ति? । पीडयन्ति चेत्, तदा त्वं पूर्वं दृष्टो नास्ति इति लिङ्गदर्शने लिङ्गिज्ञानम् । इति सप्तत्रिंशत्तमकाव्यं विवरणतो द(वृ)त्तम् ॥ ३७ ॥

*The sight of God averts adversities*

It is certain, oh Omnipotent one! that Thou hast not been formerly seen even once by me whose eyes are blinded by the darkness of infatuation. For, otherwise, how can these misfortunes which pierce the vital parts of the heart and which are quickly appearing in a continuous succession, make me miserable? ( 37 )



---

१ 'प्रकटस्वरूपाः' इति ख-पाठः ।

आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि
नूनं न चेतसि मया विधृतोऽसि भक्त्या ।
जातोऽस्मि तेन जनबान्धव ! दुःखपात्रं
यस्मात् क्रियाः प्रतिफलन्ति न भावशून्याः ॥ ३८ ॥

क० वृ०—हे जिन! क्वापि भवे मया न त्वं आकर्णितोऽप्यसि–श्रुतोऽप्यसीत्यन्वयः । कर्त्रुक्तिः । तथा मया त्वं न महितोऽप्यसि–न पूजितोऽप्यसि । कर्त्रुक्तिः । तथा मया त्वं न निरीक्षितोऽप्यसि–न दृष्टोऽप्यसि । कर्त्रुक्तिः । 'नून' निश्चयेन । मया 'चेतसि' हृदये । 'भक्त्या' भावेन । न विधृतोऽसि कालसौकरिकेनेव श्रीवीरः । हेतुमत्राह–हे 'जनबान्धव !' हे लोकमित्र !, "बान्धवो बन्धुमित्रयोः" इति अनेकार्थ( हैम० का० ३, श्लो० १२०७ )वचनात् । जनानां बान्धवो जनबान्धवः 'तत्पुरुषः' तस्य सम्बोधनं हे जनबान्धव ! । तेन कारणेन अहं दुःखपात्रं–दुःखास्पदं, दुःखानां पात्रं दुःखपात्रं 'तत्पुरुषः' जातोऽस्मीत्यन्वयः । कर्त्रुक्तिः । 'यस्मात्' कारणात् । 'क्रिया' आकर्णनादिकाः । 'भावशून्याः' भावरहिताः । भावेन शून्या भावशून्याः 'तत्पुरुषः' । 'न प्रतिफलन्ति' नैव प्रतिविशिष्ट-फलदायिन्यो भवन्ति । इत्यष्टत्रिंशत्तमवृत्तार्थः ॥ ३८ ॥

मा० वि०—आकर्णितोऽपीति । हे नाथ ! नूनं–निश्चितं मया चेतसि न विधृतोऽसि –न धृतोऽसि । 'असि' इति क्रियापदम् । कः कर्ता ? 'त्वम्' । केन कर्त्रा ? 'मया' । त्वं किम्भूतः ? 'विधृतः' विशेषेण धृतो विधृतः । कथम् ? 'न' । कस्मिन् ? 'चेतसि' । पूर्वज-न्मनीति गम्यते । कया ? 'भक्त्या' । त्वं किंलक्षणः ? 'आकर्णितः' श्रुतः श्रवणाभ्याम् । कथम् ? 'अपि' । पुनस्त्वं कीदृशः ? 'महितः' पूजितश्चन्दनादिभिः । कथम् ? 'अपि' । पुनस्त्वं कीदृग् ? 'निरीक्षितः' दृष्टो नयनाभ्याम् । कथम् ? 'अपि' । तत्रार्थे हेतुमाह–हे जनबान्धव ! तेन कारणेन अहं दुःखपात्रं जातोऽस्मि । 'अस्मि' इति क्रियापदम् । कः कर्ता ? 'अहम्' । किंलक्षणः ? 'दुःखपात्रं' दुःखभाजनम् । केन ? 'तेन' । तत्रार्थेऽपि हेतुमाह—यस्मात् कारणात् भावशून्याः क्रिया न प्रतिफलन्ति–फलवन्त्यो न भवन्ति । 'प्रतिफलन्ति' इति क्रियापदम् । काः कर्त्र्यः ? 'क्रियाः' । किंलक्षणाः ? 'भावशून्याः' चित्ता-भिप्रायशून्याः । कस्मात् ? 'यस्मात्' ॥

जनानां बान्धव इव जनबान्धवस्तस्य सम्बोधनं हे जनबान्धव ! । दुःखानां पात्रं दुःखपात्रम् । भावेन शून्याः भावशून्याः । इति अष्टत्रिंशत्तमकाव्यवृत्तार्थः[1] ॥ ३८ ॥

---

१ 'काव्यार्थनवनीतम्' इति ख–पाठः ।

*Prayers etc , void of sincerity are fruitless*

Oh philanthrophist ! though I have even heard, worshipped and seen Thee, yet I have not reverentially enshrined Thee in my heart Hence I have become an object of miseries, for, actions, (such as hearing, worshipping and seeing Thee) performed without sincerity ( *Bhāva* ) do not yield fruits. ( 38 )

* * * *

त्वं नाथ! दुःखिजनवत्सल! हे शरण्य!
कारुण्यपुण्यवसते! वशिनां वरेण्य!।
भक्त्या नते मयि महेश! दयां विधाय
दुःखाङ्कुरोद्दलनतत्परतां विधेहि ॥ ३९ ॥

क० वृ०—हे 'नाथ!'। हे 'दुःखिजनवत्सल'! हे दुःखिलोकस्निग्ध[1]!। दुःखं विद्यते येषां ते दुःखिनः, दुःखिनश्च ते जनाश्च दुःखिजनाः 'कर्मधारयः', दुःखिजनेषु वत्सलो दुःखिजनवत्सलः 'तत्पुरुषः' तस्य सम्बोधनम्। हे 'शरण्य!' हे शरणयोग्य!। शरणार्हः शरण्यः तस्य सम्बोधनम्। हे 'कारुण्यपुण्यवसते!' हे कृपापवित्रगृह!। पुण्या चासौ वसतिश्च पुण्यवसतिः 'कर्मधारयः', कारुण्यस्य पुण्यवसतिः कारुण्यपुण्यवसतिः 'तत्पुरुषः' तस्य सम्बोधनम्; अथवा कारुण्यपुण्ययोः-कारुण्यधर्मयोर्वसते!। कारुण्यं च पुण्यं च कारुण्यपुण्ये 'द्वन्द्वः', कारुण्यपुण्ययोर्वसतिः कारुण्यपुण्यवसतिः 'तत्पुरुषः' तस्य सम्बोधनम्। हे 'वरेण्य!' हे प्रकृष्ट!। केषां मध्ये? 'वशिनां' जितात्मनां मध्ये। वशो विद्यते येषां ते वशिनः। "वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः" इत्यनेकार्थे (हैमे का० २, श्लो० ५५७)। हे 'महेश'! महांश्चासावीशश्च महेशस्तस्य सम्बोधनं 'कर्मधारयः'। षडपि सम्बोधनपदानि। भक्त्या नते मयि दयां विधाय दुःखाङ्कुरोद्दलनतत्परतां त्वं विधेहि इत्यन्वयः। कर्त्रुक्तिः। 'भक्त्या' भावेन। 'नते' प्रणते। 'मयि'। 'दयाम्'। 'विधाय' कृत्वा। 'दुःखाङ्कुरोद्दलनतत्परतां' दुःखाङ्कुराणां यद् दलनं तत्र तत्परः-तन्निष्ठो दुःखाङ्कुरोद्दलनतत्परः तस्य भावस्ताम्। दुःखान्येवाङ्कुराः दुःखाङ्कुराः 'कर्मधारयः', दुःखाङ्कुराणामुद्दलनं दुःखाङ्कुरोद्दलनं 'तत्पुरुषः', तत्परस्य भावस्तत्परता, दुःखाङ्कुरोद्दलने तत्परता दुःखाङ्कुरोद्दलनतत्परता तां 'तत्पुरुषः'। त्वं 'विधेहि' कुरुष्वेत्यर्थः। इत्येकोनचत्वारिंशत्तमवृत्तार्थः॥३९॥

मा० वि०—त्वं नाथेति। हे 'नाथ!'। हे 'दुःखिजनवत्सल!'। हे 'शरण्य!'। हे 'कारुण्यपुण्यवसते!'। हे 'वरेण्य!'। केषाम्? 'वशिनाम्'। हे महेश! भक्त्या नते मयि दुःखाङ्कुरोद्दलनतत्परतां विधेहि-कुरु। 'विधेहि' इति क्रियापदम्। कः कर्ता?

१ 'दुःखितलोक०' इति ख-पाठः।

'त्वम्' । कां कर्मतापन्नाम्? 'दुःखाङ्कुरोद्दलनतत्परतां' दुःखानां अङ्कुराः दुःखाङ्कुराः, दुःखाङ्कुराणां उद्दलनं–मूलतो निष्कासनं, तत्र तत्परता ताम् । किं कृत्वा? 'विधाय' । कां कर्मतापन्नाम्? 'दयाम्' । कस्मिन्? 'मयि' । मयि किंलक्षणे? 'नते' प्रणते । कया? 'भक्त्या' ॥

दुःखिनश्च ते जनाश्च दुःखिजनाः, दुःखिजनेषु वत्सलः दुःखिजनवत्सलः तस्य सम्बोधनं हे दुःखिजनवत्सल! । करुणाया भावः कारुण्यं, पुण्या चासौ वसतिश्च पुण्यवसतिः, कारुण्यस्य पुण्यवसतिः कारुण्यपुण्यवसतिः–कारुण्यपवित्रगृहं तस्य सम्बोधनं हे कारुण्यपुण्यवसते! । अथवा कारुण्यं च पुण्यं च कारुण्यपुण्ये, कारुण्यपुण्ययोर्वसतिः कारुण्यपुण्यवसतिः, तस्य सम्बोधनं हे कारुण्यपुण्यवसते! । हे 'वरेण्य!' हे मनोहर! केषाम्? 'वशिनां' यतिनाम् । महांश्चासौ ईशश्च महेशस्तस्य सम्बोधनं हे महेश! । विपूर्वः धाधातुः 'पञ्चमी हि' ( सिद्ध० ३–३–८ ), 'हौ दः' ( सिद्ध० ४–१–३१ ) इति सूत्रेण आकारस्य एत्वं, द्वित्वं च न स्यात्, विधेहि इति जातम् । इति एकोनचत्वारिंशत्तमवृत्तवृत्तितो वृत्तम् ॥ ३९ ॥

*The poet prays to God to be gracious*

Oh Lord, the cherisher of affection for the miserable! the Protector! the holy abode of compassion ( or residence of mercy and merit )! the best amongst those who have controlled their senses! great God! have pity on me who devotedly bow to Thee, and show readiness to destroy sprouts of my sufferings ( 39 )



निःसङ्ख्यसारशरणं शरणं शरण्य–
मासाद्य सादितरिपुप्रथितावदातम् ।
त्वत्पादपङ्कजमपि प्रणिधानवन्ध्यो
वध्योऽस्मि चेद् भुवनपावन! हा हतोऽस्मि ॥ ४० ॥

क० वृ०—हे परमेष्ठिन्! त्वत्पादपङ्कजमासाद्य चेत् प्रणिधानवन्ध्योऽहमस्मीत्यन्वयः । कर्त्रुक्तिः । 'त्वत्पादपङ्कजं' भवत्क्रमकजम् । तव पादः त्वत्पादः 'तत्पुरुषः', त्वत्पाद एव पङ्कजं त्वत्पादपङ्कजं 'कर्मधारयः', पुनर्द्वितीयाज्ञापनाय तदिति । 'आसाद्यापि' प्राप्यापि । 'चेत्' यदि । 'प्रणिधानवन्ध्यः' चेतःसमाधानशून्यो धर्मोद्यमरहितो वा । "प्रणिधानमभियोगे समाधानप्रवेशयोः" इत्यनेकार्थे (हैमे का० ४, श्लो० १५५२) ।

१ 'सादितरिपु' इति भिन्नं पदं वा ।

प्रणिधानेन वन्ध्यः प्रणिधानवन्ध्यः 'तत्पुरुषः'। 'अस्मि' वर्ते। किंविशिष्टं त्वत्पादपङ्कजम्? 'निःसङ्ख्यसारशरणं' निःसङ्ख्यम्-अनन्तं यत् सारं-बलं तस्य शरणं-मन्दिरम्। निर्गतं सङ्ख्यायाः निःसङ्ख्यं 'तत्पुरुषः', निःसङ्ख्यं च तत् सारं च निःसङ्ख्यसारं 'कर्मधारयः,' निःसङ्ख्यसारस्य शरणं निःसङ्ख्यसारशरणं 'तत्पुरुषः'। पुनः किम्भूतं त्वत्पादपङ्कजम्? 'शरणं' रक्षकम्। "शरणं रक्षणे गेहे वधरक्षकयोरपि" इत्यनेकार्थे (हैमे का० ३, श्लो० ८२५)। पुनः किंलक्षणं त्वत्पादपङ्कजम्? 'शरण्यं' शरणयोग्यम्। शरणार्हं शरण्यं तत्। पुनः किंलक्षणं त्वत्पादपङ्कजम्? 'सादितरिपुप्रथितावदातं' सादितः-क्षयं नीतः रिपूणां-रागादीनां प्रसिद्धोऽवदातो येन तत् 'बहुव्रीहिः'। प्रथितश्चासावदातश्च प्रथितावदातः 'कर्मधारयः', रिपूणां प्रथितावदातो रिपुप्रथितावदातः 'तत्पुरुषः', सादितो रिपुप्रथितावदातो येन तत् 'बहुव्रीहिः'। अथवा सादितरिपु इति भिन्नं विशेषणम्। सादिता रिपवो येन तत् सादितरिपु 'बहुव्रीहिः' तत्। पुनः किंविशिष्टं त्वत्पादपङ्कजम्? 'प्रथितावदातं' प्रथितोऽवदातो यस्य तद् 'बहुव्रीहिः'। तदाऽहं वध्यो-मारणीयोऽस्मीत्यन्वयः। कर्त्रुक्तिः। अत्रानुक्तोऽपि चशब्दोऽध्याहार्यः। च-पुनः रागादिरिपूणामिति गम्यते। हे 'भुवनपावन!' हे विश्वपवित्रीकारक!। भुवनानां पावनं भुवनपावनं, भुवनेषु पावनं भुवनपावनमिति वा 'तत्पुरुषः' तस्य सम्बोधनम्। हा इति खेदे। अहं हतोऽस्मि-दुर्दैवेन प्रहतोऽस्मीत्यन्वयः। कर्त्रुक्तिः। इति चत्वारिंशत्तमवृत्तार्थः॥ ४०॥

मा० वि०—निःसङ्ख्येति। हे भुवनपावन!-हे जगत्पवित्रीकरण! त्वत्पादपङ्कजं शरणं आसाद्यापि चेद्-यदि अहं प्रणिधानवन्ध्योऽस्मि। 'अस्मि' इति क्रियापदम्। कः कर्ता? 'अहम्'। किम्भूतः? 'प्रणिधानवन्ध्यः' नमस्काररहितः। किं कृत्वा? 'आसाद्य' प्राप्य। कथम्? 'अपि'। किं कर्मतापन्नम्? 'त्वत्पादपङ्कजम्'। किंलक्षणम्? निर्गता सङ्ख्या यस्य तत् निःसङ्ख्यं, निःसङ्ख्यं च तत् सारं च निःसङ्ख्यसारं, निःसङ्ख्यसारस्य शरणं निःसङ्ख्यसारशरणं तत्, अनन्तबलसदनमित्यर्थः। शरणशब्देन गृहं प्रोच्यते। पुनः किम्भूतम्? 'शरण्यं' शरणाय योग्यं शरण्यं तत्। पुनः किम्भूतम्? सादिता-हता ये रागादिशात्रवस्तेषु प्रथितः-प्रसिद्धोऽवदातो यस्य तत्। तदा अहं वध्योऽस्मि-मारणीयोऽस्मि। अर्थात् रागादिशत्रूणामिति गम्यते। ननु वध्यस्तावत् हन्तुं योग्यस्तेन वध्यः, न तदा, हा इति खेदे। अहं हत एवास्मि। 'अस्मि' इति क्रियापदम्। कः कर्ता? 'अहम्'। किम्भूतः? 'वध्यः'। एवं उत्तरवाक्येऽपि अन्वयः॥

हन्धातुः यप्रत्ययः 'हनो वधः०' (सिद्ध० ४-४-२१) इति वध आदेशः, 'अतः' (सिद्ध० ४-३-८२) इति अस्य लोपः, वध्य इति जातम्। इति चत्वारिंशत्तमकाव्यार्थनिरूपणम्॥ ४०॥

Even after having attained as a refuge Thy lotus-feet, which are the resting-place of innumerable exellences, which are an object fit to be resorted to and the which has destroyed the famous prowess of foes (like attachment or which has destroyed enemies and which is well-known for purity), if I am lacking in the profound religious meditation, oh Purifier of the universe (or pure in the worlds)! I am fit to be killed and hence alas, I am undone (40)

* * * *

देवेन्द्रवन्द्य! विदिताखिलवस्तुसार!
संसारतारक! विभो! भुवनाधिनाथ!।
त्रायस्व देव! करुणाहृद! मां पुनीहि
सीदन्तमद्य भयदव्यसनाम्बुराशेः ॥ ४१ ॥

क० वृ०—हे 'देवेन्द्रवन्द्य!' सुरेन्द्रस्तुत्य!। वन्दनार्हो वन्द्यः, देवानामिन्द्रा देवेन्द्राः 'तत्पुरुषः', देवेन्द्रैर्वन्द्यो देवेन्द्रवन्द्यः 'तत्पुरुषः' तस्य सम्बोधनम्। हे 'विदिताखिलवस्तुसार!' हे ज्ञातनिखिलवस्तुपरमार्थ!। अखिलानि च तानि वस्तूनि चाखिलवस्तूनि 'कर्मधारयः', अखिलवस्तूनां सारः अखिलवस्तुसारः 'तत्पुरुषः', विदितोऽखिलवस्तुसारो येन स विदिताखिलवस्तुसारः तस्य सम्बोधनं 'बहुव्रीहिः'। "सारो मज्जस्थिरांशयोः। बले श्रेष्ठे च" इत्यनेकार्थे (हैमे का० २, श्लो० ४७२)। हे 'संसारतारक!'। तारयतीति तारकः, संसारात् तारकः संसारतारकः तस्य सम्बोधनं 'तत्पुरुषः'। हे 'विभो!'। हे 'भुवनाधिनाथ!' हे जगन्नाथ!। अधिकश्चासौ नाथश्च अधिनाथः, भुवनानामधिनाथो भुवनाधिनाथः 'तत्पुरुषः' तस्य सम्बोधनम्। हे 'देव!'। हे 'करुणाहृद!' हे कृपापरनद[1]!। करुणाया हृदः करुणाहृदः 'तत्पुरुषः' तस्य सम्बोधनम्। सप्तापि सम्बोधनपदानि। अद्य त्वं मां त्रायस्वेत्यन्वयः। कर्त्रुक्तिः। 'त्रायस्व' रक्ष। किंविशिष्टं माम्? 'सीदन्तं' विषीदन्तम्। कस्मात्? 'भयदव्यसनाम्बुराशेः' भयोत्पादकविपत्तिसमुद्रात्। व्यसनमेव अम्बुराशिर्व्यसनाम्बुराशिः 'कर्मधारयः', भयं ददातीति भयदः 'तत्पुरुषः', भयदश्चासौ व्यसनाम्बुराशिश्च भयदव्यसनाम्बुराशिः 'कर्मधारयः' तस्मात्। "व्यसनं निष्फलोद्यमे। दैवानिष्टेऽफले सक्तौ स्त्रीपानमृगयादिषु। पापे विपत्तावशुभे" इत्यनेकार्थे (हैमे० का० ३, श्लो० १००७–१००८)। चशब्दोऽध्याहार्यः। च-पुनर्मां त्वं पुनीहि-पवित्रीकुरु। इत्येकचत्वारिंशत्तमवृत्तार्थः ॥ ४१ ॥

मा० वि०—देवेन्द्रेति। हे देवेन्द्रवन्द्य! हे 'विदिताखिलवस्तुसार! हे संसारतारक! हे विभो! हे भुवनाधिनाथ! हे देव! हे करुणाहृद! त्वं मां त्रायस्व-पालय।

१ 'कृपानद' इति ब-पाठः।

'त्रायस्व' इति क्रियापदम् । कः कर्ता? 'त्वम्' । कं कर्मतापन्नम्? 'माम्' । कथम्? 'अद्य' । कस्मात्? 'भयदव्यसनाम्बुराशेः' भयं ददातीति भयदः, व्यसनानां–आपदां अम्बुराशिः व्यसनाम्बुराशिः, भयदश्चासौ व्यसनाम्बुराशिश्च भयदव्यसनाम्बुराशिस्तस्मात् । मां किम्भूतम्? 'सीदन्तम्' । त्वं मां पुनीहि–पवित्रय । 'पुनीहि' इति क्रियापदम् । कः कर्ता? 'त्वम्' । कं कर्मतापन्नम्? 'माम्' ॥

देवेन्द्रैर्वन्द्यः देवेन्द्रवन्द्यः, तस्य सम्बोधनं हे देवेन्द्रवन्द्य! । विदितं–ज्ञातं अखिलानां वस्तूनां सारं येन सः, तस्य सम्बोधनं हे विदिताखिलवस्तुसार! । संसारं तारयतीति संसारतारकः, तस्य सम्बोधनं ( हे संसार० ) । हे विभो!–हे स्वामिन्! । भुवनेषु अधिको नाथः, भुवनाधिनाथः, तस्य सम्बोधनं हे भुवनाधिनाथ! । 'त्रैङ् पालने' (सिद्ध० धा०) त्रैधातुः 'पञ्चमी स्व' ( सिद्ध० ३–३–८ ) शव् आय् त्रायस्वेति सिद्धम् । हे देव! दीव्यतीति देवस्तस्य सम्बोधनम् । करुणाया ह्रद इव करुणाह्रदः तस्य सम्बोधनम् । 'पूगश् पवने' ( सिद्ध० धा० ) पूधातुः 'पञ्चमी हि' (सिद्ध० ३–३–८), 'क्र्यादेः' ( सिद्ध० ३–४–७९ ), श्ना 'एषामीर्व्यञ्जनेऽदः' ( सिद्ध० ४–२–९७ ) आकारस्य ईकारः, पुनीहि इति जातम् । 'षद्लृ विशरणगत्यवसादनेषु' ( सिद्ध० धा० ) षद्धातुः 'षः सः०' ( सिद्ध० २–३–९८ ) इति षस्य सः, शतृप्रत्ययः शव् 'श्रौतिकृवुधिवु०' ( सिद्ध० ४–२–१०८ ) इति सूत्रेण सीद् आदेशः, 'लुगस्यादेत्यपदे' ( सिद्ध० २–१–११३ ) अलोपः पुनरप्यलोपः, 'ऋदुदितः' ( सिद्ध० १–४–७० ) अनोऽन्तः, अमि सीदन्तं इति सिद्धम् । इत्येकचत्वारिंशत्तमकाव्यार्थस्वरूपं प्ररूपितम् ॥ ४१ ॥

Oh object of worship for the lords of gods! Conversant with the essence of every object! Saviour from this worldly existence ( the ferryman that enables to cross the ocean of existence )! Pervader of the Universe! Ruler of the world! save me, oh God! oh reservoir of compassion! purify me who am now-a-days sinking in the terrifying sea of sufferings ( 41 )

* * * *

यद्यस्ति नाथ! भवदङ्घ्रिसरोरुहाणां
भक्तेः फलं किमपि सन्ततिसञ्चितायाः[1] ।
तन्मे त्वदेकशरणस्य शरण्य! भूयाः
स्वामी त्वमेव भुवनेऽत्र भवान्तरेऽपि ॥ ४२ ॥

---

1 'सन्ततसञ्चितायाः' इति पाठान्तरं वृत्तिकारमते ।

क० वृ०—हे नाथ! भवदंह्रिसरोरुहाणां सन्ततिसञ्चिताया भक्तेः फलं किमपि यद्यस्तीत्यन्वयः। कर्त्रुक्तिः। ('भवदंह्रिसरोरुहाणां') त्वच्चरणकमलानाम्। सरसि रुहन्तीति सरोरुहाणि 'तत्पुरुषः', अंह्रय एव सरोरुहाणि अंह्रिसरोरुहाणि 'कर्मधारयः', भवतोऽंह्रिसरोरुहाणि भवदंह्रिसरोरुहाणि 'तत्पुरुषः' तेषां सम्बन्धिन्याः। सन्ततिसञ्चितायाः सन्तत्या—सन्तानेनापरापरचयेन सञ्चितायाः—सञ्चयं नीतायाः। सन्तत्या सञ्चिता सन्ततिसञ्चिता 'तत्पुरुषः' तस्याः, 'सन्ततसञ्चितायाः' इति पाठे तु निरन्तरं कृतायाः। सन्ततं सञ्चिता सन्ततसञ्चिता तस्याः 'तत्पुरुषः'। एवंविधाया भक्तेः फलं किमपि यद्यस्ति तदिति तदा हे शरण्य! अत्र—भुवने भवान्तरेऽपि च त्वदेकशरणस्य मे त्वमेव स्वामी भूया इत्यन्वयः। कर्त्रुक्तिः। हे 'शरण्य!'। शरणार्हः शरण्यः तस्य सम्बोधनम्। 'अत्र भुवने' इह लोके। 'भवान्तरेऽपि' परभवेऽपि। एकस्माद् भवादन्यो भवो भवान्तरं तस्मिन्। चशब्दोऽत्राध्याहार्यः। त्वदेकशरणस्य। एकं च तच्छरणं च एकशरणं 'कर्मधारयः', त्वमेवैकशरणं यस्य स त्वदेकशरणः 'बहुव्रीहिः' तस्य। एवंविधस्य मे—मम त्वमेव स्वामी भूया एतदेवाहमीहे। इति द्विचत्वारिंशत्तमवृत्तार्थः॥ ४२॥

मा० वि०—यद्यस्तीति। हे नाथ! यदि भवदंह्रिसरोरुहाणां भक्तेः फलं किमपि अस्ति। 'अस्ति' इति क्रियापदम्। किं कर्तृ? 'फलम्'। कस्याः? 'भक्तेः'। केषाम्? 'भवदंह्रिसरोरुहाणां' त्वच्चरणकमलानाम्। कथम्? 'किमपि'। भक्तेः किम्भूतायाः? 'सन्ततसञ्चितायाः' सन्ततं—निरन्तरं सञ्चितायाः—एकीकृतायाः—समूहीकृतायाः। हे शरण्य! तत्—तर्हि त्वमेव स्वामी भूयाः। 'भूयाः' इति क्रियापदम्। कः कर्ता? 'त्वम्'। किंलक्षणः? 'स्वामी'। कथम्? 'एव'। कस्मिन्? 'भुवने'। भुवने कस्मिन्? 'अत्र' अस्मिन् जगतीत्यर्थः। कस्मिन्? 'भवान्तरे' एकस्माद् भवात् अन्यो भवो भवान्तरं तस्मिन्। कथम्? 'अपि'। कस्य? 'मे' मम। किंलक्षणस्य? 'त्वदेकशरणस्य' त्वं एकः शरणं यस्य स त्वदेकशरणस्तस्य, अथवा तव एकं शरणं यस्य स तस्य॥

अंह्रय एव सरोरुहाणि अंह्रिसरोरुहाणि, भवतः अंह्रिसरोरुहाणि भवदंह्रिसरोरुहाणि, तेषां भवदंह्रिसरोरुहाणाम्। 'भू सत्तायां' (सिद्ध० धा०) भूधातुः 'आशीः क्यासु' (सिद्ध० ३–३–१३) भूयाः इति जातम्। इति द्विचत्वारिंशत्तमकाव्यार्थकीर्तनम्॥४२॥

Oh Lord! if there can be any reward whatsoever for my having been devoted to Thy lotus-feet for a series of births, mayest Thou yield protection to me who have Thee as the only refuge (or Thee alone as the refuge) and mayest Thou alone be my master in this world and even in my future life (incarnations). (42)

* * * *

कल्याणमन्दिरस्तोत्र. श्लोक ४३-४४





By the Courtesy of Mr P. C. Nahar M. A. B. L. of Calcutta

अथ कविः स्तवोपसंहारपूर्वं स्वनाम व्यञ्जयन्नाह—

इत्थं समाहितधियो विधिवज्जिनेन्द्र !
सान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः ।
त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्षा
ये संस्तवं तव विभो ! रचयन्ति भव्याः ॥ ४३ ॥

जननयनकुमुदचन्द्र ! प्रभास्वराः स्वर्गसम्पदो भुक्त्वा ।
ते विगलितमलनिचया अचिरान्मोक्षं प्रपद्यन्ते ॥ ४४ ॥[1] –युग्मम्

क० वि०—हे जिनेन्द्र ! हे विभो ! इत्थं विधिवद् ये भव्यास्तव संस्तवं रचयन्तीत्यन्वयः । कर्त्रुक्तिः । हे 'जिनेन्द्र !' जिनानामिन्द्रो जिनेन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः' । हे 'विभो !' हे स्वामिन् ! । 'इत्थं' पूर्वोक्तप्रकारेण । अनेन प्रकारेण इत्थम् । 'विधिवत्' विधिपूर्वकम् । 'ये भव्याः' भव्यजनाः । 'तव संस्तवं' (भवतः) स्तोत्रम् । 'रचयन्ति' कुर्वन्ति । किंलक्षणा भव्याः ? । 'समाहितधियः' समाहिता–एकाग्र्येण समाधिमती धीर्येषां ते 'बहुव्रीहिः' । पुनः किंविशिष्टा भव्याः ? 'सान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः' सान्द्रा–निश्छिद्रा ये उल्लसन्तः –उच्छ्वसन्तः पुलका–रोमाञ्चास्तैः कञ्चुकिताः कञ्चुकैरिव[2] विशिष्टा अङ्गभागाः–शरीरप्रदेशाः येषां ते । उल्लसन्तश्च ते पुलकाश्च उल्लसत्पुलकाः 'कर्मधारयः', सान्द्राश्च ते उल्लसत्पुलकाश्च सान्द्रोल्लसत्पुलकाः 'कर्मधारयः', कञ्चुको जात एषामिति कञ्चुकिताः, अङ्गस्य भागा अङ्गभागाः 'तत्पुरुषः', सान्द्रोल्लसत्पुलकैः कञ्चुकिताः सान्द्रोल्लसत्पुलककञ्चुकिताः 'तत्पुरुषः', सान्द्रोल्लसत्पुलककञ्चुकिता अङ्गभागा येषां ते (सान्द्रो०) 'बहुव्रीहिः' । पुनः किंविशिष्टा भव्याः ? 'त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्षाः' तव–भवतो बिम्बवत्–चन्द्रमण्डलवत्

---

१ एतत्प्रान्ते क–प्रतौ उल्लेखोऽयम्—

"इति महाकविश्रीसिद्धसेनदिवाकरविरचितं श्रीकल्याणमन्दिरस्तोत्रं सम्पूर्णम् । लिखितं गणिसकलवादिकौशिकसहस्रांशुपण्डित श्री १०५१ केसरसागरगणिशिष्यगणिअनन्तसागरलिपीकृतं सकलप्रवरपण्डितश्री५श्रीकान्तिसागरगणिप्रसादात् । संवत् १७६३ वर्षे मृगशिर शुदि ८ मी तिथौ सोमवासरे श्रीऋषभनाथप्रसादात् ॥"

ग–प्रतौ तु यथा—

"इति श्रीकल्याणमन्दिरस्तोत्रं तत्त्वविमलेन लिपीकृतं ॥ शुभं भवतु, कल्याणमस्तु ।"

घ–प्रतौ तु एवम्—

इति श्रीकल्याणमन्दिरस्तोत्रं सम्पूर्णं श्रीसिद्धसेनदिवाकरविरचितं श्रीमत्तारसमुद्रपत्तने लि० । छ ।

द्वितीयविवृतेः क–प्रतेः प्रान्ते इत्थम्—

इति श्रीकल्याणमन्दिरस्तोत्रम् ॥ छ ॥ श्री ॥ छ ॥ संवत् १७०० वर्षे चैत्रवदि तृतीया ॥

२ 'वेष्टिता' इति प्रतिभाति ।

आदर्शादिगतप्रतिबिम्बवदिति वा निर्मलं यन्मुखाम्बुजं-वक्त्रकमलं तत्र बद्धलक्षा-बद्धवेध्याः निवेशितदृश इति यावत्। लक्षशब्दो यकारान्तोऽप्यस्ति, "लक्षं लक्ष्यं शरव्यकम्" इत्यभिधान(चिन्तामणि)कोश(का० ३, श्लो० ४४१)वचनात्, "बिम्बं तु प्रतिबिम्बे स्यान्मण्डले बिम्बिकाफले" इत्यनेकार्थे (हैमे का० २, श्लो० ३१७)। मुखमेवाम्बुजं मुखाम्बुजं 'कर्मधारयः', बिम्बवत् निर्मलं बिम्बनिर्मलं 'तत्पुरुषः', बिम्बनिर्मलं च तत् मुखाम्बुजं च बिम्बनिर्मलमुखाम्बुजं 'कर्मधारयः', तव बिम्बनिर्मलमुखाम्बुजं त्वद्बिम्बनिर्मलमुखाम्बुजं 'तत्पुरुषः', त्वद्बिम्बनिर्मलमुखाम्बुजे बद्धं त्वद्बिम्बनिर्मलमुखाम्बुजबद्धं 'तत्पुरुषः', त्वद्बिम्बनिर्मलमुखाम्बुजबद्धं लक्षं यैस्ते त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्षाः 'बहुव्रीहिः'। इति त्रिचत्वारिंशत्तमवृत्तार्थः॥ ४३॥

ये तव स्तोत्रं रचयन्ति ते किं फलं प्राप्नुवन्तीत्याह—

हे जननयनकुमुदचन्द्र! तेऽचिरान्मोक्षं प्रपद्यन्ते इत्यन्वयः। कर्त्रुक्तिः। हे 'जननयनकुमुदचन्द्र!' हे लोकलोचनकुवलयविधो!। जनानां नयनानि जननयनानि 'तत्पुरुषः', जननयनान्येव कुमुदानि जननयनकुमुदानि 'कर्मधारयः', जननयनकुमुदेषु चन्द्रो जननयनकुमुदचन्द्रस्तस्य सम्बोधनं 'तत्पुरुषः'। 'ते' भव्याः। 'अचिरात्' क्षणेन। 'मोक्षं' अनन्तज्ञान१दर्शन२सुख३वीर्य४चतुष्टयरूपां सिद्धिम्। 'प्रपद्यन्ते' प्राप्नुवन्ति। किं कृत्वा? 'भुक्त्वा' अनुभूय। काः कर्मतापन्नाः? 'स्वर्गसम्पदः' स्वर्गस्य-देवलोकस्य सम्पदः-विभूतयः। स्वर्गस्य सम्पदः स्वर्गसम्पदः। 'तत्पुरुषः' (ताः)। किंलक्षणाः स्वर्गसम्पदः? 'प्रभास्वराः' प्रकर्षेण दीप्यमानाः। प्रकर्षेण भास्वराः प्रभास्वराः 'तत्पुरुषः'। ते किंलक्षणाः? 'विगलितमलनिचयाः' विगलितो-विगतो मलस्य-पापस्य निचयः-समूहो येभ्यस्ते। मलस्य निचयो मलनिचयः 'तत्पुरुषः', विगलितो मलनिचयो येभ्यस्ते विगलितमलनिचयाः 'बहुव्रीहिः'। "मलस्त्वघे। किट्टे कदर्ये विष्ठायाम्" इत्यनेकार्थे (हैमे का० २, श्लो० ५१०-५११) [जननयनकुमुदचन्द्रेति विशेषणं वदता स्तोत्रकर्त्रा कविना दीक्षासमये श्रीगुरुवृद्धवादिसूरिदत्तं कुमुदचन्द्रेतिरूपं स्वनाम ज्ञापितं द्रष्टव्यम्।] अत्र च स्तोत्रे महाकवि-श्रीसिद्धसेनदिवाकरविरचितत्वात् प्रायः प्रतिवृत्तं मन्त्राः सम्भाव्यन्ते, ते तथाविधाम्नायाभावात् नाभिहिताः, स्वयमूह्यास्ते सुगुरोः प्रसादादिति। अत्र च स्तवे त्रिचत्वारिंशत्काव्येषु वसन्ततिलकाच्छन्दः, तल्लक्षणं चेदम्-"ख्याता वसन्ततिलका तभजा जगौ गः" इति; प्रान्तकाव्ये त्वार्याच्छन्दश्च, तल्लक्षणमप्येवं (वृत्तरत्नाकरे)—

"लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः।
षष्ठोऽयं न लघुर्वा प्रथमेऽर्धे नियतमार्यायाः॥ १॥

---

१-२ लक्षस्थाने लक्ष्यशब्दस्य प्रयोगः घ-प्रतौ।

षष्ठे द्वितीयलात् परकेऽन्ले मुखलाच्च सयतिपदनियमः ।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥"

इति चतुश्चत्वारिंशत्तमवृत्तार्थः ॥ ४४ ॥

( अथ प्रशस्तिः )—

श्रीमत्तपागणनभोगणपद्मबन्धु–
भाग्यादकब्बरमहीरमणादवाप्ताम् ।
ख्यातिं जगद्गुरुरिति प्रथितां दधानः
सश्रीकहीरविजयाभिधसूरिरासीत् ॥ १ ॥–वसन्त०

तत्पट्टे वरगुणमणि–गणरोहणभूधरा धरापीठे ।
साम्प्रतमद्भुतयशसो, विजयन्ते विजयसेनसूरिवराः ॥ २ ॥

गीतिरियम्[1] ।

वाचकचूडामणयः, श्रीमन्तः शान्तिचन्द्रनामानः ।
विद्यागुरवो विबुधाः, विजयन्तां कमलविजयाश्च ॥ ३ ॥–आर्या

एषां श्रीमद्गुरूणां, प्रसादतो नयनबाणरसचन्द्रैः ( १६५२ ) ।
प्रमिते वर्षे रचिता, वृत्तिरियं कनककुशलेन ॥ ४ ॥–आर्या

प्रत्यक्षरं गणनया, वृत्तौ सङ्ख्या निवेद्यते ।
सञ्जाता षट्शती सार्द्धा, श्लोकानामिह मङ्गलम्[2] ॥ ५ ॥–अनु०

अङ्कतोऽपि ६५० सूत्रसहितवृत्तेर्ग्रन्थाग्रं[3] ७२० ।

इति श्रीकल्याणमन्दिरस्तोत्रवृत्तिः सम्पूर्णा ।

[4]लिखितं गणिसकलवादिकौशिकसहस्रांशुपण्डित१०५१श्रीकेसरसागरगणिशिष्यगणि-अनन्तसागरेण लिपीकृतं संवत् १७६३ वर्षे मृगसिर शुदि उज्वलपक्ष अष्टम्यां तिथौ इति श्री० श्री० आयुपुरे श्रीशान्तिजिनप्रसादात् ॥ श्रीरस्तु ॥ कल्याणमस्तु ॥

मा० वि०—इत्थमिति । हे जिनेन्द्र! इत्थं–अमुना प्रकारेण ये भव्याः तव संस्तवं रचयन्ति । 'रचयन्ति' इति क्रियापदम् । के कर्तारः? 'भव्याः' । के? 'ये' । कं कर्मताप-

---

१ गीति-लक्षणम्—

"आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥"

२ 'स्याद् वाल्लोकानामिहमङ्गतः(?)' इति ग–पाठः । ३ 'ससूत्र वृत्ते०' इति ग–पाठः ।

४ क–प्रतिस्थोऽयमुल्लेखः । ग–प्रतिगतस्तु यथा—"सकलपण्डितशिरोमणिपण्डितश्री५श्रीहंसविमलगणि-तत्शिष्यगणिश्री५श्रीकुशलविमलतत्शिष्य.........संवत् १७२४ वर्षे कार्तिक शुदि ५ शुक्रवारे ।"

घ–प्रतौ तु एवम्—श्रीलक्ष्मीविजयगणिना( गीना ) विनेयेन पं० रामविजयगणिना लिपीचक्रे सं० १७८५ चैत्र व० ८ ।

न्नम्? 'संस्तवम्'। कस्य? 'तव'। कथम्? 'इत्थम्'। भव्याः किम्भूताः? 'समाहितधियः' समाहिता–स्वस्था धीर्येषां ते समाहितधियः। कथम्? 'विधिवत्'। भव्याः किंलक्षणाः? 'सान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः' उल्लसन्तश्च ते पुलकाश्च उल्लसत्पुलकाः, सान्द्रं–निबिडं उल्लसत्पुलकाः सान्द्रोल्लसत्पुलकाः, सान्द्रोल्लसत्पुलकैः कञ्चुकितः–सन्नाहितः अङ्गभागः–शरीरावयवो येषां ते सान्द्रोल्लसत्पुलककञ्चुकिताङ्गभागाः। पुनः किंलक्षणाः? त्वद्बिम्बस्य –त्वत्प्रतिकृतेर्यद् निर्मलं मुखाम्बुजं तस्मिन् बद्धं लक्षं–वेध्यं यैस्ते त्वद्बिम्बनिर्मल–मुखाम्बुजबद्धलक्षाः॥

तव बिम्बं त्वद्बिम्बं, (मुखमेवाम्बुजं मुखाम्बुजं, निर्मलं च तद् मुखाम्बुजं च निर्मल-मुखाम्बुजं), त्वद्बिम्बस्य निर्मलमुखाम्बुजं त्वद्बिम्बनिर्मलमुखाम्बुजं, त्वद्बिम्बनिर्मलमुखा-म्बुजे बद्धं लक्षं यैस्ते त्वद्बिम्बनिर्मलमुखाम्बुजबद्धलक्षाः। इति त्रिचत्वारिंशत्तमका-व्यार्थः॥ ४३॥

जननयनेति। हे जननयनकुमुदचन्द्र! ते भव्याः अचिरात्–शीघ्रं मोक्षं प्रपद्यन्ते–प्राप्नुवन्ति। 'प्रपद्यन्ते' इति क्रियापदम्। के कर्तारः? 'ते'। कं कर्मतापन्नम्? 'मोक्षम्'। कथम्? 'अचिरात्'। ते किंलक्षणाः? 'विगलितमलनिचयाः' अर्थात् (विगलितः) कर्मलक्षणो मलनिचयो येभ्यस्ते विगलितमलनिचयाः। किं कृत्वा? 'भुक्त्वा'। काः कर्मतापन्नाः? 'स्वर्गसम्पदः' स्वर्गाणां–सौधर्मादीनां सम्पदो–लक्ष्म्यः ताः प्रति। किंल-क्षणाः? 'प्रभास्वराः' दीप्राः, न तु सामान्याः॥

जनानां नयनानि जननयनानि, जननयनान्येव कुमुदानि जननयनकुमुदानि, जनन-यनकुमुदेषु चन्द्र इव जननयनकुमुदचन्द्रः, तस्य सम्बोधनं हे जननयनमुकुदचन्द्र! इति विशेषणेन कविना श्रीसिद्धसेनेन दीक्षासमये श्रीवृद्धवादिसूरिस्वगुरुदत्तं कुमुदचन्द्र इति नामापि ज्ञापितम्। इति चतुश्चत्वारिंशत्तमकाव्यार्थदीपिका॥४४॥ युग्ममर्थतः। छ॥श्रीः॥

(अथ प्रशस्तिः)—

श्रीगौतमस्योपमितिं दधानाः
सौहित्यतः सद्विधिसावधानाः।
जयन्ति चन्द्रा इव सौम्यभाजः
श्रीवाचकेन्द्रा गुरुशान्तिचन्द्राः॥ १॥
तेषां विनेया बुधरत्नचन्द्राः
समस्तशास्त्राम्बुधिचन्द्रभासः।
अध्यापितानेकविनेयमुख्याः
शान्तप्रकृत्याऽऽशिवनचन्द्रतुल्याः॥ २॥

१ 'सूरीश्वरगुरु' इति ख–पाठः।

तेषां प्रसादात् समवाप्तविद्यो
माणिक्यचन्द्रो विवृतिं चकार ।
श्रीसिद्धसेनस्य कवेर्विलास-
काव्यस्य पार्श्वाप्तवरस्तवस्य ॥ ३ ॥

इति श्रीकल्याणमन्दिरस्तोत्रवृत्तिः सम्पूर्णा ॥

वृत्तिसूत्रयोः एकत्र मिलितं ग्रन्थाग्रं [1]७२० शुभं भूयात् ॥ कल्याणमस्तु ॥

॥ श्रीरस्तु ॥

*The poet sums up the panegyric and suggests his name.*

Oh Lord of the *Jinas* ! oh Omnipotent Being ! the *Bhavyas* who compose Thy hymn in accordance with the prescribed rules, with their mind thus concentrated, with portions of their body thickly covered up with hair standing erect and with their eyes (attention) fixed upon the pure face-lotus of Thy image, and whose heap of dirt is destroyed, attain in no time, oh Moon ( in opening ) the night-lotuses ( *Kumuda-Chandra* ) ( in the form ) of eyes of human beings ! salvation after enjoying the exceedingly brilliant prosperities of heaven. ( 43-44 )



१ '४८०' इति क-पाठः

# श्रीभक्तामरस्तोत्रपद्यानामकारादिवर्णक्रमः ।

| पद्यप्रतीकम् | पद्याङ्कः | पद्यप्रतीकम् | पद्याङ्कः |
|---|---|---|---|
| **व ( ३ )** | | **स ( ५ )** | |
| वक्तुं गुणान् गुणसमुद्र ! शशाङ्ककान्तान् | ४ | सम्पूर्णमण्डलशशाङ्ककलाकलाप– | १४ |
| वक्त्रं क्व ते सुरनरोरगनेत्रहारि | १३ | सिंहासने मणिमयूखशिखाविचित्रे | २९ |
| वल्गत्तुरङ्गगजगर्जितभीमनाद– | ३८ | सोऽहं तथापि तव भक्तिवशान्मुनीश ! | ५ |
| **श ( १ )** | | स्तोत्रस्रजं तव जिनेन्द्र ! गुणैर्निबद्धां | ४४ |
| श्च्योतन्मदाविलविलोलकपोलमूल– | ३४ | स्त्रीणां शतानि शतशो जनयन्ति पुत्रान् | २२ |

## श्रीकल्याणमन्दिरस्तोत्रगतपद्यानामकाराद्यनुक्रमः ।

| पद्यप्रतीकम् | पद्याङ्कः | पद्यप्रतीकम् | पद्याङ्कः |
|---|---|---|---|
| **अ ( ३ )** | | जन्मान्तरेऽपि तव पादयुगं न देव ! | ३६ |
| अन्तः सदैव जिन ! यस्य विभाव्यसे त्वं | १६ | **त ( ५ )** | |
| अभ्युद्यतोऽस्मि तव नाथ ! जडाशयोऽपि | ५ | त्वं तारको जिन ! कथं भविनां त एव | १० |
| अस्मिन्नपारभववारिनिधौ मुनीश ! | ३५ | त्वं नाथ ! जन्मजलधेर्विपराङ्मुखोऽपि | २९ |
| **आ ( ३ )** | | त्वं नाथ ! दुःखिजनवत्सल ! हे शरण्य ! | ३९ |
| आकर्णितोऽपि महितोऽपि निरीक्षितोऽपि | ३८ | त्वामेव वीततमस परवादिनोऽपि | १८ |
| आत्मा मनीषिभिरयं त्वदभेदबुद्ध्या | १७ | त्वां योगिनो जिन ! सदा परमात्मरूप– | १४ |
| आस्तामचिन्त्यमहिमा जिन ! संस्तवस्ते | ७ | **द ( २ )** | |
| **इ ( १ )** | | दिव्यस्रजो जिन ! नमत्त्रिदशाधिपाना– | २८ |
| इत्थं समाहितधियो विधिवज्जिनेन्द्र ! | ४३ | देवेन्द्रवन्द्य ! विदिताखिलवस्तुसार ! | ४१ |
| **उ ( २ )** | | **ध ( ४ )** | |
| उद्गच्छता तव शितिद्युतिमण्डलेन | २४ | धन्यास्त एव भुवनाधिप ! ये त्रिसन्ध्य– | ३४ |
| उद्द्योतितेषु भवता भुवनेषु नाथ ! | २६ | धर्मोपदेशसमये सविधानुभावा– | १९ |
| **क ( २ )** | | ध्यानाज्जिनेश ! भवतो भविनः क्षणेन | १५ |
| कल्याणमन्दिरमुदारमवद्यभेदि | १ | ध्वस्तोर्ध्वकेशविकृताकृतिमर्त्यमुण्ड– | ३३ |
| क्रोधस्त्वया यदि विभो ! प्रथमं निरस्तो | १३ | **न ( २ )** | |
| **च ( १ )** | | निःसङ्ख्यसारशरणं शरणं शरण्य– | ४० |
| चित्रं विभो ! कथमवाङ्मुखवृन्तमेव | २० | नूनं न मोहतिमिरावृतलोचनेन | ३७ |
| **ज ( २ )** | | **प ( १ )** | |
| जननयनकुमुदचन्द्र ! | ४४ | प्राग्भारसम्भृतनभांसि रजांसि रोषा– | ३१ |

श्रीमानतुङ्गसूरिप्रणीतं

# ॥ भयहरेत्यपरनामकं नमिऊणस्तोत्रम् ॥

( चिरन्तनमुनिरत्नरचितावचूरिसमेतम् )

---

अर्हम् ।

आदौ कविर्मङ्गलाभिधानपुरःसरं प्रस्तावनागाथामाह —

नमिऊण पणयसुरगण–चूडामणिकिरणरंजिअं मुणिणो ।
चलणजुअलं महाभय–पणासणं संथवं वुच्छं ॥ १ ॥

[ नत्वा प्रणतसुरगणचूडामणिकिरणरञ्जितं मुनेः ।
चरणयुगलं महाभयप्रणाशनं संस्तवं वक्ष्ये ॥ ]

नत्वा चरणयुगलम् । कस्य ? मुनेः–सर्वज्ञस्य । उत्तरत्र ( गा० ५ ) 'पासजिणचलण' इत्यादावनेकशः ( गा० १७–१९, २१ ) नामकीर्तनसामर्थ्यात् श्रीपार्श्वनाथस्य चरणयुगलम् । किंविशिष्टम् ? प्रणताः–आदिकर्मणि क्तविधानात् नन्तुमारब्धा ये सुरगणास्तेषां चूडाः–शिखास्तासु ये मणयस्तेषां किरणैः रञ्जितं–विच्छुरितं यत् तत् । 'वुच्छं' ति वक्ष्ये, करिष्यामि इत्यर्थः । कम् ? सम्यक् स्तूयतेऽनेन स्तुत्य इति करणेऽणि संस्तवस्तम् । स्तवशब्देनैव सिद्धे समुपसर्गो वैशिष्ट्यं द्योतयति, वैशिष्ट्यं चार्थप्रापणानर्थप्रतिघातसामर्थ्यात् । तत्रानर्थप्रतिघातकत्वमाह, महान्ति यानि जलज्वलनादिषोडशपदार्थसमुत्थानि [ यानि यानि ] भयानि तानि, प्रकर्षेण इतरभयनाशनपदार्थेभ्य आधिक्येन नाशयति महाभयप्रणाशनस्तम् । अनर्थे च प्रतिहते अर्थप्राप्तिरयत्नसिद्धैव, अथवा महाश्च–उत्सवा अभयं च–भयाभावस्तयोर्विषये पणं अवश्यमेतानि कुर्यामिति निश्चयरूपं असति–आदत्ते अपीयसां (अनेन?) असधातोः कर्तर्यनिटि महाभयपणासनस्तम् । अनेन च व्याख्यानेनार्थप्रतिपत्तिसामर्थ्यमप्युक्तं भवति । 'चलण' त्ति हरिद्रादित्वाद् लत्वम् ॥ १ ॥

Having bowed to the [1]ascetic's pair of feet which are coloured by rays of crest-jewels of an assemblage of the celestials who have made obeisance to (Him), I shall compose (in His honour) a hymn which will destroy great dangers [ or which ought to be recited at the time of festivals and safety ].—1

* * * *

---

१ 'स्तोत्रं प्रव०' इति ख–पाठः । २ 'मत्थाह' इति क–पाठः । ३ 'चाक्रिक' इति क–पाठः । ४ 'महाभयप्रणाश०' इति ख–पाठः । ५ प्रतिहत० । ६ 'हरिद्रादौ लः' इति सिद्धहैमे ( ८–१–२५४ ) ।

1 Lord Pārs'va's.

अत्र च स्तवे यद्यपि सलिला-ऽनलादिजानि षोडश भयानि प्रवचने प्रसिद्धानि तथाऽपि यथासम्भवं क्वचित् कस्यचिदन्तर्भावे 'रोग-जल' इत्यादिवक्ष्यमाण(अष्टादश)गाथाक्रमेण अष्टावेव तानि कर्त्रा विवक्षितानि । तत्र 'यथोद्देशं निर्देशः' इति न्यायादादौ युगलकेन रोगभयापहारितालक्षणं भगवतो माहात्म्यमुपवर्णयन्नाह—

सडियकरचरणनहमुह–निबुड्डनासा विवन्नलायन्ना ।
कुट्ठमहारोगानल–फुलिंगनिद्दड्ढसव्वंगा ॥
ते तुह चलणाराहण–सलिलंजलिसेयवुड्ढियच्छाया ।
वणदवदड्ढा गिरिपा–यव व्व पत्ता पुणो लच्छिं ॥ २–३ ॥–युग्मम्

[ शटितकरचरणनखमुखनिमग्ननासा विपन्नलावण्याः ।
कुष्ठमहारोगानलस्फुलिङ्गनिर्दग्धसर्वाङ्गाः ॥
ते तव चरणाराधनसलिलाञ्जलिसेकवर्धितच्छायाः ।
वनदवदग्धा गिरिपादपा इव प्राप्ताः पुनर्लक्ष्मीम् ॥ ]

न चायं नियमो यत् प्रथममुद्देश (स्ततो निर्देश इति, अन्यथाऽप्याचार्यप्रवृत्तस्याल म्भात्) इति । शैली (चेयं) आचार्यस्य, अस्मात्परस्तवेऽप्यवी(वे?)क्षणात् । करेति च इत्यादि चतुर्णां द्वन्द्वैकत्वे शटितं–विशीर्णं कर चरण नख मुखं येषां ते तथा, तथा 'निबुड्ड' त्ति निमग्ना नासा येषां ते तथा, ततो विशेषणकर्मधारयः । विपन्नं–विगतं निःश्रीकं वा लावण्यं येषां ते तथाभूताः । कुष्ठं प्रसिद्धं तदेव यो महारोगः सन्तापजनकत्वात् अनल इव कुष्ठमहारोगानलः तस्य स्फुलिङ्गा इव स्फुलिङ्गाः–पीडोद्भवप्रकारास्तैर्निर्दग्धानि सर्वाणि उक्ताङ्गातिरिक्तानि अपि अङ्गानि येषां ते तथा, अपगम्यमानत्वात् । तेऽपि प्राणिनः तव—श्रीपार्श्वस्य चरणयोः आराधना सैव सलिलाञ्जलिस्तेन करणभूतेन सेकः–सेचनं तेन कर्त्रा वर्धिता छाया–शोभा येषां ते तथा सन्तः प्राप्ताः पुनर्लक्ष्मी–आरोग्यसम्पदम् । उपमानमाह–वन(दव)दग्धा गिरेः पादपास्त इव, केषाञ्चित् पुनः प्रतिक्षणं पाटवोद्भवः । वृक्षपक्षे तु किसलयादिक्रमेणोद्भवा(वोऽ)भिमुख्यः(लक्ष्यः ?)। अन्येषामपि रोगाणां भवदुपासनात एव उपशम इति सर्वरोगसङ्ग्रहार्थं रोगानलस्फुलिङ्गदग्धसर्वाङ्गा इति योग्यम् । 'कुट्ठमहा' इति रोगिणामेव विशेषणं, कुषितं–रोगैरेव निष्कर्षितं महः–तेजो येषां ते, सर्वरोगपक्षे च शद्‍धातोरवसादनेऽपि प्रवृत्तेः शटितम्–अवसन्नं अकिञ्चित्करं करादि येषां ते तथा, निबुड्डने–निमज्जने आशा–आकाङ्क्षा येषां ते, मर्तुकामा इत्यर्थः ॥ २–३ ॥

१ 'वर्धितोरुमाहा' इत्यर्थे 'वुड्ढिउच्छाहा' इति पाठः क्वचित् । २ '०निमज्जनाशा विवर्णलावण्याः' इत्यपि सम्भवति । ३ 'कुषितमहा. ( whose luster has faded ) रोगा०' इत्यपि घटते । ४ करादीनामनुक्रमादारेकैव समाधीयते । ५ 'विवर्ण' इति ख–पाठः । ६ 'प्रापुः' इति क–पाठः ।

Those (persons) whose hands, feet, nails and mouth have decayed, whose nose is bent low [or who desire to drown themselves], whose loveliness is lost [or has become pale] and whose limbs in entirety have been burnt by sparks of fire of terrible disease viz, leprosy, once more attain beauty like sylvan trees burnt by conflagration, on their lustre being enhanced by sprinkling of a handful of water of service (rendered) to Thy feet 2-3

* * * *

अत्र प्रतिद्वारं युग्ममिति तेनैव जलभयापहारमाह—

दुव्वायखुभिय जलनिहि, उब्भडकल्लोलभीसणारावे ।
संभंतभयविसंठुल–निज्जामयमुक्कवावारे ॥
अविदलिअजाणवत्ता, खणेण पावंति इच्छिअं कूलं ।
[1]पासं[2]जिणचलणजुअलं, निच्चं चिअ जे नमंति नरा ॥४–५॥–युग्मम्

[ दुर्वातक्षुभिते जलनिधौ उद्भटकल्लोलभीषणारावे ।
सम्भ्रान्तभयविसंस्थुलनिर्यामकमुक्तव्यापारे ॥
अविदलितयानपात्राः क्षणेन प्राप्नुवन्ति ईप्सितं कूलम् ।
पार्श्वजिनचरणयुगलं नित्यमेव ये नमन्ति नराः ॥ ]

दुष्टो वातः, तेन क्षुभिते जलनिधौ। द्वयोरपि सप्तमीलोपः प्राकृतत्वात् । तथा उद्भटा–उदारा ये कल्लोलास्तेषां भीषण आरावः–शब्दो यत्र तेन भीषणः–आरावो यस्य । सम्भ्रान्ताः–किङ्कर्तव्यतामूढाः भयेन विसंस्थुलाः–विह्वला ये नियामकाः–पोतवाहकाः तैर्मुक्तः व्यापारः–पोतवाहनादिलक्षणो यत्र, यद्वा शं च–सुखं च भा–दीप्तिस्तयोरन्तः–समाप्तिर्यत्र तद्विधं यद् भयं तेन विसंस्थुलाः । अथवा शं–भोगसुखमस्यास्तीति मत्वर्थीये भप्रत्यये शम्भः–पोतनायकस्तस्य यद् अन्तभयं–मृत्युभीस्तेन विसंस्थुलैः नियामकैर्मुक्तव्यापारे ॥ एवंविधेऽप्यर्णवे न विदलितं–भग्नं यानपात्रं–प्रवहणं येषां ते तथाविधाः सन्तः क्षणेन प्राप्नुवन्ति ईप्सितं कूलं–रोधः । के ते ? नराः । किं सर्वेऽपि ?, नेत्याह–ये नमन्ति पार्श्वजिनचरणयुगलम् । चिअ–अपिशब्दस्यावधारणार्थत्वान्नित्यमेव, न पुनः सकृद् द्विस्त्रिर्वा । यद्वा पार्श्वजिनचरणयुगलं भवतः निच्चा–नीत्वा आत्ममानसे तथा 'अंचिअ' त्ति गन्धादिभिः पूजयित्वा ये नमन्तीति ॥ ४–५ ॥

---

१ 'निच्चंचिअ' इत्यपि स्यात्, तदा नीत्वाऽर्चयित्वा इति प्रतिसंस्कृतं ज्ञेयम् । २ 'शभाऽन्तभय०' इत्यपि सङ्गच्छते ।

Those men who surely daily bow to the pair of feet of *Pārśva Tīrthankara* reach in a moment the desired shore, with their ships unwrecked, ( even ) in the ocean which is agitated by rough wind, which is terribly noisy on account of big waves and wherein sailors have parted with their occupation in virtue of their being non plussed and fear stricken [ or in consequence of their being frightened by the ( approaching ) end of happiness and loveliness, or fear of death of their captain ] 4-5

✻ ✻ ✻ ✻

खरपवणुद्धुयवणदव–जालावलिमिलियसयलदुमगहणे ।
डज्झंतमुद्धमयवहु–भीसणरवभीसणम्मि वणे ॥
जगगुरुणो कमजुअलं, निव्वाविअसयलतिहुअणाभोअं ।
जे संभरंति मणुआ, न कुणइ जलणो भयं तेसिं ॥ ६–७ ॥–युग्मम्

[ खरपवनोद्धतवनदवज्वालावलिमर्दितसकलद्रुमगहने ।
दह्यमानमुग्धमृगवधूभीषणरवभीषणे वने ॥
जगद्गुरोः क्रमयुगलं निर्वापितसकलत्रिभुवनाभोगम् ।
ये संस्मरन्ति मनुजा न करोति ज्वलनो भयं तेषाम् ॥ ]

एवंविधेऽपि च नैतेषां ज्वलनो भयं करोति, ये मनुजा जगद्गुरोः क्रमयुगलं संस्मरन्ति इति सम्बन्धः । खरः–प्रचण्डः पवनस्तेन उद्धतः–इतस्ततो विस्तारितो यो वनदवस्तस्य ज्वालावलिभिर्मलितानि–मर्दितानि सकलद्रुमगहनानि यत्र, वनेऽप्यवान्तरवनानि, यथा–आम्रवणमित्यादि । 'मिलिय' त्ति पाठे तु ज्वालावलिभिर्मिलितानि (–सम्पृक्तानि) दह्यमानत्वादिति योज्यम् । तथा दह्यमाना या (मुग्धा) मृगवध्वो–हरिण्यस्तासां यो भीषणो रवस्तेन भियं सनोति–ददातीति भीषणं–भयप्रदं तस्मिन् । यद्वा 'डज्झं' दाह्यं वा तस्यान्तः–अवसानं, यत्र गतानां अग्निदाहो न भवति दाह्यान्तः, तत्र मुग्धा–ज्वालाकुलिततया तदपरिच्छेदात् मूढा ये मृगा–अरण्यपशवः तेषां बहुर्यो भीषणरवस्तेन भीषण इति ॥ जगद्गुरोः–सामर्थ्यात् पार्श्वस्य निर्वापितः–आपत्तापोपशान्त्या सुखीकृतः सकलत्रिभुवनस्य आभोगः–प्रपञ्चो येन तत् । आभोगग्रहणं त्रिभुवने लेशमात्रस्याप्यनिर्वापणनिषेधार्थम् । न करोति ज्वलनः तेषां–संस्मरणकर्तॄणां भयम् । अन्येऽपि ये केचन कं–पानीयं निर्वापितसकलत्रिभुवनाभोगं सम्यक्

१ 'मिलिय' इति पाठान्तरम् । २ 'दाह्यान्तमुग्धमृगवधूबहुभीषण०' इत्यपि सम्भवति । ३ 'कम् अयुग-अल' इत्यर्थान्तरम् । ४ 'सम्भरन्ति' इति अर्थान्तरपक्षे । ५ '०मिलितानि–सम्पृक्तानि' इति क–पाठः ।

भरन्ति-पूरयन्ति घटादिभिस्तत्र निक्षिपन्ति इत्यर्थः, तेषां ज्वलनो भयं न करोतीत्युक्तिः । कं किंविधम्? 'अयुगलम्' 'युजिंच् समाधौ' (सिद्ध० धा०) योजनं युक्-समाधिः, न युग् अयुग्-असमाधिस्तं अलति-वारयतीति ॥ ६-७ ॥

Fire of the forest in which all the groves of trees have gathered together on account of [or have come in contact with] a series of flames of conflagration raised by rough wind and which is terrible on account of horrible cries of silly female deer that are being burnt [or of beasts perplexed (even though situated) in a place free from the attack of fire] causes no fear to those mortals who remember the universal preceptor's pair of feet which have alleviated (miseries of) the extent of all the three worlds as is the case with those who rightly fill (pots) with water which removes agony 6-7

✠ ✠ ✠ ✠

विलसंतभोगभीसण-फुरिआरुणनयणतरलजीहालं ।
उग्गभुअंगं नवजलय-सच्छहं भीसणायारं ॥
मन्नंति कीडसरिसं, दूरपरिच्छूढविसमविसवेगा ।
तुह नामक्खरफुडसिद्धमंतगरुआ नरा लोए ॥ ८-९ ॥-युग्मम्

[ [1]विलसद्भोगाभीषणस्फुरितारुणनयनतरलजिह्वालम् ।
उग्रभुजङ्गं नवजलदसदृशं [2]भीषणाकारम् ॥
मन्यन्ते कीटसदृशं दूरपरिक्षिप्तविषमविषवेगाः ।
तव नामाक्षरस्फुटसिद्धमन्त्रगुरुका नरा लोके ॥ ]

विलसन्-उल्लसन् आभोगः-शरीरम्, विलसन्तो वा भोगाः-फणा यस्य, न विद्यते भीर्यत्र तद् अभि-निर्भयं यद् ईषणं-दर्शनं अभीषणं तस्मै स्फुरिते-परिस्पन्दवती अरुणे-(रक्ते) नयने-लोचनयुग्मं यस्य, तरले जिह्वे यस्य स इति 'प्राण्यङ्गादातो लः' (सिद्ध० ७-२-२०) इति मत्वर्थीयो लः । अथवा तरलजिह्वाभ्यां सकाशात् आलं-अनर्थं लोकानां यस्मात् सः, ततो विशेषणकर्मधारयस्तम् । उग्रभुजङ्गं, नवजलदो-वार्षिकमेघः तेन 'सच्छहं' ति देश्यत्वात् सदृशं, तद्वत् श्याममित्यर्थः । भीषणाकारं-भयङ्कराकृतिं यद्वा भीषणः आ-समन्तात् इतस्ततश्चारो-वेल्लन्त आचारो-व्यवहारो यस्य ॥ तादृशमपि सर्पं मन्यन्ते कीदृशं? (गोमयकीटादितुल्यं, कुत्र? जगति-) लोके । के?-नराः । किंविधाः?-तव श्रीपार्श्वनाथेति यानि नामाक्षराणि तान्येव स्फुटः-प्रकटप्रभावो यः सिद्धो मन्त्रो गारु-

---

१ 'विलसद्आभोगभीषण०' इत्यपि घटते । २ 'भीषणाचार' इत्यपि अर्थ. । ३ '०गरिष्ठा' वा ।

डादिस्तेन गुरवो–गौरवास्पदं गरिष्ठा वा । कीटतुल्यमिति, अत्र हेतुमाह—दूरम्–अत्यर्थं विप्रकर्षं वा परि–समन्तात् 'छूढ' त्ति क्षिप्त:–अपास्तो विषमविषस्य वेगो–लहरीप्रसरो यैस्ते । त्वन्नाममन्त्रमाहात्म्यात् तस्य भुजङ्गस्य विषमोऽपि विषवेगस्तैर्दूरमपास्त इति भावः ॥८–९॥

Persons who have attained greatness in virtue of their well-known accomplishment of (the world-wide) incantation of letters of Thy name look upon the terrible serpent as a worm, in consequence of their having nullified effects of horrible poison the serpent which resembles a fresh cloud, whose hoods are flashing, whose red eyes are throbbing at fearless sight and whose wanton tongue is unsteady [or which has a resplendent body, red eyes flashing at fearless sight and an unsteady tongue which is a (cause of) calamity (to the world), and which is horrible in form, or whose movements are terrifying]. 8-9

ढ ए ञ ञ

अडवीसु भिल्ल-तक्कर-पुलिंद-सद्दूलसद्दभीमासु ।
भयविहुरवुन्नकायर-उल्लूरियपहियसत्थासु ॥
अविलुत्तविहवसारा, तुह नाह! पणाममत्तवावारा ।
ववगयविग्घा सिग्घं, पत्ता हिअइच्छिअं ठाणं ॥ १०–११ ॥–युग्मम्

[ अटवीषु भिल्ल-तस्कर-पुलिन्द-शार्दूलशब्दभीमासु ।
भयविह्वलविषण्णकातरोल्लुण्ठितपथिकसार्थासु ॥
अविलुप्तविभवसाराः तव नाथ! प्रणाममात्रव्यापाराः ।
व्यपगतविघ्नाः शीघ्रं प्राप्ता हृदयेप्सितं स्थानम् ॥ ]

'अडवीसु' अटवीषु, बहुवचनं सर्वत्रापीति ज्ञापयति । भिल्ला–म्लेच्छाः पल्लीवासिनः, तस्कराः–चौर्यवृत्तयः, पुलिन्दा–वनेचराः, शार्दूला–व्याघ्राः तेषां ये शब्दास्तैर्भीमासु । तथा भयेन विहुला–विह्वला 'वा विह्वले वौ वश्च' ( सिद्ध० ८-२-५८ ) इति विकल्पपक्षे 'सर्वत्र ल-व-रामचन्द्रे' ( सिद्ध० ८-२-७९ ) इति वलोपः । तथा 'वुन्न' त्ति विषण्णा, 'व्यत्ययश्च' ( सिद्ध० ८-४-४४७ ) इति वचनात् अपभ्रंशोक्तोऽपि 'विषण्णोक्त'त्यादि ( सिद्ध० ८-४-४२१ ) सूत्रेण वुन्नादेशः । तथाऽकारप्रश्लेषादकातरैर्भिल्लादिभिः । अथवा 'कवि वन्धने' ( सिद्ध० धा० ? ) कवनं कावो–बन्धनं तत्र रताः कावरता ये पथिकान्

१ 'भुजङ्गमस्य' इति क–पाठः । २ 'भयविहुरवुन्नकायरोल्लु०' इत्यपि अर्थे । ३ 'हितेप्सित' वा । ४ इत्यादिना 'वर्त्मनो वुन्न वुत्त विच्च' इति ज्ञेयम् ।

बध्नन्ति तैः । 'उल्लूरिअ' त्ति लुण्टिताः पथिकाः सार्था यासु ॥ एवंविधास्वप्यटवीषु हे नाथ! तव प्रणाममात्रमेव व्यापारः–कृत्यं येषां ते तन्माहात्म्यादेव न विलुप्तं–मुषितं विभवसारं–उत्कृष्टं धनं येषां ते व्यपगतविघ्नाः शीघ्रं प्राप्ताः हृदयेप्सितं–मनसा यत् प्राप्तुमिष्टं हितेप्सितं वा स्थानम् ॥ १०–११ ॥

Oh Lord! those whose only activity is obeisance to Thee quickly reach the desirable goal, with their essence of wealth unmolested and with their obstacles completely surmounted even from jungles which are terrifying on account of tumult of the *Bhillas*, thieves, savages and tigers (or lions) and wherein travellers and caravans afflicted with fear and pain have been plundered by the *Bhillas* 10–11

* * * *

पज्जलिआणलनयणं, दूरवियारियमुहं महाकायं ।
नहकुलिसघायविअलिअ–गइंदकुंभत्थलाभोअं ॥
पणयससंभमपत्थिव–नहमणिमाणिक्कपडिअपडिमस्स ।
[1]तुह वयणपहरणधरा, सीहं कुद्धंपि न गणंति ॥ १२–१३ ॥–युग्मम्

[ प्रज्वलितानललयनं दूरविदारितमुखं महाकायम् ।
नखकुलिशघातविदलितगजेन्द्रकुम्भस्थलाभोगम् ॥
प्रणतससम्भ्रमपार्थिवनखमणिमाणिक्यपतितप्रतिमस्य ।
तव वचनप्रहरणधराः सिंहं क्रुद्धमपि न गणयन्ति ॥ ]

प्रज्वलितो योऽनलः स इव रक्तत्वादिसाधर्म्यान्नयने यस्य तम् । दूरम्–अत्यर्थं विदारितं–व्यात्तं मुखं येन, प्रसारितास्यमित्यर्थः । महान् कायः–शरीरं यस्य, यद्वा 'कै शब्दे' (पा० धा० ९१६) कायनं कायः शब्दः–महाक्ष्वेडानादस्तमिति । नखाः कुलिशानीव–कार्कश्यादिभिर्वज्रा इव तेषां घातः–प्रहारस्तेन विदलितो यो गजेन्द्राणां कुम्भस्थलविस्तारो येन ॥ ईदृशं सिंहं क्रुद्धमपि तव वचनप्रहरणधरा नरा न गणयन्ति–न भयहेतुतया सम्भावयन्ति । तव किं० ? प्रणताः ससम्भ्रमा–आदरसहिता ये पार्थिवा–नृपाः, अथवा पृथिव्यां ज्ञाताः–विख्याताः पार्थिवाः इन्द्रादयस्तेषां सम्बन्धिनो नखमणिमाणिक्येषु पतिता प्रतिमा–बिम्बं यस्य । मणिषु–रत्नेषु मध्ये माणिक्यानि. जात्यरक्तरत्नानीत्यर्थः । ततः नखा एव स्वच्छत्वात् मणिमाणिक्यानीति यस्य नखरत्नेषु प्रणमन्तः पार्थिवाः प्रतिबिम्बितास्तस्य तव

१ 'तुहवयण०' इत्यपि पठते । २ 'नभमणि०' इति वा । ३ 'कायादेशः महा०' इति क–पाठ. । ४ 'प्रतिबिम्बिता' इति क–पाठ ।

इत्यादि । एवं च निर्देश आर्षत्वात्, अन्यथा नखमणिमाणिक्यप्रतिमस्य ससम्भ्रमं पार्थिवानां नभ इव नभो–मस्तकं तत्र ये मणयः–चन्द्रकान्ताद्या माणिक्यानि च–कर्केतनादीनि तेषु पतिता प्रतिमा यस्य । भगवानेव तत्र प्रतिबिम्बित इत्यर्थः ॥ १२–१३ ॥

Those who wield the weapon of speech of Thine in whose nails resembling jewels and rubies, are reflected images of the kings who have reverentially prostrated themselves, do not mind even the enraged lion whose eyes are (red) like kindled fire, whose mouth is wide open and whose body is gigantic (whose roar is very loud) and who has pierced the expanse of temples of lordly elephants with strokes of adamantine nails 12-13

* * * *

ससिधवलदंतमुसलं, दीहकरुल्लालवुड्ढिउच्छाहं ।
महुपिंगनयणजुअलं, ससलिलनवजलहरायारं[2] ॥
भीमं[3] महागइंदं, अच्चासन्नं पि ते न विगणंति ।
जे तुम्ह चलणजुअलं, मुणिवइ ! तुंगं समल्लीणा ॥१४–१५॥—युग्मम्

[ शशिधवलदन्तमुसलं दीर्घकरोल्लालवर्धितोत्साहम् ।
मधुपिङ्गनयनयुगलं ससलिलनवजलधराकारम् ॥
भीमं महागजेन्द्रं अत्यासन्नमपि ते न विगणयन्ति ।
ये तव चरणयुगलं मुनिपते ! तुङ्गं समालीनाः ॥ ]

दन्तौ मुसलाविव दन्तमुसलौ, शशिधवलौ तौ यस्य तम् । दीर्घो यः करः–शुण्डा तस्योल्लालनं–उच्छालनं तेन वर्धित उत्साहः–प्रगल्भता सरम्भो वा यस्य । मधुवत् पिङ्गं–पिङ्गलवर्णं नयनयुगलं यस्य सः । ससलिलो–जलपूर्णो यो नवजलधरस्तस्याकार इवाकार–आकृतिर्यस्य, श्यामत्वाद् उन्नतत्वाच्च । अत्र जलधरशब्दो मेघमात्रवाची, न तु क्रोडीकृतजलगर्भवाची, सलिलपदस्य पौनरुक्त्यापत्तेः । अथवा स्वसलिलेन निजमदजलेन नवजलधराकारं, वपुकत्वात् ॥ भीमं महागजेन्द्रं, महच्छब्देन महत्त्वं व्यज्यते । अथवा भियो मर्माणि घ्नन्ति भीममर्महा अतो निर्भयास्ते नरा गजेन्द्रं–महागजमिति योज्यम् । अत्यासन्नमपि ते नरा न विगणयन्ति–भयहेतुनया न भावयन्ति । ये तव चरणयुगलं तुङ्गं–गुणैरुन्नतं हे मुनिपते ! समालीनाः–सम्यगाश्रिताः । यो हि तुङ्गं–पर्वतादिकं समाश्रयति कुतः तस्य अत्यासन्नादपि गजेन्द्राद् भयमिति ॥ १४–१५ ॥

१ 'भवानेव' इति ख–पाठ । २ 'राय' इत्यपि पाठ । ३ भीममहा गइंद इत्यपि पदच्छेद, समुचितः, अर्थान्तर यथा—भीममर्महा (who have pierced the vital parts of fear) गजेन्द्राः । ४ 'स्वसलिल०' (own rut) इत्यपि घटते ।

Oh Lord of sages! those who have rightly resorted to Thy lofty pair of feet do not take into account even the terrible and enormous elephant who has come very close to them, with its mace-like tusks resembling the moon in whiteness, with its inclination [ or rage ] excited by the upraising of long trunks, with its pair of eyes yellow like honey and with its ( dark ) figure reminding of the cloud surcharged with water 14-15

* * * *

समरम्मि तिक्खखग्गा–भिग्घायपविद्धउद्धुयकबंधे ।
कुंतविणिभिन्नकरिकलह–मुक्कसिक्कारपउरम्मि ॥
निज्जिअदप्पुद्धररिउ–नरिंदनिवहा भडा जसं धवलं ।
पावंति पावपसमिण ! 'पास'जिण ! तुहप्पभावेणं ॥१६–१७॥–युग्मम्

[ समरे तीक्ष्णखड्गाभिघातप्रेरितोद्धुतकबन्धे ।
कुन्तविनिर्भिन्नकरिकलभमुक्तसीत्कारप्रवरे ॥
निर्जितदर्पोद्धुररिपुनरेन्द्रनिवहा भटा यशो धवलम् ।
प्राप्नुवन्ति पापप्रशमन ! पार्श्वजिन ! तव प्रभावेण ॥ ]

समरे तीक्ष्णा ये खड्गास्तेषामभिघाताः–प्रहारास्तैः 'पविद्धमणुवयारं' इतिवत् 'पविद्ध'-शब्दस्यानियन्त्रितार्थवृत्तित्वादनियन्त्रितम्–उच्छृङ्खलं यथा भवत्येवमुद्धता–इतस्ततो नर्तितुं प्रवृत्ता उच्छलिता वा। अथवा 'पविद्धं परियए' इति देशीवचनात् 'पविद्ध' त्ति तीक्ष्णखड्गाभिघातेन प्रेरिताः सन्तः उद्धता वा कबन्धा–अशीर्षा रुण्डा यत्र। कुन्तैः–शस्त्रभेदैः विशेषेण वा निर्भिन्ना–विदारिताङ्गा ये करिकलभास्तैर्मुक्ता ये सीत्काराः–सीत्कृतरवास्तैः प्रवरे, 'पउर' त्ति पाठे प्रचुरे। 'विणिभिन्न' त्ति 'अन्त्यव्यञ्जनस्य' (सिद्ध० ८–१–११) इति निरोरलुक्॥ तादृशे समरे भटा धवलं यशः–साधुवादं प्राप्नुवन्ति हे पार्श्वजिन ! तव प्रभावेण। पाप–अशुभं कर्म प्रशमयतीति पापप्रशमनस्तस्यामन्त्रणम्। भटाः किंविधाः? निर्जितो–निश्चितं पराजितो दर्पोद्धुराणाम्–अभिमानोन्नतानां रिपुनरेन्द्राणां निवहः–समूहो यैः ॥ १६–१७ ॥

---

१ 'पउरम्मि' इत्यपि पाठ 'प्रचुरे' इत्यर्थक.।

२ सम्पूर्णं पद्य तच्छाया चैवम् ( प्रवचनसारोद्धारे द्वा० २, गा० १५६ )—

"पविद्धमणुवयारं जं अप्पिंतो णिजतिओ होइ।
जत्थ व तत्थ व उज्झइ कयकिच्चोऽवक्खरं चेव ॥"

प्रविद्धमनुपचारं यदर्पयन् नियन्त्रितो भवति।
यत्र वा तत्र वा उज्झित्वा कृतकृत्योऽवस्करं चैव ॥

३ 'पेरप(?) इति' इति ख–पाठः।

Oh *Pars'va Jina* who has exterminated sins! the soldiers who have vanquished on account of Thy prowess unfriendly kings puffed up with pride, attain untarnished fame in the war wherein are dancing the trunks in a unrestrained manner on their being struck by sharp swords, which is tumultuous in virtue of the sounds raised by young elephants (in consequence of their temples being) pierced by spears 16-17

* * * *

साम्प्रतं निर्दिष्टानामेव भयानां सङ्ग्रहमाह—

रोग-जल-जलण-विसहर—चोरारि-मइंद-गय-रणभयाइं ।
'पास'जिणनामसंकि—त्तणेण पसमंति सव्वाइं ॥ १८ ॥

[ रोग-जल-ज्वलन-विषधर-चोरारि-मृगेन्द्र-गज-रणभयानि ।
पार्श्वजिननामसङ्कीर्तनेन प्रशाम्यन्ति सर्वाणि ॥ ]

चौरा एवारयश्चौरारयः रोगादीनां द्वन्द्वः, एभ्यः प्रत्येकं भयानि कर्तृणि पार्श्वजिनस्य यन्नाम तस्य 'सङ्कीर्तनं' सम्यक्—विशुद्धश्रद्धापूर्वकमुच्चारणं तेन हेतुना प्रशाम्यन्ति—प्रकर्षेण अपुनरुत्थानेन विरमन्ति अर्थाद् भक्तानां सर्वाणि । अत्र च वृद्धविवरणादुक्तः कश्चिन्मन्त्रो दृश्यते—"ॐ ह्रीँ नमिऊण पास विसहर वि(व?)सह जिणफुल्लिङ्ग ह्रीँ रोगजल(जलणविसहरचोरारिमइंदगयरणभयाइं) पसमंति सव्वाइं मम स्वाहा" । अयं च महामन्त्रोऽस्मिन् स्तवे विप्रकीर्णाक्षरीकृत्य कविना निक्षिप्तः । तथाहि—अनलशब्देनाग्निबीजं, तु(ह?)कारः त्रिभुवनशब्देन त्रैलोक्यबीजं ह्रींकारः, नमिऊण, पास, विसहर त्ति त्रीणि पदानि स्पष्टमेव वीक्ष्यन्ते वि(व)सह त्ति द्वितीयगाथाया व्यस्ततया, जिण फुलिंग त्ति द्वे पदे स्पष्टे एव स्तः, अन्त्यगाथाया सकलभुवनपदेन पुनः ह्रींकारः । अग्रेतनपदानि प्रकटान्येव सन्ति । मम त्ति व्यस्ततया पवनशब्देन वायुबीजं स्वा इति । नभःशब्देन नभोबीजं हा इति स्पष्टो वा हाशब्द एवास्ति । क्षिप ॐ स्वाहा इति पञ्च भूतबीजानि । प्रभावः पुनरस्य सर्वभयोपशमादिति ॥ १८ ॥

Terrors one and all arising from a disease, a sea, fire, a serpent, a unfriendly thief, a lion, an elephant and a battle subside by eulogizing the name of *Pārs'va Jina* 18

* * * *

अधुना विशेषकेण निगमनमभिधित्सुः कविः प्रथमगाथया प्रस्तुतस्तवस्य माहात्म्यं, द्वितीयगाथया तस्यैव पठनावसरं, तृतीयया च जिननामकीर्तनं प्रार्थनावचनं चाह—

एवं महाभयहरं, 'पास'जिणिंदस्स संथवमुआरं ।
[1]भवियजणाणंदयरं, कल्लाणपरंपरनिहाणं ॥

[1] 'भवियजणाण दयर कल्लाणपर परनिहाण' इत्यपि पदच्छेदः, एतत्प्रतिसंस्कृतं तु तदेवम्—'भविकजनानां अन्दकर कल्याणपर परनिभानाम्' ।

रायभय-जक्ख-रक्खस—कुसुमिण-दुस्सउण-रिक्खपीडासु ।
संझासु दोसु पंथे, उवसग्गे तह य रयणीसु ॥
जो पढइ जो अ निसुणइ, ताणं कइणो य 'माणतुंग'स्स ।
'पासो' पावं पसमेउ, सयलभुवणच्चियचलणो ॥ १९—२१ ॥—विशेषकम्

[ एवं महाभयहरं पार्श्वजिनेन्द्रस्य संस्तवमुदारम् ।
भविकजनानन्दकरं कल्याणपरम्परानिधानम् ॥
राजभय-यक्ष-राक्षस-कुस्वप्न-दुःशकुन-ऋक्षपीडासु ।
सन्ध्ययोः द्वयोः पथि उपसर्गे तथा च रजनीषु ॥
यः पठति यश्च निशृणोति तयोः कवेश्च मानतुङ्गस्य ।
पार्श्वः पापं प्रशमयतु सकलभुवनार्चितचरणः ॥ ]

एवम्—उक्तप्रकारेण पार्श्वजिनेन्द्रस्य सस्तवं वक्ष्यमाणक्रियायाः कर्मतापन्नम् । किंविधम्? महाभयं हरतीति तम् । अनेन स्तवस्य सान्वयं नाम ख्यापितम्, अनर्थप्रतिघातित्वात् । अर्थप्रापणपक्षे च पूर्ववत् । महच्चाभयं च तेषा गृहं उदारं शब्दतोऽर्थतश्च, भव्यजनानन्दकर भव्याः—सिद्धिगमनयोग्यास्ते चाव्यवहारिकनिगोदा अपि भवेयुः, अतस्तद्व्यवच्छेदार्थमाह—जायन्ते व्यवहारराशाविति ( जनास्तेषा आनन्दं—सुखं करोतीति भविकजनानन्दकरस्तं. पुनः कीदृशं? ) । कल्याणपरम्पराया निधानमिव । अथवा अन्यथैवोत्तरार्धमाह—व्याख्या भवियजणाण० कल्लाणपरं ति भव्यजनानां कल्याणानि पिपर्त्तीत्यचि कल्याणपरं कल्याणैकनिष्ठं वा 'अदयरं परनिहाणं'ति 'अंद बन्धने' (?) अन्दनं अन्दो—बन्धनं तत् करोतीत्येवंशीलं अन्दकरम् । केषाम्? परेषा—शत्रूणां निभानि—कपटान्युच्चाटनादीनि तेषां परकृतक्षुद्रकर्मणा स्तम्भकारकमित्यर्थः ॥ 'रायभय' राजभयं च यक्षाश्च राक्षसाश्च कुस्वप्नाश्च दुष्टशकुनानि ऋक्षाणि च—नक्षत्राणि राशयो वा तेषां पीडास्तासु । बहुवचनं प्रत्येकं पीडायोजनार्थम् । ऋक्षपीडा च वस्तुतो ग्रहपीडैव । सूर्यादयो हि ग्रहा अश्विन्यादिनक्षत्रेष्वेव चरिष्णवोऽशुभगोचरस्थाः पीडायै कल्पन्ते, न स्वातन्त्र्येण । अथवाऽकारप्रश्लेषादरयः—शत्रवः तेषां पीडा, तथा खपीडा खशब्देन खस्था ग्रहाः व्यपदिश्यन्ते तेषां पीडेति पृथक् योज्यम् । तथा सन्ध्ययोः—प्रातरपराह्णसन्धिवेलयोः पथे—अरण्यादिमार्गे उपसर्गे—दिव्यमानुषादौ, तथा चेति समुच्चये रजनीषु ता हि भयावहाः

१ 'महाऽभयगृह' इत्यपि सङ्गच्छते । २ '०शकुना-ऽरि-खपीडासु' इत्यपि सम्भवति । ३ 'सावयव' इति क-पाठश्चिन्तनीय. । ४ 'स्तवयवशब्दार्थं' इति क-पाठः ।

स्युः । बहुवचनं पूर्वरात्रादिभेदसङ्ग्रहार्थम् ॥ एतेषु भयस्थानेषु एनं संस्तवं यः कश्चित् पठति यश्चैतत् पठ्यमानं प्राकृते निपूर्वस्य शृणोतेर्विशिष्टश्रवणार्थत्वात् योगत्रयोपयोगपुरःसरं शृणोति । 'ताणं' ति तयोर्द्वयोः ऋपिकवेश्च–एतत्स्तवकर्तुः मानतुङ्गाभिधानस्य पार्श्वो जिनः न पार्श्वयक्षः, तं प्रति वक्ष्यमाणविशेषणानुपपत्तेः पापम्–अशुभं कर्म राजभयादीनां कारणं प्रशमयतु । सकलं यद् भुवनं तेनार्चितौ चरणौ यस्य । भुवनशब्देन अत्र भुवनस्था जना गृह्यन्ते. सह कलया–माहात्म्येन वर्तते सकलः, अत एव भुवनार्चितचरणः, ततो विशेषणकर्मधारयः ॥ १९–२१ ॥ इति त्रिभिर्विशेषकम् ॥

## इति श्रीभयहरस्तोत्रावचूरिः समाप्ता ॥

May (Lord) *Pārśva* whose feet are worshipped by the entire universe destroy the demerit of even the poet *Mānatunga* along with the one who recites and one who hears this hymn of *Pārśva [illegible]* at both the twilights, at nights, at the time of afflictions caused by fear from the rulers, the *Yakshas*, the *Rākshasa* (devils), bad dreams and evil constellations and at the time adversity as well as on his way (being lost), the noble hymn which destroys terrible terrors [or which is a temple of great safety] which promises bliss to persons booked for salvation and which is a store house of [illegible] [or which brings up prosperity to living beings who are to be liberated (sooner or later) and which is a check to fraudulent devices of foes] 19–21



१ 'यश्च तेन पठ्यमान तथा (?) कुने निपूर्वस्य' इति ख–पाठः ।

श्रीमानतुङ्गमुनीश्वरसन्दृब्धं

## ॥ भत्तिब्भरेत्यपराह्वं पञ्चपरमेष्ठिस्तवनम् ॥

भत्तिब्भरअमरपणयं पणमिय परमिट्ठिपंचयं सिरसा ।
नवकारसारथवणं भणामि भव्वाण भयहरणं ॥ १ ॥
ससि सुविहि य अरिहंता सिद्धा पउमाभवासुपुज्जजिणा ।
धम्मायरिआ सोलस पासो मल्ली उवज्झाया ॥ २ ॥
सुव्वय नेमी साहू दुट्ठारिट्ठस्स नेमिणो धणियं ।
मुक्खं खेअरपयवीं अरिहंता दिंतु पणयाणं ॥ ३ ॥
[1]तिअलोअवसीकरणं मोहं सिद्धा कुणंतु भुवणस्स ।
जलजलणाईसोलसपयत्थ थंभंतु आयरिआ ॥ ४ ॥
इहलोइयलाभकरा उवज्झाया हुंतु सव्वभयहरणा ।
पावुच्चाडननाडननिउणा साहू सया सरह ॥ ५ ॥
महिमंडलमरिहंता गयणं सिद्धा य सूरिणो जलणो ।
वरसंवरमुवज्झाया पवणो मुणिणो हरंतु दुहं ॥ ६ ॥
अरिहंता असरीरा आयरिआ तह उवज्झया मुणिणो ।
पंचक्खरनिप्फन्नो ॐकारो पंचपरमिट्ठी ॥ ७ ॥
ससिधवला अरिहंता रत्ता सिद्धा य सूरिणो कणयं ।
मरगयभा उवज्झाया सामा साहू सुहं दिंतु ॥ ८ ॥
सीसत्था अरिहंता सिद्धा वयणम्मि सूरिणो कंठे ।
हिययम्मि उवज्झाया चरणठिआ साहुणो वंदे ॥ ९ ॥
वट्टकला अरिहंता तेउणा सिद्धा य लोटकल सूरी ।
उवज्झाया सुद्धकला दीहकला साहुणो सरणं ॥ १० ॥
पुंसत्थिनपुंसयरा पुरिसबहुवेण्णवंदणिज्जाणं ।
जिणसिद्धसूरिवायगसाहूण कमे नमंसामि ॥ ११ ॥
पढमदुसरा अरिहंता चउस्सरा सिद्धसूरिउवज्झाया ।
दुगदुगसरा कमेणं नंदंतु मुणीसरा दुसरा ॥ १२ ॥
वण्णनिवहो कंकाइ जेसिं बीओ हकारपज्जंतो ।
नियनियसरसंजोगा सरेमि चूडामणिं तेहिं ॥ १३ ॥

---

१ 'तेलुक्क' इति ग-पाठ । २ 'निउणा' इति ख-पाठः । ३ 'सुहया' इति ख-पाठ. । ४ 'सहवण्णणिज्जाय' इति ख-पाठ. । ५ 'कडाइ' इति क-पाठ. ।

ते पुण अएकचटतपजसत्ति नव वग्गा वण्ण पणयाला ।
परमिट्ठिमंडलकमा पढमंतिमतुरिया तियबीया ॥ १४ ॥
ससि सुक्के अरिहंता रविमंडल सिद्ध गुरुबुहा सूरी ।
सरह उवज्झाय केऊ कमेण साहू सणी राहू ॥ १५ ॥
सेयारुणपीयपियंगुवण्णं कसिणाइविउविपत्ताइं ।
अबिलमहुतित्तकसायकडुअ परमिट्ठिणो वंदे ॥ १६ ॥
तिहि नंदा अरिहंता भद्दा सिद्धा य सूरिणो विजया ।
तिहिरित्ता उवज्झाया पुण्णा साहू सुह दिंतु ॥ १७ ॥
ससिमंगलमरिहंता वुद्धा सिद्धा य सुरगुरू सूरी ।
सुक्कोवज्झाय पुणो साहू मंदा सुहंभाणू ॥ १८ ॥
कत्तियचित्तो अरिहा वइसाहो मग्गमास सिद्धा य ।
पोसो जिट्ठो भद्दव आसोआ सूरिणो सुहया ॥ १९ ॥
माहासाढुवज्झाया फग्गुणमासो अ सावणो साहू ।
मम मंगलमरिहता अचिनचिंतामणि दिंतु ॥ २० ॥
पुंमयरा अरिहंता धणिद्धापंचगा य सिद्धा य ।
दिगुरिक्खा आयरिआ नमामि सिरसा य भत्तीए ॥ २१ ॥
अद्दाई जे रिक्खा उवज्झाया तेमि दिंतु गुणनिवहं ।
चित्ताईसाइ साहू सासयसुक्खं महं दिंतु ॥ २२ ॥
जममज (?) अंत अरिहा मेसा मयराय अंतिणो सिद्धा ।
पंचाणण अलि सूरी धणमिहुणुज्झायया वंदे ॥ २३ ॥
कक्कड तुला य साहू दा दह रासी ह पचपरमिट्ठी ।
भावेणं थुणमाणो पावइ सुक्खं च मुक्खं च ॥ २४ ॥
पुवाणुपुविहिट्ठा समयाभेएणं कुण जहाजिट्ठं ।
उवरिमतुलं पुरओ नासिज्ज पुवकमो सेसे ॥ २५ ॥
जम्मि निक्खित्तो तह पुणरवि सो चेव अंकविण्णासो ।
सो होइ समयभेओ वज्जेयबो पयत्तेणं ॥ २६ ॥
इच्छियपयरगइए नामब्भासो अभंगपरिमाणं ।
अंतकभागलद्धं ठवियज्जा पुणपुण धरियं ॥ २७ ॥

---

१ 'किसिणाइं विडविएत्ताहि' इति ख-पाठ । २ 'पुअसरा' इति ख-पाठ । ३ 'मुक्ख सुहं' इति ख-पाठ । ४ 'कक्का विसमर' इति ग-पाठ । ५ 'धणू य मिहुणो य उवज्झाया' इति ग-पाठ. । ६ 'दु' इति क-पाठ । ७ 'अंकाणं' इति ग-पाठ ।

मूलगपंतिदुगेणं अंको न ठविज्जइ स्मि जे अंका ।
तेसि दुभेगे काउं नसिज्ज कमउक्कमेणं तु ॥ २८ ॥
तं नत्थि जं न इत्थं निमित्तगहगणियमंतंततंताई ।
जं पत्थिअं न यच्छइ कहेइ जं पुच्छिअ सयलं ॥ २९ ॥
तिहुअणसामिणिविज्जा महमंतो मूलमंततंताइं ।
इत्थ ठिअं न ( पि? ) नज्जइ गुरुवएस विणा सम्मं ॥ ३० ॥
सुमरिअमित्तं पि इमं तत्तं नासेइ सयलदुरिआइं ।
पारपरेण नायं तं नत्थि सुहं न जं कुणइ ॥ ३१ ॥
पंचनवक्कारथुत्तं लेसेणं सत्तिअ अणुभावेणं ।
सिरि'माणतुंग' माहिदमुज्जलं सिवसुहं दिंतु ॥ ३२ ॥
सभरह पढह झायह णिच्च घोसेह ण्हवह अरिहाई ।
भद्दपयं जइ इच्छह तम्मेवय अत्तणो णाणं ॥ ३३ ॥
महउवसग्गे पीडा कूरग्गहदंसण भयं सका ।
जइवि न हवंति एए तहवि निसंज्झं भणिज्जासु ॥ ३४ ॥
एसो परमरहस्सो परमो मंतो इमो तिहुभणम्मि ।
ता किमिह बहुविहेहि पढिएहि पुत्थिअमरेणं ॥ ३५ ॥

॥ इति पञ्चपरमेष्ठिस्तवन सम्पूर्णम ॥



१-२ 'ततनिय' इति ग-पाठः। ३ 'सव्व' इति ख-पाठ । ४ 'त्तावेण' इति क-पाठः। ५ 'माय' इति ख-पाठ'। ६ 'भओ सक्खा' इति ख-पाठः। ७ 'गहिएहि पुत्थयसएहिं' इति ग-पाठ । ८ 'पुत्थयभरेहिं' इति ख-पाठः।

श्रीमानतुङ्गमुनिवरविरचितं

## ॥ श्रीमहावीरजिनस्तवनम् ॥

कल्याणधामकरणं घनकेवलश्री-राजीवरोचितमनुत्तरतीर्थराजः ।
मत्त्वालयं प्रगुणराजिनयप्रमाण-सच्छासनं पटु नवानतमामनन्तम् ॥ १ ॥
श्रीवर्द्धमानेह सतां शिवाय-रुचायुरिप्यो नवि चाउलाला ।
स आडणीयाक्षरपाटवानां, लब्धे त्वयि (?) सेवितथालभाणाम् ॥ २ ॥
—युग्मम्
पुडहडीश ! सुरार्च्य ! नवा यमी, लघु अपोडन वा यमद्रापदाम् ।
घसघनत्सुरसींघोडां स्यु मः प्रवलखारिक चारोलीनताम् ॥ ३ ॥
कः कुली तव मुदाडिमनीहो वीक्ष्य जातिमघजूरति केलाम् ।
सद्रसाकर महानीमजां हो मंडली फलहुली वरसोलान् ॥ ४ ॥
आज्ञासानपुडी तरारि पिहुला पाजांतिमोटां स्फुरत्
माठाज्ञाभव सिंह केसर भलां लाडरगाडूसमा ।
यत्राप्नोति सुषांडघीयमगुणा आम्रांकुलीनः पदे
मांडीनामुरुकीर्ति सेव यशसा सेनो खुंद्राली ततः ॥ ५ ॥
सारमाकरस आंबिलवाणी जावनांदल साटोग्वमांत्वम् (?) ।
मां त्वसादहिवडीरणभूमि व्याधिभाजिनियघेवरसन्तम् ॥ ६ ॥
आचूरिमाला गुलघीअमिश्री दहींथरा गजसमाकुचीर्णा ।
तत्त्वा दया गुंदवडालकंसा कंसारभोच्चैं गुललापसीदन् ॥ ७ ॥
किं नारायणमुख्या आंबां केलां सुरासकानलियां ।
मुक्तेः खलु खडबूजा कपूजिता खांडघी अस्तु ॥ ८ ॥
नावेः शालिलुदालितोघृतशुभ त्वं केवडां घारडां
भासालेवड खांडमीलरसवाग् निःपापडेभ्यो वडी ।
श्रेयःपूरणकोपलेह भवतो मां चे त्वदाह्वापरे
रक्षां बीजतरुं घृणककरणां केलां गरागां दधेः ॥ ९ ॥
नित्यां प्रियां करमदांगिकचंबरिपूभा
पूपाखटी कृतभवैक इरीणदुःकृतः ।

---

१ टीकां विना एतस्य पदच्छेदादिपूर्वकसशोधनकर्मणि नाहमलम्, तथापि प्राचीनसाहित्यप्रचारकरणे यादृक् तादृगपि प्रसिद्धिर्न सर्वथाऽस्थानीयेति मे मतिः ।

आपत्रवेलितगुणामय लींबुयाद्युपा
त्वं निर्भरबाह्लिसुचंद्रसु चीभडां स्तुमः ॥ १० ॥
श्रेयःफली त्वमसि वाम्रिकसुंभियाप्रभृत्
खाटावनीशवनिताधवनीलु आच्यंस्वः ।
कस्तूरि आय शरणं मम तत्त्व वीक्ष्यतां
जंबीरआं बहुलितोत्तमभाववत्सलः ॥ ११ ॥
भ्रांतींद्दरां डोडिकामान्तभाजी डोडीभीतेर्मानसे सन्मनीराम् ।
त्वं ब्रह्मांको टींबडां कां करेलां कंकोडायां आमलीलाहि देव ! ॥ १२ ॥
काचरीळ्य वचसां गरीण ! भो भक्तिमुत्पलकलिंगडास्त्वयम् ।
तारकं टरसत्तुंममाम्रं विधि न समहिति कोहलां स्यतः (?) ॥ १३ ॥
पुण्यानुकूलरिपुगुन्दलजादरीया
त्वंदं मुनेह लहिगदुं सलु काकरीयात् ।
पोलीभ्य ओमडसिते विभवेहर्माल
भावात् परा निलवटी त्वयि भक्तिपूडात् ॥ १४ ॥
मांडा खीरभवो नर्याअकरस श्रीखंडना खोबल।
माहीं सातवराजसाखर लवे मेली कमो खाखरां ।
धाणा हीमनुतूतुया सदवडा कोरामनारिंगतो
रींफाणामुगिरां कृते कउठभस्त्र वाउलीआत् प्रभो ! ॥ १५ ॥
मुहृदृधजभवेमाखर साहहीन जयस करंवकः ।
कपटागणसणशालघोलइ त्वं च लूनभृदयुक्शलीमुखे ॥ १६ ॥
कांत्यानि जायफलकृत्तस एलचीर
श्रीचन्द्रमौल्यचलविंग वलक्षकीर्तेः ।
श्रीज्ञानज ! प्रशमपूर्ण ! तमालपत्र-
छाया भवे खयरसार निवृत्तिचेताः ॥ १७ ॥
कस्तूरी कमलालिचन्दनलसत्कर्पूरजैत्रानना-
मोदोद्यद्भवपानफूलसनरी चांहूलवीडां सदा ।
सोपारीत्वमिति प्रियां रसवतीं कृत्वार्थये त्वां परं
सौहित्यं सुमते विनेयसुकृते श्रीमानतुङ्गप्रभो ! ॥ १८ ॥

इति श्रीमहावीरस्तवनम् । लिवीकृतं प० अमीचन्द्रगणिना ग० श्रीराजचन्द्रवाचनकृते ।
संवत् १७४२ वर्षे माह वदि २ दिने श्रीदेवासनगरे ।



## ॥ श्रीसिद्धसेनदिवाकरकृतः शक्रस्तवः ॥

### ( जिनसहस्रनामापराभिधः )

ॐ नमोऽर्हते परमात्मने परमज्योतिषे परमपरमेष्ठिने परमवेधसे परमयोगिने परमेश्वराय तमसः परस्तात् सदोदितादित्यवर्णाय समूलोन्मूलितानादिसकलक्लेशाय । ॐ नमो भूर्भुवः-स्वस्त्रयीनाथमौलिमन्दारमालार्चितक्रमाय सकलपुरुषार्थयोनिरवद्याविद्याप्रवर्तनैकवीराय नमः-स्वस्ति-स्वधा स्वाहा-वषडर्थैकान्तकान्तशान्तमूर्तये भवद्भाविभूतभावावभासिने काल-पाशनाशिने सत्त्वरजस्तमोगुणातीताय अनन्तगुणाय वाङ्मनोऽगोचरचरित्राय पवित्राय कारणकारणाय तारणतारणाय सात्त्विकदे(दै)वताय तात्त्विकजीविताय निर्ग्रन्थपरमब्रह्म-हृदयाय योगीन्द्रप्राणनाथाय त्रिभुवनभव्यकुलनित्योत्सवाय विज्ञानानन्दपरब्रह्मैकात्म्य-समाधये हरिहरहिरण्यगर्भादिदेवतापरिकलितस्वरूपाय सम्यग्ध्येयाय सम्यक्श्रद्धेयाय सम्यक्शरण्याय सुसमाहितसम्यक्स्पृहणीयाय ॥ १ ॥

ॐ नमोऽर्हते भगवते आदिकराय तीर्थङ्कराय स्वयंसम्बुद्धाय पुरुषोत्तमाय पुरुषसिंहाय पुरुषवरपुण्डरीकाय पुरुषवरगन्धहस्तिने लोकोत्तमाय लोकनाथाय लोकहिताय लोकप्रद्योतकारिणे लोकप्रदीपाय अभयदाय दृष्टिदाय मुक्तिदाय बोधिदाय धर्मदाय जीवदाय शरणदाय धर्मदेशकाय धर्मनायकाय धर्मसारथये धर्मवरचातुरन्तचक्रवर्तिने व्यावृत्तच्छद्मने अप्रतिहतसम्यग्ज्ञानदर्शनसद्मने ॥ २ ॥

ॐ नमोऽर्हते जिनाय जापकाय तीर्णाय तारकाय बुद्धाय बोधकाय मुक्ताय मोचकाय त्रिकालविदे पारङ्गताय कर्माष्टकनिषूदनाय अधीश्वराय शम्भवे स्वयम्भुवे जगत्प्रभवे जिनेश्वराय स्याद्वादवादिने सार्वाय सर्वज्ञाय सर्वदर्शिने सर्वतीर्थोपनिषदे सर्वपाखण्डमोचिने सर्वयज्ञकूलात्मने सर्वज्ञकलात्मने सर्वयोगरहस्याय केवलिने देवाधिदेवाय वीतरागाय ॥३॥

---

१ 'निषद्यविद्या' इति ख-पाठ । २ 'सुधा' इति ख-पाठ । ३ 'वाङ्मानसामगोचर' इति ख-पाठ. ।

४ काव्यप्रकाशस्य सप्तम उल्लास उल्लेखोऽयम्—

"यथाऽय दारुणाचार सर्वदेव विभाव्यते ।
तथा मन्ये दैवतोऽस्य, पिशाचो राक्षसोऽथवा ॥

अत्र दैवतशब्दो 'दैवतानि पुंसि वा' इति पुंस्याम्नातोऽपि न केनचित् प्रयुज्यते'

श्रीरत्नशेखरसूरिविरचिते स्वोपज्ञविवृतिसहिते गुरुगुणषट्त्रिंशिकाकुलके चतुर्थे पत्रे साक्षिरूपिणि निम्न-लिखिते पद्ये 'दैवत'शब्दस्य पुंस्त्वेन प्रयोग —

"गुरुर्गौरवार्हो गुरूपक्रियात , कलौ दैवतोऽपीति सम्यग् मतिर्मे ।
तमिस्रातमिस्रापहारी कृशानु-र्बृहद्भानुरित्युच्यते किं न लोके ? ॥"

अत्र 'दैवतोऽपीति' पाठान्तर समसूचि एतद्ग्रन्थसंशोधके सार्क्षर्मुनिवरश्रीचतुरविजयैः ।

५ मार्गदाय जीवदाय शरणदाय बोधिदाय धर्मदाय धर्मदेशकाय' इति क-पाठ. । ६ 'आदिश्वराय' इति ख-पाठ. ।

ॐ नमोऽर्हते परमात्मने परमकारुणिकाय सुगताय तथागताय महाहंसाय हंसराजाय महासत्त्वाय महाशिवाय महाबौद्धाय महामैत्राय [सुगताय] सुनिश्चिताय विगतद्वन्द्वाय गुणाब्धये लोकनाथाय जितमारबलाय ॥ ४ ॥

ॐ नमोऽर्हते सनातनाय उत्तमश्लोकाय मुकुन्दाय गोविन्दाय विष्णवे जिष्णवे अनन्ताय अच्युताय श्रीपतये विश्वरूपाय हृषीकेशाय जगन्नाथाय भूर्भुवःस्वःसमुत्ताराय मानञ्जराय कालञ्जराय ध्रुवाय अजेयाय अजाय अचलाय अव्ययाय विभवे अचिन्त्याय असङ्ख्येयाय आदिसङ्ख्येयाय आदिमङ्ख्याय आदिकेशा(शवाय) आदिशिवाय महाब्रह्मणे परमशिवाय एकानेकान्तस्वरूपिणे भावाभावविवर्जिताय अस्तिनास्तिद्वयातीताय पुण्यपापविरहिताय सुखदुःखविविक्ताय व्यक्ताव्यक्तस्वरूपाय अनादिमध्यनिधनाय नमोऽस्तु मुक्तिस्वरूपाय ॥ ५ ॥

ॐ नमो भगवते निःसङ्गाय ॐ नमोऽर्हते निरातङ्काय निःशङ्काय निर्भयाय निर्द्वन्द्वाय निस्तरङ्गाय निरूर्मये निरामयाय निष्कलङ्काय परमदैवताय सदाशिवाय महादेवाय शङ्कराय महेश्वराय महाव्रतिने महायोगिने पञ्चमुखाय मृत्युञ्जयाय अष्टमूर्तये भूतनाथाय जगदानन्दाय जगत्पितामहाय जगद्देवाधिदेवाय जगदीश्वराय जगदादिकन्दाय जगद्भास्वते भावाभावविवर्जिताय जगत्कर्मसाक्षिणे जगच्चक्षुषे त्रयीतनवे अमृतकराय शीतकराय ज्योतिश्चक्रचक्रिणे महाज्योतिर्महातपःपारे सुप्रतिष्ठिताय स्वयंकर्त्रे स्वयंहर्त्रे स्वयंपालकाय आत्मेश्वराय नमो विश्वात्मने ॥ ६ ॥

ॐ नमोऽर्हते सर्वदेवमयाय सर्वध्यानमयाय सर्वमन्त्रमयाय सर्वरहस्यमयाय सर्वज्ञानमयाय सर्वतेजोमयाय सर्वमन्त्रमयाय सर्वरहस्यमयाय सर्वभावाभावजीवाजीवेश्वराय अरहस्यरहस्याय अस्पृहस्पृहणीयाय अचिन्त्यचिन्तनीयाय अकामकामधेनवे असङ्कल्पितकल्पद्रुमाय अचिन्त्यचिन्तामणये चतुर्दशरज्ज्वात्मकजीवलोकचूडामणये चतुरशीतिजीवयोनिलक्षप्राणनाथाय पुरुषार्थनाथाय परमार्थनाथाय अनाथनाथाय जीवनाथाय देवदानवमानवसिद्धसेनाधिनाथाय ॥ ७ ॥

ॐ नमोऽर्हते निरञ्जनाय अनन्तकल्याणनिकेतनकीर्तिताय सुगृहीतनामधेयाय धीरोदात्तधीरोद्धतधीरशान्तधीरललितपुरुषोत्तमपुण्यश्लोकशतसहस्रलक्षकोटिवन्दितपादारविन्दाय सर्वगताय सर्वप्राप्ताय ॥ ८ ॥

ॐ नमोऽर्हते सर्वज्ञानाय सर्वसमर्थाय सर्वप्रदाय सर्वहिताय सर्वाधिनाथाय कस्मैचन क्षेत्राय पात्राय तीर्थाय पावनाय पवित्राय अनुत्तराय उत्तराय योगाचार्याय सम्प्रक्षालनाय

---

१ 'तमःपारे' इति ख-पाठः । २ 'सर्वध्यानमयाय सर्वज्ञानमयाय सर्वतेजोमयाय सर्वमन्त्रमयाय सर्वरहस्यमयाय' इति पाठः १९८०तमे वैक्रमीयेऽब्दे श्रीजैननवयुवकमित्रमण्डलेन प्रसिद्धिं नीते श्रीपञ्चप्रतिक्रमणसूत्रे ख-सञ्ज्ञके ।

प्रवराय अग्र्याय वाचस्पतये माङ्गल्याय सर्वात्मनाथाय सर्वार्थाय अमृताय सदोदिताय ब्रह्मचारिणे तायिने दक्षिणीयाय निर्विकाराय वज्रर्षभनाराचमूर्तये तत्त्वदर्शिने पारदर्शिने परमदर्शिने निरुपमज्ञानबलवीर्यतेजःशक्त्यैश्वर्यमयाय आदिपुरुषाय आदिपरमेष्ठिने आदिमहेशाय महाज्योतिःसत्त्वाय महार्चिर्धनेश्वराय महामोहसंहारिणे महासत्त्वाय महाज्ञानमहेन्द्राय महालयाय महाशान्ताय महायोगीन्द्राय अयोगिने महामहीयसे महाहंसाय हंसराजाय महासिद्धाय महीयसे शिवमचलमरुजमनन्तमक्षयमव्याबाधमपुनरावृत्तिमहानन्दमहोदयं सर्वदुःखक्षयं कैवल्यममृतं निर्वाणमक्षरं परब्रह्म निःश्रेयसमपुनर्भवं सिद्धिगतिनामधेयं स्थानं सम्प्राप्तवते चराचरमवते नमोऽस्तु श्रीआदिनाथाय नमोऽस्तु श्रीमहावीराय त्रिजगन्नाथाय त्रिजगत्स्वामिने श्रीवर्द्धमानाय विशालशासनाय निर्विकल्पाय सर्वलब्धिसम्पन्नाय कल्पनातीताय कलाकलापकलिपताय ॥ ९ ॥

ॐ नमोऽर्हते परमात्मने [6]केवलिने परमयोगिने विस्फुरदुरुशुक्लध्यानाग्निनिर्दग्धकर्मबीजाय प्राप्तानन्तचतुष्टयाय सौम्याय शान्ताय मङ्गलवरदाय अष्टादशदोषरहिताय संसृतविश्व(?)समीहिताय स्वाहा ॥ ॐ ह्रीं श्रीं अर्हं नमः ॥ १० ॥

लोकोत्तमो निष्प्रतिमस्त्वमेव, त्वं शाश्वतं मङ्गलमप्यधीश ! ॥
त्वामेकमर्हन् शरणं प्रपद्ये, सिद्धर्षिसद्धर्ममयस्त्वमेव ॥ १ ॥
त्वं मे माता पिता नेता, देवो धर्मो गुरुः परः ॥
प्राणाः स्वर्गोऽपवर्गश्च, सत्त्वं तत्त्वं गतिर्मतिः ॥ २ ॥
जिनो दाता जिनो भोक्ता, जिनः सर्वमिदं जगत् ॥
जिनो जगति सर्वत्र, यो जिनः सोऽहमेव च ॥ ३ ॥
यत्किञ्चित् कुर्महे देव! सदा सुकृतदुष्कृतम् ॥
तन्मे निजपदस्थस्य, दुःखं क्षपय त्वं जिन ! ॥ ४ ॥
गुह्यातिगुह्यगोप्ता त्वं, गृहाणास्मत्कृतं जपम् ॥
सिद्धिः श्रयति मां येन, त्वत्प्रसादात् त्वयि स्थितम् ॥ ५ ॥

इति श्रीवर्धमानजिननाममन्त्रं स्तोत्रं प्रतिष्ठायां शान्तिकविधौ पठितं महासुखाय स्यात् [7]।

इतीमं पूर्वोक्तमिन्द्रस्तवैकादशमन्त्रसंज्ञोपनिषद्गर्भं अष्टमहासिद्धिप्रदं सर्वपापनिवारणं सर्वपुण्यकारणं सर्वदोषहरं सर्वगुणाकरं महाप्रभावं अनेकसम्यग्दृष्टिभद्रकदेवताशतसहस्रशुश्रूषितं भवान्तरकृतासङ्ख्यपुण्यप्राप्यं सम्यग् जपतां पठतां गुणतां शृण्वतां समनुप्रेक्षमाणानां भव्यजीवानां चराचरेऽपि ( जीवलोके ) सद्वस्तु तन्नास्ति यत् करतलप्रणयि न भवतीति।

१ 'सदोदितब्रह्म०' इति क-पाठः। २ 'ज्योतिस्तत्त्वाय' इति क-पाठः। ३ 'महाशान्तये' इति क-पाठः। ४ 'महासिद्धये' इति क-पाठ। ५ 'मुक्तिपदनामधेय' इति क-पाठः। ६ 'केवलज्ञानिने' इति क-पाठः। ७ अतः पर पूर्वोक्ते मुद्रिते ख-ग्रन्थे 'इति श्रीसिद्धसेनदिवाकरकृतशक्रस्तवः' एतावानेव पाठः।

किञ्च-इतीमं पूर्वोक्तमिन्द्रस्तवैकादशमन्त्रराजोपनिषद्गर्भं इत्यादियावत् सम्यक् जपतां० भव्यजीवानां भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकवासिनो देवाः सदा प्रसीदन्ति ।

इतीमं० भव्यजीवानां पृथिव्यप्तेजोवायुगगनानि भवन्त्यनुकूलानि ।

इतीमं० भव्यजीवानां सर्वसम्पदां मूलं जायते जिनानुरागादिति ।

इतीमं० भव्यजीवानां साधवः सौमनस्येनानुग्रहपरा जायन्ते ।

इतीमं० भव्यजीवानां खलाः क्षीयन्ते ।

इतीमं० भव्यजीवानां जल-स्थल-गगनचराः क्रूरजन्तवोऽपि मैत्रीमया भवन्ति ।

इतीमं० भव्यजीवानां अधमवस्तून्यपि उत्तमवस्तुभावं प्रपद्यन्ते ।

इतीमं० भव्यजीवानां धर्मार्थकामगुणाभिरामा जायन्ते ।

इतीमं० भव्यजीवानां ऐहिक्यः सर्वा अपि शुद्धगोत्र-कलत्र-पुत्र-मित्र-धन-धान्य-जीवित-यौवन-रूपा-ऽऽरोग्य-यशःपुरःसराः सर्वजनानां सम्पदः परभागजीवितशालिन्यः स्योकादर्शाश्च (?) सम्मुखीभवन्ति ।

इतीमं भव्यजीवानां आमुष्मिक्यः स्वर्गापवर्गश्रियोऽपि क्रमेण यथेष्टं स्वयं स्वयंवरणोत्सवं समुत्सुका भवन्तीति । सिद्धिः श्रेयःसमुदयश्च ।

यथेन्द्रेण प्रसन्नेन, समादिष्टोऽर्हतां स्तवः ।
तथाऽयं सिद्धसेनेन, प्रपेदे सम्पदां पदम् ॥

इति श्रीसिद्धसेनादिवाकरसूरिकृतं श्रीजिनसहस्रनामगद्यस्तोत्रं सम्पूर्णमिति । [1]संवत् १७९८ वर्षे द्वितीय श्रावणशुदि ११ वार भौमे लिखितं प० अविचलविजयगणिना 'जालोर'नगरे ॥



१ क-प्रतेरुल्लेखोऽयम् ।

क-परिशिष्टम्

श्रीरत्नमुनिसन्दृब्धं सटिप्पनकं

# ॥ भक्तामरच्छायास्तोत्रम् ॥

नम्रदेवशिरोरत्न-भासकं जिनपत्कजम् ।
प्रणम्याखिलपापघ्नं, संसारजलतारणम् ॥ १ ॥
सर्वशास्त्रपरिज्ञानात्, संस्तुतो यः सुरेश्वरैः ।
उदाररुचिरस्तोत्रैः, स्तोष्ये तं प्रथमं प्रभुम् ॥ २ ॥
प्रभो ! बुद्ध्या विनाऽपि त्वां, स्तुवानोऽस्मि गतत्रपः ।
वारिकुण्डस्थितं चन्द्रं, बालः किं न हि लिप्सति ? ॥ ३ ॥
धिषणोऽपि गुणाम्भोधे !, गुणांस्ते ख्यातुमक्षमः ।
दुर्वायूद्धूतयादस्कः, सागरः केन तीर्यते ? ॥ ४ ॥
तथापि सोऽहं त्वद्भक्त्ये-स्तवास्मि स्तवमोद्यमः ।
निर्विवेकोऽर्भकान् पातुं, मृगो नाभ्येति किं हरिम् ? ॥ ५ ॥
समुखत्वं भवत्पाद-प्रसादादेव भाति मे ।
प्राप्ताम्रकलिकास्वादः, कलं कूजति कोकिलः ॥ ६ ॥
त्वत्स्तुत्याऽनादिजं पापं, प्राणिनां क्षीयते क्षणात् ।
मार्तण्डकिरणस्पृष्टं, नाशं याति निशातमः ॥ ७ ॥
इति मत्वाऽऽरभे स्तोत्रं, तव विद्वन्मनोहरम् ।
अरविन्देषूदबिन्दु-मौक्तिकद्युतिमश्नुते ॥ ८ ॥
आस्तां स्तवस्ते निर्दोष-स्त्वद्वार्ताऽपि शिवङ्करी ।
प्रभाऽपि कुरुते भानो-र्विकचान्यम्बुजानि यत् ॥ ९ ॥
दुर्घटं किमु जायन्ते, यदि त्वमिव तावकाः ।
भृत्यं वा स्वसमं भूत्या, यो न निर्माति तेन किम् ? ॥ १० ॥
त्वां परं द्दश्यमालोक्य, चक्षुर्नान्यत्र रज्यते ।
क्षीरसिन्धुपयः पीत्वा, क्षाराब्ध्यम्बु क ईहते ? ॥ ११ ॥
कारितोऽसि ललामात्मा, जगतां येन कर्मणा ।
तावन्त एव तस्यांशा-स्त्वत्तुलाऽन्यत्र नास्ति यत् ॥ १२ ॥

क्व ते वक्त्रं निरुपमं, नाकिनागेन्द्रकामितम् ।
कलङ्कि मण्डलं क्वेन्दो-र्यद् बताहनि निष्प्रभम् ॥ १३ ॥
विशुद्धविभवाः स्वामिन् !, भुवनं लङ्घयन्ति ते ।
संश्रिता ये त्रिलोकीशं, तेषां विघ्नाय को भवेत् ? ॥ १४ ॥
विकारमार्गं नीतोऽसि, नामरीभिरपि प्रभुः ।
जिताद्रिः शक्यते जेतुं न मेरुं प्रलयानिलः ॥ १५ ॥
निर्धूमवर्तिर्निस्तैलः, सर्वभावावभासकः ।
अगम्यो मरुतां त्रात-र्दीपोऽसि त्वमिहापरः ॥ १६ ॥
नास्तमेषि न वश्योऽसि, तमसोऽभ्रैर्न रुध्यसे ।
सूर्यादित्यतिशेषे त्वं, लोकालोकप्रकाशकः ॥ १७ ॥
मोहान्धकारसंहर्ता-ऽनन्तोद्द्योतकलोदयः ।
गोचरो नागुमेघानां, त्वमपूर्वोऽसि चन्द्रमाः ॥ १८ ॥
त्वयाऽवतमसे ध्वस्ते, किं कार्यं पुष्पदन्तयोः ? ।
निष्पत्तिर्यदि शालीनां, स्वयं वारिधरैरलम् ॥ १९ ॥
त्वयि ज्ञानं यथा व्याप्तं, नैवं हरि-हरादिषु ।
यथा तेजोऽस्ति रत्नेषु, नो काचशकले तथा ॥ २० ॥
मन्ये शिवादयः श्रेष्ठा, यद्दृष्टैस्त्वं विनिश्चितः ।
त्वयेक्षितेन किं येन, नान्यो हरति मे मनः ॥ २१ ॥
त्वां सुतं मरुदेवेव, माता प्रसुषुवे प्रभो ! ।
प्राच्येव जनयत्यर्कं, तारास्तु सकला दिशः ॥ २२ ॥
आदित्यवर्णं वितमः-पुमांसं त्वां विदुः परम् ।
त्वामेव लब्ध्वा सिध्यन्ति, न सिद्धिर्निगमान्तरे ॥ २३ ॥
समस्तवस्तुस्तोमज्ञ-मसङ्ख्यांशमकर्तृकम् ।
तद्भावाव्ययितं सन्तं, त्वामाहुर्मुनयो जिनम् ॥ २४ ॥

---

१ इह अगुरिति राहुवाचक पद, "राहुस्तमोऽगु" इति वराहमिहिरः । गुरुशिखिविधुरविज्ञसितमन्दरागुरुचितम्" इति सकौतुकजातौ प्रश्नकाव्ये नवग्रहनामज्ञापक. श्रीजिनवल्लभोऽपि ।

२ अहमेव मन्ये भगवन् ! शिवादयो लौकिकदेवा उत्तमा । कथमिति चेत् पर. प्रश्नयेत् तदा तक्रन्यायो दुग्धपरीक्षार्थं दातव्यः । अतो ब्रवीति यैर्मलिनैर्दृष्टैः सद्भिस्त्वं निर्मलकेवलात्मा विनिश्चयीकृत. । तक्रस्यामाधुर्यं विलोक्य पयसि माधुरीश्रद्धा दृढीभवति लोक इति हास्यम् ।

३ समस्ता'-सकला वस्तूनां-धर्मा-ऽधर्मा-ऽऽकाश-काल-पुद्गल-जीवानां स्तोमा'-समूहाः तान् जानातीति समस्तवस्तुस्तोमज्ञस्तम् । अनेन वैशेषिकमत निराकृत भवति । तत्र हि धर्म धर्मिणोर्ज्ञान-जीवयोरत्यन्तभिन्नत्वात् । तथा असङ्ख्याः-सङ्ख्यागोचरातीता धर्मास्तिकायप्रमिता अशा-भागा. प्रदेशा इति यावद् यस्येत्यसङ्ख्यांशस्तम् । अनेन अद्वैतवादिता तिरस्कृता भवति । अस्या हि सर्वदिक्प्रमाणत्वेन अनन्तप्रदेशत्वघटनात् । तथा स्वतो भिन्नं न

बुद्धोऽसि बोधतोऽशेष-शङ्करत्वाच्च शङ्करः ।
ध्याता तीर्थकरत्वात् त्वं, व्यक्तेस्त्वं पुरुषोत्तमः ॥ २५ ॥
नमस्ते दुःखकक्षाग्ने !, नमस्ते भूमिभूषण ! ।
नमस्ते परमेष्ठ्यात्मन् !, नमस्ते पापमोचन ! ॥ २६ ॥
स्थानान्तरमविन्दन्तो (?), विश्वे त्वामागता गुणाः ।
आश्रयानन्त्यदृप्तैस्त्वं, दोषैः स्वप्नेऽपि नादृतः ॥ २७ ॥
अशोकं समया रूप-मुद्दीप्ति तव भासते ।
घनाघनघटापार्श्वे, यथा बिम्बं विवस्वतः ॥ २८ ॥
मणिसिंहासने देहः, स्वर्णवर्णो विभाति ते ।
उदयाचलमूर्ध्नीव, विमानं भासुरं रवेः ॥ २९ ॥
वपुर्विभ्राजते गौरं, चलच्चामरचारु ते ।
प्रोद्गच्छज्झरधारेव, तटी काञ्चनभूभृतः ॥ ३० ॥
मुक्ताजालततश्रीकं, तापघ्नं शशिसुन्दरम् ।
छत्रत्रयं ध्वनयति, त्रैलोक्येश्वरता तव ॥ ३१ ॥
स्मेराभिनवहेमाब्ज-कान्त्यच्छनखरोचिषोः ।
न्यासे त्वत्पदयोर्देवा, न्यस्यन्ति नलिनीवनम् ॥ ३२ ॥
इत्थं यथोपकारात्मा, त्वं श्रीमान् न तथाऽपरः ।
तरणेर्यादृशं भाग्यं, ग्रहाणां नैव तादृशम् ॥ ३३ ॥
दानसौरभमत्तालि-झङ्काररवकोपितम् ।
आयान्तमपि वीक्ष्येभं, त्वदीयो न हि शङ्कते ॥ ३४ ॥
करजैर्भिन्नमातङ्ग-कुम्भमुक्ता वहन्नपि ।
नाक्रामति भवद्दासं, केशरी कीलितक्रमः ॥ ३५ ॥
क्षयोर्वबुधसङ्काशः, प्रोत्स्फुलिङ्गो दवानलः ।
निजिघानिव विश्वस्य, भवन्नाम्ना प्रशाम्यति ॥ ३६ ॥

---

किञ्चिदपि करोनीति अकर्ता, स्वार्थे क अकर्तृकस्तम् । अनेन नयायिका अध.क्रियन्ते, तेषा हि भुवनोदरस्य बुद्धिम त्कर्तृकत्वात् । तथा तद्भावत –तत्त्वतः अव्ययित –अक्षयित इति तद्भावाव्ययितस्तम्, उत्पादव्ययध्रौव्ययुक्तत्वात् । अनेन बौद्धानां तिरस्कारः, यतस्ते क्षणक्षयिणमात्मान मन्यन्त इति । तथा सन्त–विद्यमान, निजापेक्षयेत्यर्थ. । अनेन चार्वाकश्चर्वितः, तत्र हि सर्वथाऽप्यात्मनोऽसत्त्वात् । रागादिशत्रूणां जेता जिनस्तम् । इह स्याद्वादोपलक्षण सम्मानित तत. ।

१ आश्रयाः–स्थानानि ते हरि-हरादयस्तेषामानन्त्यम्–अनन्तता ततो दृप्ता–गर्विता आश्रयानन्त्यदृप्तास्तैः कृत्वा प्रभुः कदाचिदपि न विलोकितोऽसीति । यो बहुभिर्मान्यते स चैकमभिप्रायविपरीतमवगणयतीति न्यायः ।

२ उपकार एव आत्मा–स्वरूप यस्यासौ उपकारात्मा । यथा त्व लक्ष्मीवान् तथा नापरे इति । यथा हि सूर्यः प्रकाशकः परोपकारी तथा ग्रहा. प्रकाशवन्तोऽपि न हि परोपकारिणो भवन्तीति । ३ (उपर्बुधः–अनलः) ।

लोहिताक्षोऽसितः क्रोधी, आपतन्नुत्फणोऽप्यहिः ।
नोपद्रवाय घटते, त्वद्ध्यानामृतचेतसाम् ॥ ३७ ॥
अनीकं बलिनां राज्ञां, हस्त्य-ऽश्व-रथदारुणम् ।
ब्रध्नरश्मेरिव ध्वान्तं, याति त्वद्भजनाद् भिदम् ॥ ३८ ॥
कुन्तदारितनागासृग्-वर्षाव्याकुलसैनिके ।
जयन्त्यरिगणं युद्धे, त्वत्सेवासुखिनो जनाः ॥ ३९ ॥
अब्धौ क्षुभितयादस्के, ज्वलदुल्बणवाडवे ।
रङ्गत्तरङ्गशृङ्गस्था, तरति त्वज्जुषां तरी(ः) ॥ ४० ॥
रोगभारभुजः शोच्या-स्त्यजन्तोऽपि जिजीविषाम् ।
भवत्प्रभावाज्जायन्ते, नराः कन्दर्परूपिणः ॥ ४१ ॥
आपादकण्ठमानद्धाः, शृङ्खलानिगडादिभिः ।
त्वन्मन्त्रं सुजपन्तः स्यु-र्भव्यास्त्रुटितबन्धनाः ॥ ४२ ॥
करि-सिंहा-ऽग्नि-सर्पा-ऽऽजि-वारिधि-व्याधि-बन्धजम् ।
न भयं तस्य यस्तेऽमु-मधीते स्तवमुच्चकैः ॥ ४३ ॥
सद्वर्णकुसुमां स्तोत्र-स्रजं ते गुणगुम्फिताम् ।
कण्ठपीठे निधत्ते य-स्त्विरत्नश्रीरुपैति तम् ॥ ४४ ॥
इति 'भक्तामर'च्छाया-मादाय हृदयप्रियाम् ।
नाभिराजाङ्गजः स्वीय-धर्माय मयका स्तुतः ॥ ४५ ॥

समाप्तमेतच्छायाभक्तामराख्यस्तवनं श्रीआदिपरमेश्वरस्य ॥



१ (सूर्यकिरणात्)। २ कुन्तैः-भल्लैर्दारिता ये नागा-गजास्तेषामसृग्वर्षया-शोणितवर्षणेन कृत्वा व्याकुलाः सैनिका-योधा यत्रेति तस्मिन्। ३ (नौका)। ४ करी-हस्ती, सिंहः-केशरी, अग्निः-दवानल इति, सर्पः-भुजङ्गः, आजिः-सङ्ग्रामः, वारिधिः-समुद्रः, व्याधिः-आमयः तेभ्यो जातमिति। ५ इह रत्न इति वर्णा भगवद्गुणस्यापि ज्ञापकाः। ६ स्वीयः-स्वकीयो यो धर्मः-स्वभावो निश्चयतः केवलज्ञानलक्षणस्तस्मै-तदर्थम्।

ख-परिशिष्टम् ।

श्रीरत्नमुनिप्रणीतं

# ॥ कल्याणमन्दिरच्छायास्तोत्रम् ॥

( अनुष्टुपछन्दसि निबद्धम् )

श्रेयोबीजमवधारी, प्रणिपत्याभयप्रदौ ।
भवाब्धौ पततामर्हत्-पादौ प्रकृतिपोतितौ ॥ १ ॥
गरिम्णोर्वर्णने यस्य, न देव(वा?)ऋषयोऽप्यलम् ।
स्तौमि तं कमठौन्नत्य-मूलोपर्बुधमीश्वरम् ॥ २ ॥
सुवचा न भवद्वार्ता, प्रभो! सामान्यतोऽपि नः ।
उल्लूकबालः किं वक्ता, धृष्टोऽपि रविरोचिषाम्? ॥ ३ ॥
आदर्शेनापि सङ्ख्येया, गुणाः केवलिना न ते ।
कल्पान्तप्रकटोऽप्यब्धे, रत्नौघः केन मीयते? ॥ ४ ॥
अनन्तयशसस्तेऽसि, जडोऽपि स्तवनोद्यतः ।
बाहू प्रसार्य ही बालः, सिन्धुविस्तारशंसिता ॥ ५ ॥
सतामपि भवल्लक्ष्मीं-वक्तुं नैति कियानहम्? ।
शोच्यैव तदिदं(यं?) प्रौढिः, पक्षिभाषावदन्ति वा ॥ ६ ॥
स्तवस्तेऽद्भुतमाहात्म्य, आस्तां नामापि विश्वपम् ।
पद्मद्रहस्य वातोऽपि, निदाघेऽध्वगतर्पणः ॥ ७ ॥
जन्तोर्नश्यन्ति कर्माणि, हृद्वर्तिनि सति त्वयि ।
अन्तश्चन्दनमायाते, मयूरे भुजगा इव ॥ ८ ॥
त्वयि दृष्टेऽपि मुच्यन्ते, नरा रौद्रैरुपद्रवैः ।
स्फुरत्तेजसि गोपाले, पशवस्तस्करैरिव ॥ ९ ॥
त्वां हृदोद्वहतां नृणां, तारकोऽसि कथं प्रभो! ।
मध्यवातानुभावो वा, दृतिस्तरति यज्जलम् ॥ १० ॥
हरादीनपि जेता यो, जितः कामोऽपि स त्वया ।
संवर्तकः पिबत्येव, वारि वह्निविनाश्यपि ॥ ११ ॥

१ उपर्बुधः-अग्नि ।

ह्यहो धार्यसेऽत्यन्त–गरिमाऽपि कथं जनैः? ।
तरङ्गिराशु जन्माम्बु, चित्रा वा महतां गतिः ॥ १२ ॥
क्रोधं निरस्य भवता, कर्मचौरा हताः कथम्? ।
नीलद्रुविपिनं प्लोष–त्युत किं न हिमान्यपि? ॥ १३ ॥
हृदब्जकोशे पश्यन्ति, योगिनस्त्वामधीश्वरम् ।
अक्षस्य यदि वा कोऽन्यः, कर्णिकायाः समाश्रयः? ॥ १४ ॥
भवद्ध्यानाद् वपुस्त्य(क्त्वा?), ब्रह्मत्वे भान्ति मानवाः ।
धातुभेदा इव स्तुत्वं स्वर्णत्वे प्रबलानलात् ॥ १५ ॥
यदन्तर्भाव्यसे भव्यै–र्देहं नाशयसे कथम्? ।
महानुभावा मध्यस्था, विग्रहस्योपशान्तये ॥ १६ ॥
त्वदभेदधियाऽऽत्माऽयं, ध्यातस्त्वमिव जायते ।
सुधेति चिन्त्यमानं किं, स्याद्वारि न विषापहम्? ॥ १७ ॥
हरादिबुद्ध्या सेवन्ते, त्वां देवं परवादिनः ।
काचकामलिनः श्वेते, शङ्खे वर्णान्तरेक्षिणः ॥ १८ ॥
आस्तां परस्तरुरपि, स्यादशोकस्त्वदन्तिके ।
जागर्ति उदिते वाऽर्के जीवलोकः सभूरुहः ॥ १९ ॥
अधोवृन्तं मरुत्पुष्प–वृष्ट्या प्रत्यय एष मे ।
त्वयि ज्ञाते सुमनसां, बन्धनानि पतन्त्यधः ॥ २० ॥
मनोऽर्णवसमुत्थायाः, पीयूषत्वं भवद्गिरः ।
यां पीत्वा स्वचिदेप्रकाग्राः (?), पदं यान्त्यजरामरम् ॥ २१ ॥
नमनोत्पतनैश्चारु–चामराणामितीव धीः ।
तुल्यं प्रणमतां भावाद्, भाविनामूर्ध्वगामिता ॥ २२ ॥
रत्नासनगिरौ गर्जि–गिरं भव्यशिखण्डिनः ।
श्यामलं त्वां प्रपश्यन्ति, सद्यस्कमिव वारिदम् ॥ २३ ॥
कङ्केल्लिर्लुप्तपर्णश्रीः, शितिभामण्डलेन ते ।
भवत्साभिध्यतः स्वामिन्!, नीरागः स्यान्न कोऽपरः? ॥ २४ ॥
भो भो भजत मुक्त्यध्व–सार्थवाहमिमं मुदा ।
भीरेभ्य इति शास्तीव, ध्वनंस्ते नाम दुन्दुभिः ॥ २५ ॥
व्यधिकारो मयुक्त चन्द्रो, जगतां द्योतने त्वया(यि) ।
मुक्ताजालिसितच्छत्र–त्रितनुस्त्वामुपागतः ॥ २६ ॥

कान्ति-प्रताप-यशसां, जगत्पूरणपिण्डिताः ।
सञ्चया मणि-कल्याण-तारवप्राणि भान्ति ते ॥ २७ ॥
मौलीन् यदि सुरेन्द्राणां, त्यक्त्वा तव पदोः स्थिताः ।
सुमस्रजः सुमनसां, त्वदन्यत्र न रागिता ॥ २८ ॥
तारयेः पृष्टिसंलग्नान्, भवाब्धिविमुखोऽपि यः ।
स पार्थिवनिपात्माऽपि, अहो कर्मविपाकमुक् ॥ २९ ॥
स्वामी सना दरिद्रो हि, अक्षरात्माऽसि चालिपिः ।
विशदं ज्ञानमास्ते ते, देवाज्ञानवतः सतः ॥ ३० ॥
दैत्येन रेणुभिर्मुक्त-श्छायाऽपि तव का हता ? ।
रोषान्धकारसंवेशैः, शठो ग्रस्तः स केवलम् ॥ ३१ ॥
घनतर्जितडित्पात-धारामुशलभीषणम् ।
मुक्त्वा महाजलं प्राप, स महाजलतां पुनः ॥ ३२ ॥
कीर्णकेशदुराकार-मुण्डस्रगनलाननम् ।
त्वयि प्रेतव्रजं कृत्वा, सोऽव्यपत् प्रेत्यपातिताम् ॥ ३३ ॥
भजन्ते पादपद्मं ते, भक्त्युच्छ्वसितकण्टकाः ।
निश्शेषकुतुकोद्विग्ना, धन्या भुवि त एव हि ॥ ३४ ॥
त्वामिहापारसंसारे, शङ्के नाशृणवं पुरा ।
श्रुते त्वन्नाम्नि वामेय !, निकषा कान् विपन्त्यहिः ? ॥ ३५ ॥
कामदं त्वत्पदाम्भोजं, मन्ये न महितं मया ।
इति पङ्ककलङ्कानां, जातोऽहमिह मन्दिरम् ॥ ३६ ॥
मोहावतमसस्थस्य, दृश्योऽभून्न कदापि मे ।
मर्माविधः पीडयन्ति, मामनर्थाः किमन्यथा ? ॥ ३७ ॥
श्रुत-पूजित-दृष्टोऽपि, न सम्यग् भावितोऽसि मे ।
पातकैरिति लिप्ये यद्, भावशून्या क्रियाऽफला ॥ ३८ ॥
विश्ववत्सल ! निर्लोभ !, शरण्य ! करुणापते ! ।
भक्तिभाजमिदानीं मा-मदुःखाङ्कुरितं कुरु ॥ ३९ ॥
सत्यं सर्वस्य शरणं, त्वामपि प्राप्य दैवतम् ।
प्रमादी यदि वध्योऽसि, हा हतोऽसि गतिः क्व मे ? ॥ ४० ॥
देवेन्द्रवन्द्य ! सर्वज्ञ !, दयालो ! नाथ ! तायितः ! ।
व्यसनेभ्योऽतिसीदन्तं, पितः ! पाहि पुनीहि माम् ॥ ४१ ॥

त्वदागमानुकम्प्यस्य, या सम्यग् मतयोग्यता ।
तत्प्रसादात् प्रभुर्भूया-स्त्वमेवात्र परत्र मे ॥ ४२ ॥
नित्यमेव भवद्बिम्ब-दर्शिभिः प्रणिधानिभिः ।
यैः प्रभो ! सान्द्ररोमाञ्च-कञ्चुकाङ्गैः प्रणीयसे ॥ ४३ ॥
अक्षयप्रतिभारक्ता, दिव्यां सम्भुज्य सम्पदम् ।
ते त्रिरत्नयुजो वेगाद्, विन्दन्ति परमं पदम् ॥ ४४ ॥
इत्येष किल कल्याण-मन्दिरानुगचेतसा ।
रत्नेन मुनिना नूतः, श्रीपार्श्वपरमेश्वरः ॥ ४५ ॥

इदं कल्याणमन्दिरच्छायास्तोत्रं पुरुषादानीयस्य ।

---

ग-परिशिष्टम् ।

# श्रीवीरस्तुतयः

कल्याणमन्दिरमुदारमवद्यभेदि
दुष्कर्मवारणविदारणपञ्चवक्त्रम् ।
यत्पादपद्मयुगलं प्रणमन्ति शक्राः
स्तोष्ये मुदा जिनवरं जिनत्रैशलेयम् ॥ १ ॥
क्षीणाष्टकर्मनिकरस्य नमोऽस्तु नित्यं
भीताभयप्रदमनिन्दितमंह्रिपद्मम् ।
इष्टार्थमण्डलसुसर्जनदेववृक्षं
नित्योदयं दलिततीव्रकषायमुक्तम् ॥ २ ॥
जैनागमं दिशतु सर्वसुखैकदारं
श्रीनन्दनक्षितिजहव्यहतिप्रकारम् ।
संसारसागरनिमज्जदशेषजन्तु-
वोहित्थसन्निभममीष्टदमाशु मुग्धम् ॥ ३ ॥
मातङ्गयक्षरमलां प्रकरोति सेवां
पूर्वान्तमारसमभीप्सितदं विशालम् ।
उत्पत्तिविस्तरनदीशपतज्जनानां
पोतायमानमभिनम्य जिनेश्वरस्य ॥ ४ ॥



घ–परिशिष्टम् ।

श्रीमेघविजयवाचकगुम्फितं

## ॥ श्रीशङ्खेश्वरपार्श्वप्रभुस्तवनम् ॥

ॐ ह्रीं श्रीं क्लीं अर्हं ऐं नमः सिद्धम् ।

श्रीसारणाचलमहेश्वरसन्निधाने, सम्पत्करी शिवपुरी नगरी सुरीभिः ।
तद्राज्यभाजि ननु राजनि वैरिशल्ये, शङ्खेश्वरो विजयतां जिनपार्श्वनाथः ॥ १ ॥
स्पष्टीबभूव भविनां भुवि भागधेयात्, ध्येयातिशायिसुखदायिसुनामधेयः ।
शङ्खेश्वरस्तनुमयूखदिनेश्वरोऽर्हन्, नेत्रामृताञ्जनजगत्प्रियरूपधेयः ॥ २ ॥
ॐकार एष सविशेषविधेर्विधाने, श्वेतातपत्ररुचिसम्भृतचारुमूर्तिः ।
देवासुरोरगनरेश्वरसेवितांह्री, राज्यश्रियं त्रिभुवनस्य दधाति पार्श्वः ॥ ३ ॥
नैतादृशस्त्रिभुवने जनताभिनेता, योगीश्वरोऽपि विबुधाधिपतेः श्रियाऽऽढ्यः ।
शैवस्थितं वपुषि दर्शयते जिनोऽपि, ब्रह्मक्रियापरिणतः स्वत एव भास्वान् ॥ ४ ॥
राजा द्विभागमदधाद् विविधार्थबोधात्, क्रोधानुरोधनधियो विरराम कामम् ।
माङ्गल्यमाल्यपरिपूजनया प्रसादी, शङ्खेश्वरः प्रभुरसौ सुरसौख्यकारी ॥ ५ ॥
त्वन्नाम्नि धाम्नि भगवन्! हरि-शङ्कराद्याः, स्वांशं दधुर्मधुरपूजनहेतवोऽमी ।
तल्लेभिरे फलमलं विमलं त्वदीयं, ते विश्वपूज्यपदसम्पदमङ्गनाढ्याः ॥ ६ ॥
ये चक्रिशक्रकमलापरिभोगमग्ना–भूता भवन्त्यभिनवैर्विभवैर्मनुष्याः ।
त्वत्पादपद्मरजसामनुशीलनस्य, माहात्म्यमद्भुतमिदं जगति प्रतीमः ॥ ७ ॥
नामानि यानि जगदुद्धरणाय लोके, गेयानि तानि किल निश्चिनुमस्त्वेव ।
पर्यायवृत्तिविधया सुधया विलिप्ता, भावा भवन्ति सरसाः स्वरसाद् यथैव ॥ ८ ॥
भाग्योदयेन भविनां भगवंस्त्वदीयं, सन्दर्शनं भवति दुस्तमसां भिदायै ।
भानोर्मरीचिनिचये स्फुरिते समन्तात्, किं वा न नश्यति तमिस्रविमिश्रितो वा? ॥९॥
त्वं नायकस्त्वमसि सार्वजनीनबन्धु–स्त्वं तारकः सकलदुर्जनवारकस्त्वम् ।
नीतस्त्वयाऽहमियतीमिह वन्ध्यभूमिं, तद् देहि सम्प्रति पदं परमं स्वकीयम् ॥ १० ॥
सिद्धेर्विधास्त्वदभिधा विविधानुभावा–लक्ष्मीस्त्वदीयपदसेवनयाऽवशेव ।
सम्प्राप्यते तनुभृता निभृता नितान्तं कीर्तिस्तदेकसुररत्नमयस्त्वमत्र ॥ ११ ॥
नीताः क्षयं रिपुजना जनपूजनाऽपि, सम्प्रापिता मयि कलाः सकलाः प(फ?)लाढ्याः ।
सद्योऽनवद्य! सुरवन्द्य! विभिद्य माद्यत्–कर्माणि देहि परमं पदमीश! मह्यम् ॥१२॥

---

१ 'विमिश्रितोर्वी' 'विमिश्रितोध्वा' वा इति स्यात् ।

लुप्ताः क्रियास्त्वदुदिताचरणस्य दुष्ट–र्व्यालस्वरूपकलिकालकरालयोगात् ।
येषां पुनर्विमलमार्गमहोदयार्थं, दुष्कर्मणां कुरु पराकरणं गुरुस्त्वम् ॥ १३ ॥
मोहावमोहवशतः शतशोऽन्यदेवा–सेवा(दरा)दनुगुणा विहिता मयाऽन्ते ।
तैः कापि सिद्धिरभवन्न मनोरथस्य, तच्चेतसः स्थिरदशा त्वयि मे बभूव ॥ १४ ॥
सिद्धः प्रसिद्धमहिमा भगवंस्त्वमेव, देवः सदैव धरणोरगराजसेव्यः ।
विश्वम्भरः शिवकरः करुणैकवृत्ति–र्विश्वेशिता जनपितामह एव साक्षात् ॥ १५ ॥
तेजस्तवाव्ययतरं तरसान्तरारि–विस्तारिवर्गहनने तरवारिधारि ।
तस्मात् त्रयीतनुलसत्तनुरेव भासि शोभातिरेकवशतः शतमन्युमान्य ? ॥ १६ ॥
के के त्वया न भगवन्ननुयायिनः स्वां, विश्वाधिपत्यकमलां विमलां न नीताः ? ।
इच्छन्ननन्तसुखभोगमहो मनीषी, कस्त्वां विमुञ्चति सुरद्रुमरूपमारात् ॥ १७ ॥
जेता सहस्रमहसां सहसा प्रतापः, कीर्तिश्च कार्तिकनिशाकरकान्तिकान्ता ।
कान्ताविलासकलना किल वर्द्धमाना, त्वद्ध्यानतस्तनुभृतामचिरादुदेति ॥ १८ ॥
त्वद्दर्शनाच्च नृजनुर्विहितं पवित्रं, निष्कम्पसम्पदुदियाय जयाय भोग्या ।
आनन्दमङ्गलदशाऽजनि मामकीना, लभ्यं मया परिचयात् परमं पदं तत् ॥ १९ ॥
चित्ताम्बुजन्मनि मम भ्रमरायसे चेद्, भक्तिः परं भगवती मयि सानुरागा ।
नित्याष्टधाविभवसिद्धिरसप्रसिद्धिः, प्राप्ता मया ननु तदा भगवत्प्रसादात् ॥ २० ॥

श्रीशङ्खेश्वरपार्श्वभास्वदुदितज्योतिर्मयः श्रीजिनः
सर्वारिष्टविनाशनः शिवपुरीप्राप्तप्रतिष्ठोदयः ।
देशाधीश्वरवैरिशल्यमहितः सद्भाग्यलक्ष्म्यै सतां
नूतो वाचकमेघपूर्वविजयाह्वोऽनेन मेरुध्रुवः ॥ २१ ॥

इति श्रीशिवपुरीदेशनरेशसेव्यश्रीशङ्खेश्वरपार्श्वप्रभुस्तवनं सम्पूर्णम् ॥
संवत् १७३६ वर्षे चैत्रवदि ५ वार बुधे श्रीसीरोहीनगरमध्ये
लिपीचक्रे ग. उदयरत्नना(केन) श्रीः ॥



ङ-परिशिष्टम् ।

## श्रीजिनपतिविरचिता सावचूर्णिका विरोधालङ्कारमण्डिता

# ॥ श्रीऋषभस्तुतिः ॥

**प्रीणन्तु जन्तुजातं, नखसुभगा भावुका न नखसुभगाः ।**
**अभिजातस्यापि सदा, पादाः श्रीनाभिजातस्य ॥ १ ॥**

सुखयन्तु सत्त्वसमूहं नखैर्मनोहरा., एवंविधा अपि न नखसुभगा इति विरोधः । परिहारस्त्वेवम्——न न खसुभगा इति अपि तु खसुभगा एव । खानाम्–इन्द्रियाणां चक्षुःश्रोत्रादीनामाह्लादकाः । कुलीनस्य ते कथ न अभिजातस्येति विरोध' । अथ च श्रीमन्नाभिसप्तमकुलकरोद्भवस्य ॥ १ ॥

**वृषलाञ्छनोऽपि सुवति, प्रभूतशोऽकार्तिकेयमधिनाथ ! ।**
**नन्दयति न तामरसं–सदं भवान् नाभिभूतोऽपि ॥ २ ॥**

महेश्वरोऽपि अथ च वृषभचिह्न जनयति अनेकवारं अकुमारम् । अथ च प्रभूतशोकार्तिके पुंसि अयं–शुभावह दैवम् । ब्रह्माऽपि सन् भगवान् स्वाश्रयभूत पद्मं सर्वदा न विकाशयतीति विरोधः । अथ च प्रणतसुरसभा **नाभि**जो भवानाह्लादयति ॥ २ ॥

**पुरुषोत्तमोऽपि न त्वं, जडपतितनयाऽनुरागमुद्वहसि ।**
**उद्दामधाम विन्दसि, तपसा नालीकबन्धुरपि ॥ ३ ॥**

नारायणोऽपि त्व समुद्रतनयाऽनुरागं न धारयसीति विरोध. । अथ च मूर्खभ्रष्टाचारानुरागं नोद्वहसि । उद्भड(ट)तेजो लभते माघमासेन सूर्योऽपीति चित्रम् । अथ तपश्चरणेनोद्भटतेजो लभसे न असत्यबान्धवः ॥३॥

**व्यक्तविजयोऽपि समिति–व्यासक्तो मृगयसे न गाङ्गेयम् ।**
**न सुरापगोपरोधं, रचयन्नपि देव ! भीष्मोऽसि ॥ ४ ॥**

प्रकटार्जुनोऽपि सङ्ग्रामासक्तोऽपि न गवेषयसि भीष्ममिति विरोध. । अथ च रागादिशत्रूणां जयत्वात् व्यक्तविजयः ईर्यादिसमितिष्वासक्तः गां–पृथ्वीं गेयं–सी(गी?)तं भोग्यत्वेन नाभिलषसि । गङ्गानुवर्तनं कुर्वन्नपि गाङ्गेयो न भवसि । अयं विरोधः । भीष्मस्य हि गङ्गा माता सच पूजय भिषेभ्रं(?) कुर्वाणोऽपि न त्वं रौद्र. ॥४॥

**न परिष्वजसे सरसां नाथ ! नदीनोऽपि सुरतरङ्गवतीम् ।**
**त्वं पूर्णकलावानपि न वर्ण्यसे कैरवाह्लादी ॥ ५ ॥**

नालिङ्गसि सजलां सुरनदीं समुद्रोऽपि सन् (इति) विरोध । अथ च सरसां–रसशृङ्गारां निधुवनरङ्गवतीं विशेषणसामर्थ्यात् कामिनी नालिङ्गयसि । हे नाथ ! न दीनः–न दैन्ययुक्तः । त्वं पूर्णचन्द्रोऽपि कुमुदानन्दको न कथ्यसे इति विरोधः । अथ च समस्तकलावान् त्वं रवाह्लादी कैर्न वर्ण्यसे ? अपि तु सर्वैरपि ॥ ५ ॥

**अवगणितनाकिविभवो, नाथ ! सुपर्वालयोऽपि दधते स्म ।**
**तव मुक्तसुरतरुचयो नो कलधौतश्रियं मुनयः ॥ ६ ॥**

हे स्वामिन् ! तव मुनयो मेरुरपि पराभूतस्वर्गलक्ष्मीकः । तथा त्यक्तदेववृक्षसमूहः । तथा नो सुवर्णश्रिय दधते इति विरोध । अथवा मुनयस्ते कलधौतं–सुवर्णं तस्य श्रियं ता न धारयन्ति । किंविशिष्टा मुनयः ? अवगणितो नाकिविभुः–इन्द्रो यैस्ते । तथा पुनः किं० ? सुपर्वणाम्–उत्सवानाम् आलिर्येभ्यस्ते तथा । पुनरपि किंवि० ? (मुक्ता–) त्यक्ता सुरते–निधुवने रुचिः–अभिलाषो यैस्ते त्य(मु)क्तसुरतरुचयः ॥६॥

**त्वं प्रद्युम्नोऽपि सदा, पद्मायाः मेलकं न विदधासि ।**
**न सुरालयमाकाङ्क्षसि, जिनाग्रजन्माऽपि जगतीश ! ॥ ७ ॥**

त्व कन्दर्पोऽपि सर्वदा लक्ष्म्या मातृत्वेन प्रीत्यर्थं व्यञ्जक मेलकं–ससर्गं न करोषि ( इति ) विरोध. । अथ च त्व प्रकृष्टतेजा सन् सभामापद्मायाभ्या (?) सह सम्बन्ध न विदधासीति परिहार. । यतो जिनाः स्वर्गमपि नेच्छन्ति ॥ ७ ॥

**काव्यै(व्ये ?)पनितोऽसि विभो !, सत्सूत्रामर्षितां दधानोऽपि ।**
**दीक्षायां गीष्पतिभिः, स्फुटयन्नपि दानवर्षित्वम् ॥ ८ ॥**

स्वामिन् ! त्वं सूत्रामा–इन्द्रस्तस्य ऋषिर्गुरु. । प्रधानइन्द्रर्षित्व धारयन्नपि शुक्रे असुरगुरुत्वं प्रकटयन्नपि बृहस्पतिभिः दीक्षामहोत्सवेऽस्तु(त) इति विरोध. । अथ सदागम ! असहिष्णुता धारयन् दानशौण्डत्वं प्रकटयन् त्व दीक्षाप्रस्तावे वाग्मिभिः काव्य गद्यपद्यबन्ध. (तेन)स्तु(त) इति विरोधपरिहारः ॥ ८ ॥

**नारीहितकरनवसुर–तमतपरप्रमदया परिष्वक्त ! ।**
**त्वमवश्यसि तमिन ! सदाचारोपासितमहो धर्मम् ॥ ९ ॥**

स्त्रीहितकरप्रत्यग्रनिधुवनसम्मतप्रकृष्टस्त्रिया समालिङ्गित ! हे स्वामिन् ! तं धर्म शिष्टाचारसेवित तनूकरोषीति चित्रम् । किमिति धर्मनायकत्वात् भगवत. । अथवा न शत्रुहितकर ! न द्रव्यरत ! अभीष्टप्रकृष्टसम्यग्ज्ञानकरुणासमालिङ्गित ! स्वायत्तस्वामिन् ! चारो !–प्रधान ! त्व सित धर्मं पासि–रक्षसि सदा–सर्वदा अहो इति सम्बोधने विरोधपरिहार. ॥ ९ ॥

**सज्जातिमशोकमहो, सत्करण्डं(णं ?) बन्धुजीवमतिमुक्तम् ।**
**सुमनःप्रकृतिमपि त्वां, न सङ्गिरन्ते परागभृतम् ॥ १० ॥**

शोभनत्वमालिङ्गतीं किङ्केल्लिकुसुमां प्रधानकरणकपुष्पं बन्धूकं पुण्ड्रकपुष्पं एवं कुसुमस्वरूपमपि त्वां न प्रतिज्ञातान् न कथयन्ति । कुसुमरेणुधरं कवच इवेति विरोधः । अथ च शोभनमातृपक्षं शोकरहितं सदयं बन्धून् जीवयतीतीव बान्धवपोषकं अत्यन्तकर्ममुक्त शोभनचित्तव्यापारं त्वामपकृष्टरागपोषकं न भाषन्ते (इति) परिहारः ॥ १० ॥

**अप्यष्टापदरुचिरपि, दीव्यस्यक्षैर्न जातु चतुरङ्गैः ।**
**त्वं देव ! नाभियोग्यपि कथमसि विद्रोदरव्यसनः ॥ ११ ॥**

अयीति कोमलामन्त्रणे । सारिफलाभिलाष्यपि पाशकैः चतुरङ्गैः—द्यूतविशेषैर्न क्रीडयसीति विरोधः । अथ च सुवर्णकान्तिः इन्द्रियैस्तुरङ्गमैः कृत्वा कदाचिदपि न क्रीडयसीति परिहारः । द्यूताभिलाष्यपि विगतद्यूतव्यसनः कथं भवसीति विरोधः । अथ च देव ! त्वं नाभिसम्बन्धी पण्डितः न विद्येते दरव्यसने यस्य स. अदरव्यसनः इति विरोधपरिहार' ॥ ११ ॥

**त्वं सर्वदाऽऽरुणानिह, विभोऽङ्गसा पल्लवान् न पुष्णासि ।**
**सरसान् प्रसूनपुञ्जान्, कलिकोपचितानशोकोऽपि ॥ १२ ॥**

आरक्तान् पल्लवान् सान्द्रान् पुष्पसमूहान् कुड्मलरफीतान् त्व किङ्केल्लिरपि सामस्त्येन सदा न पोषसीनि विरोधः । प्रस्वा—मात्रा ऊनाः प्रसूनाः ते च पुमांसश्च तेभ्यो जाताः तान् त्वं शोकरहितः सर्वेषां भीषणान् अपदां कणान् सशृङ्गारान् जननीहीनपुरुषजाताश्च युद्धकोपव्याप्तान् न पुष्णासीति विरोधपरिहारः ॥ १२ ॥

**निष्कुषितवृषनिकषो, जीवहितो धुवसि वैबुधविबाधम् ।**
**चित्रमकृतकविरागो, नाथ ! त्वं पूर्वदेवोऽपि ॥ १३ ॥**

नाथ ! त्व पूर्वदेवोऽपि—असुरोऽपि विध्वस्तसुरेन्द्रपरिभव' बृहस्पतिवत्सलः अविहितशुक्रानुरागः सुरसमूहव्यथां विनाशयसीति चित्रम्—आश्चर्यं (इति) विरोध. । अथ च त्वं प्रथमजिनः निष्कृत्रिमवैराग्यः सर्वसत्त्ववत्सलः निषिद्धधर्मतिरस्कारः वै—स्फुट पण्डितजनबाधा विनाशयसीति परिहारः ॥ १३ ॥

**न विलासी ननखजयी, विभो ! न नागोपघातनिष्णातः ।**
**अलमनवमांसरुचिरसि, कमलविरोध्यपि कथमिव त्वम् ॥ १४ ॥**

विभो ! त्वं कमला—हरिणास्तद्विरोघी सिंहोऽपि कथमिति न बिलासी न बिलेषु आस्त इत्येवंशीलः न खजयी न हस्तिहतम(नन)निपुणः अप्रत्यग्रपतितमासाभिलाषीति विरोधः । अथ च स्वामिन् । त्वं भवसीति । किंविशिष्टः ? न भोगी न न स खजयी अपि तु खजयी—इन्द्रियजेतैव, न न पापापघातदक्षः । अतिशयेन प्रधानस्कन्धरुचिः ज्ञानमलप्रद्वेषी परिहारः ॥ १४ ॥

**मदमभ्यासिष्यङ्गं, नर्मदया सौहृदं च निर्मुच्य ।**
**अयि सारङ्गविपक्षं, त्वं भजसेऽनेकपोऽपि कथम् ॥ १५ ॥**

हस्तिजलं हस्तिन्या सह सङ्गं नदीविशेषया सह सितत्वं च मुक्त्वा मृगारित्वं हस्ती सन् कथमाश्रयसीति विरोधः । अथ च अहङ्कारं ईश्वरं जनसम्बन्धं हास्ययुक्तदयया सौहार्दं च त्यक्त्वा भूरिजनरक्षकस्त्वं पृथिव्यां प्रधानं पक्षं—सिद्धान्तमाश्रयसीति परिहारः ॥ १५ ॥

**जगतो बन्धुरबन्धुः, सुधीरधीर्विधुरनरकपरिपन्थी ।**
**समुदितरुचिरदचिस्त्वं, विराजसे मधुरसुरभिवपुः ॥ १६ ॥**

त्वं शोभसे विश्वस्य बन्धुः धीमान् धीरहित. विष्णुः न नरकदानवशत्रुः सञ्जातकान्तिः कान्तिरहितवसन्तः अवसन्तस्वरूप इति विरोधः । अथ च विश्वस्य रमणीयबान्धवः निश्चलबुद्धिः कष्टनिरयशत्रुः सम्यग् दिनसमानकान्तिः रमणीयसुरभिशरीरः एवंविधस्त्वं शोभसे ॥ १६ ॥

**अकलत्रं सकलत्रं, अमहा समहा रमा अमा नस्त्वम् ।**
**अयासः सयासो विधेह्यदम्भः सदम्भः थाक् ॥ १७ ॥**

(अ)भार्य सभार्य सतेजा· निस्तेजा· निर्भय सभय अमाय. समायः एवंविधस्त्वं न —अस्माकं रमा—लक्ष्मी. अमा—अलक्ष्मीस्वरूपा कुरु शीघ्रमिति विरोध· । पूर्वपद पूर्ववत् समस्तजनरक्षक· । अमान्—रोगान् हन्तीति अ० । सत्रं—यज्ञं अस्यति—क्षिपति स०—यज्ञनिवारक । सदं—सर्वदा भाति—शोभते सदम्भ.—सदा शोभमान. । एवंविधगुणे [ये]न त्वं अस्माकं लक्ष्मीर्न विद्यते अमा मानं यस्या सा इ(अ)माः प्रभूता कुरु ॥१७॥

**जीवा भीतिमभीतिं, प्रमादमलमप्रमादमश्नुवते ।**
**अप्रतिपदं प्रतिपदं, विपदमविपदं तवाभक्तेः ॥ १८ ॥**

प्राणिनस्तव अभक्ते —अबहुमानतो लभन्ते भयं अभय प्रमादं—रागद्वेषादिकारणं प्रमादाभाव प्रतिपद ज्ञान आपद पदाभाव यस्या· सकाशात् भय लभ्यते तस्या कथमिति विरोध । अथ च भीति किंविशिष्टाम्? सा अभीति. आभि-मुख्येन षट्प्रकारा ईतयो यस्या सा । प्रमादं किंविशिष्टम्? अप्रमाम्—असम्यग्ज्ञान ददातीति असम्यग्ज्ञानदायकम् अप्रति—अज्ञानं प्रतिपद निर पद—वेऽस्थानस्य पदं—स्थानं तिर्यग्गति .. सर्वमपि । तवाभक्तेः सकाशात् जीवा· प्राप्नुवन्ति परिहार· ॥ १८ ॥

**अभ्यङ्गप्रभवोऽपि, त्वमीश ! नाभ्यङ्गभूः कथं भवसि ? ।**
**अपि सुरदेवातनयो—ऽमरुदेवानन्दनश्चित्रम् ॥ १९ ॥**

अभ्यङ्गप्रभवोऽपि—म्रक्षणस्थानमपि नाभ्यङ्गस्थानं मरुदेवापुत्रोऽपि अमरुदेवापुत्रः कथ भवसि चित्रम्—आश्चर्यम् । अथ स्वामिन् ! अभि—मुख्येन अङ्गाना—द्वादशाङ्गना उत्पत्तिस्थान अभिरूपाणा—मनोज्ञाना अङ्गाना शरीरावयवानां स्थान वा नाभिकुलकर. मरुदेवापुत्र· अमरुदेव अमान्—रोगान्.... निरुन्धो वा रोगनिरोध.... आनन्दनो आह्लादकस्त्वं भवसि परिहारः ॥ १९ ॥

**नो पाठीनक्षोभं, न वारिपूरं न नक्रमकरमुदम् ।**
**नतरङ्गभरं पुष्यति सरस्वती देव ! तव चित्रम् ॥ २० ॥**

हे देव ! तव सरस्वती—नदी नो मत्स्यविशेषचलनं न जलपूर न नक्रमकरहर्षम् न कल्लोलमूलं (?) पुष्णातीति चित्रम्—आश्चर्यम् । अथ च पाठीनां.... प्राणमिता न तेषा क्षोभं वाऽथ.... न क्रमं सदाचार कुर्वन्तीति क्रमचा...(क्रमकरास्तषा) मुदमेव प्रणतजनानुराग....(समूहं)पुष्णातीति परिहारः ॥ २० ॥

**अर्यमतनयाभेद्यपि, भवानहो कं सदस्युतां धत्ते ? ।**
**अपि जिष्णुतामजात—द्विषदपि श्रीपतिः स्मरताम् ॥ २१ ॥**

अर्यमतनया...भेद्यपि चलभद्रोऽपि तारा......पि त्वं श्रीपतिरपि कामत्वं......श्चर्यम् । अथ च अर्य !—स्वामिन् ! अमी नयनानामभेदक· भवान् कं—ज्ञानं .....सिश्च सदसि:—प्रधानत्वं......नशीलता बिभर्ष । अथ विजयनशीलतां कीदृशीम् ? उत्तांस...समायां स्मरतां—ध्येयतां पुंसा समय...अपि अजात-द्विषन् असञ्जात...॥ २१ ॥

**कविरपि सुमनो कुरुतां, जिन ! विनतानन्दनोऽपि भोगित्वम् ।**
**विबुधोऽपि दानवत्वं, लभते लोकस्तव स्तवतः ॥ २२ ॥**

हे जिन ! तव स्तोत्रतो लोकः कीदृ......इत्याह । शुक्रोऽपि–सुराचार्यो त्वं विनता......फणीन्द्रत्वं सुरोऽपि दानवत्वमिति विरोधः । .. . कर्ता पण्डितमहत्त्वं किं नम्रलोकाह्लादको वि......बुधः–पण्डितो .....विवली(?)वादनृत्वं लभते जनस्तु... ..परिहारः ॥ २२ ॥

**बत बहुकरेणुबाह्याः, कौपीनपरिग्रहाः कलितरथ्याः ।**
**क्षितिभाजस्त्वद्भक्ते–र्विदन्ति महापदं जीवाः ॥ २३ ॥**

बतेति आश्चर्ये भूरिरेणुधारिण कच्छोठ.. ..गृहीतपुरशरण्य भूमिशयनाः एवंविधा जीवा' त्वद्भक्तेः–तव बहुमानतो महतीमापद लभन्ते इति विरोध । अथ च प्रभूतहस्त्यश्वाः कौ–पृथिव्यां उ... परिच्छदाः गृहीतरथसमूहा. राजा(न.) जीवा बृहत्पदं–मोक्षस्य क्षण लभन्ते परिहारः ॥ २३ ॥

**बहुसत्त्वस्त्वद्भक्ते–र्विभो ! न मीनाकुलो न तोयमितः ।**
**लोकः समुद्रसदृगपि, न मन्दरक्षोभितो भवति ॥ २४ ॥**

बहव सत्त्वा.–प्राणिनो यत्र स इत्यनेन समुद्र एव सादृश्येऽपि न मत्स्यव्याप्तः न तोयं–जलमित न मेरुणा क्षोभित' लोकः समुद्रतुल्योऽपि एवविधो न भवतीति विरोधः । अथवा स्वामिन् ! अयं प्रणतो लोक. इतः त्वद्भक्ते भूरिधैर्य. अनमी–रोगरहित ... कुल स्वस्थो न स्तोकरक्षो भवतीति परिहारः ॥२४॥

**विगताधिकोपतापा, नरो गविकलास्त्रियो बताश्नुवते ।**
**अपि चामीकररुचिराः, सत्तिलकालीर्भवद्भक्ताः ॥ २५ ॥**

विनष्टप्रभूतोपतापा एवंविधा अपि नरो. अपि तु स...धयः सुवर्णरमणी......त्वान्याः एवंविधा......प्राप्नुवन्तीति चित्रम् । मनुष्या. विवि.... येषा ते तथा ग......वन्ति सुवर्णम् .....रुचिरा नरः स्त्रियः... ॥ २५ ॥

**चित्रमवश्यायपुषो–ऽप्यजडा कान्त्याऽपि नखचिताः श्चिताः ।**
**पादावलक्षगोस्तव, पादान् नृणां वितन्वन्ति ॥ २६ ॥**

वि नख......विस्तारयन्ति.. ...विलक्षगो निर्मला . . .अवश्यमयं—शुभावहं पुण्यं...... कठिनाः । नखैः चिताः–व्याप्ताः. ... सां पद्मां–लक्ष्मीं विस्तारयन्ती.. . ॥ २६ ॥

**बहुधातुरोचितमपि, स्यादिस्यादिपदसिद्धसाधुपदम् ।**
**सस्वरसवर्णसुभगं, जयति तव श्रुतमपदशास्त्रम् ॥ २७ ॥**

अनेकधातुशोभितं स्यादिस्यादिनिष्पन्नशोभनपदं शोभनस्वरसवर्णमनोहरम् । एवंविधमपि ते आरामपदशास्त्रज अलक्षणशास्त्रं जयति विरोधः । अथवा अनेकधातुगणानामुचित–योग्यं स्याच्छन्दरूपमादिपदं येषां तैः प्रसिद्धानि पदानि यत्र स्वस्वभावात् वर्णः–श्लाघा तेन मनोहरं अपदशायां (?)असं एवं तवागमं जयति–सर्वोत्कृष्टेन व(र्तते) इति परिहारः ॥ २७ ॥

**तव शासनमनुपहित–प्रमाणमप्यप्रमाणवन्नाथ ! ।**
**कः साधिमोहसाधन–मपहृतमोहमपि न स्तौति ॥ २८ ॥**

तवागमं निरुपाधिप्रत्यक्षादिप्रमाणमपि अप्रमाणवत् निर्नाशिताज्ञानमपि अधियुक्तमोहहेतु' एवंविध को न स्तौतीति विरोध. । अथवाणो जीवा आणवं प्रमायाः—सम्यग्ज्ञानस्य आणवं–तनुत्वं न विद्यते तत् यस्य साधोर्भाव' साधिमा उहा–वितर्कस्तयोर्हेतुः । अपहृतमोहं पूर्ववत् । एवविधं तवागमं को न स्तौति परिहारः ॥ २८ ॥

**कथकोऽपि सप्तभङ्ग्या नवभङ्ग्या ज्ञापकः कथं भवसि ? ।**
**कृतनवतत्त्वाव्यञ्जक !, इन ! नव तत्त्वानि विशसि कथम् ? ॥ २९ ॥**

स्वामिन् ! स्यादस्ति १ स्यान्नास्ति २ स्यादस्ति नास्ति च ३ स्यादवक्तव्यं ४ स्यादस्ति च अवक्तव्य ५ स्यान्नास्ति च अवक्तव्यं ६ स्यादस्ति च नास्ति च अवक्तव्यं ७ चेत्येवरूपाया. सप्तभङ्ग्या' कथकोऽपि नवभङ्ग्या भङ्गवञ्चकस्य ज्ञापकः कथ भवसि ? । तथा विहितनवतत्त्वाऽप्रकटनोपि नवसङ्ख्यानि जीवाजीवादि कथं कथयसीति विरोधः । अथ च सप्तभङ्ग्याः कथकोऽपि नवभङ्ग्या नवच्छिन्नाज्ञापको कथं भवसि ? । हे इन !—स्वामिन् ! हे कृतस्तव ! विगतमञ्जनं घातिकर्मादिरूप यस्य स तथा तस्य सम्बोधन हे व्यञ्जनिनः पापतत्त्वानि विस्तार्य नव तत्त्वानि दिशसीति परिहार ॥ २९ ॥

साम्प्रत पञ्चकल्याणकस्तुतिमाह—

**तिथिरप्यतिथिप्रवरा, चतुर्थ्यसौ तापदानतापदावि(चि ?)ता ।**
**असिताऽपि शुचिधुरीणां, यस्यां नाथ ! त्वमच्योष्टाः ॥ ३० ॥**

स्वामिन् ! यस्यां त्व च्युत असौ चतुर्थी तिथिरपि अतिथिप्रधाना सन्तापदायिन(?) सन्तापवाव्याप्ता' कृष्णाऽपि श्वेतधुर्या इत्थं विरोध । अथ च सा चतुर्थी तिथिः अतिथीना—साधूनां प्रवरा–तपोऽनुष्ठानादिनाऽऽराधत्वात् श्रेष्ठा ताप द्यति–खण्डयति तापदा नतै.–प्रणतै' अपचिता–पूजिता न नाशुचे –आषाढस्य धुरीणा–प्रथमा अत एव असिता–कृष्णा परिहारः ॥ ३० ॥

**नूतनबकुलश्रीः, सज्जपावजाता मधोरपि श्यामा ।**
**इयमष्टमीश ! यस्या–मजनिष्ट जवानदीक्षिषुः ॥ ३१ ॥**

यस्यामष्टम्यां भगवान् समुदपादि अदीक्षिष्ट च सा मधोः–वसन्तस्य श्यामा–प्रियङ्गुलताऽपि जाता कीदृशीति सर्वत्र योज्यते । तन्नूतना–प्रत्यग्रा बकुलश्रीर्यस्यां सा तथा शोभनबन्धूकरूपा च विरोधः । अथ च सा इयं मधो –चैत्रस्य श्यामाऽष्टमी नूता–स्तुता प्रत्यग्रा कुलश्रीर्यस्या सा । सन्–प्रधानो जपः—जापः परमेष्ठ्यादिरूपा यस्यां सा तथा जाता परिहारः ॥ ३१ ॥

**ज्ञानं तव यत्राभूत्, फाल्गुनिकैकादशी सुभद्राऽपि ।**
**कृष्णारुचितेयमहो, अभिमन्युविरोधिनी जज्ञे ॥ ३२ ॥**

यस्यामेकादश्यां तव ज्ञानमभूत् सा इयं फाल्गुनिका अर्जुनभार्या–सुभद्राऽपि कृष्णाया–द्रौपद्या

रुचिता—अभिमता तथा अभिमन्युकुमारस्य विरोधिनी सपत्नीत्वात् सुपुत्रत्वाच्च विरोधः । अथ...अपतलाय(?) नमासस्य सेयमेकादशी (अ)तिभद्राणि—कल्याणानि यस्यां सा श्यामा—मनोहरा अभि—मुख्येन मन्योः मानस्य शोकस्य च्छेदिनी छा(त्रा?)ता कषायनोकषायत्रयात् परिहारः ॥ ३२ ॥

**चित्रमकषायवासा, जिन ! शुचिधुर्या सुपर्वबहुलाऽसीत् ।**
**शितिरपि तपस्विनीयं, त्रयोदशी यत्र मुक्तस्त्वम् ॥ ३३ ॥**

यस्यां त्रयोदश्या मुक्तः—सिद्धः इयं सा हे जिन ! शिति.—कृष्णाऽपि नित्न(?)क्रमे तपस्विन्यः पिता यस्यापि चित्रम्—आश्चर्यम् । अकषायाणि कषाया रक्तानि—वस्त्राणि यस्यां सा तथा शुचिषु प्रथमा सा पर्वभिः सुमहोत्सवैः बहुला—प्रचुरा बभूव विरोध' । अथ हे जिन ! यत्र त्वं मुक्तः सायं त्रयोदशी अभूत् । कीदृशी कष्यन्ते—हिंस्यन्ते प्राणिनोऽस्मिन् इति कष—संसारः .. ( तस्यायः—लाभः कषायस्तस्य वासः ) कषायवासो यस्या स तथा . .. क्रोधा. दय एतेषा अपि तत्र वासो न विद्यते अत एव भावशौचस्य धुरीणाः...... ॥ ३३ ॥

**अधिक्षमाराजित नाभिसूनो ! त्वमक्षमाराजित भक्तिभाजाम् ।**
**एवं विरोधः कृतसंस्तवोऽपि, छिन्द्याद् विरोधं जिनपत्यधीश ! ॥ ३४ ॥**

......इत्थं विरोधालङ्कारविहितस्तव सति (?) विरोधंति (?) या ॥ ३४ ॥

**इति स्तवावचूर्णिः ॥**[1]



---

[1] अस्या जीर्णशीर्णप्रत्यां प्रचुरपाठप्रपातेऽप्यस्या उद्धार कार्य एवेति प्रकाशकमहाशयाभिलाषमनुसृत्य कथमपि मयाऽस्या सम्पादनकार्यमकारि ।

## ख-परिशिष्टम् ।

# भक्तामरटीकायुगलान्तर्गतपद्यानामकाराद्यनुक्रमः



१ अत्र व्याकरणकोषावतरणात्मकाना पद्याना समावेशो न क्रियते। २ किरातार्जुनीये ( स १८, श्लो. ४ )। ३ वैराग्यशतके ( श्लो० १२ )।

१ ईशावास्योपनिषदि ( श्लो० ३ )।

१ ब्रह्मबिन्दूपनिषदि (श्लो. १२)।

१ विशेषावश्यके (गा. ३०९६)।

१ योगशास्त्रे ( प्र. ४, श्लो. ५१ )।

१ नीतिशतके ( श्लो. ७० )।

२ शिशुपालवधे ( स. १, श्लो. ३५ )।

१ नीतिशतके ( श्लो. ४७ )।
२ सिन्दूरप्रकरे ( श्लो. ४ )।

१–२ नीतिशतके ( श्लो० ५१,५२ )।

१ नीतिशतके ( श्लो. ५८ )।

१ वीतरागस्तोत्रे ( प्र. ११, श्लो. ७ )।

## छ—परिशिष्टम्

# भक्तामरटीकाद्वयान्तर्गतसाक्षिभूतपाठाः

| पाठः व्याकरणसम्बन्धी | पृष्ठाङ्कः |
|---|---|
| **धातुपाठः** | |
| अशश् (?) भोजने | ३१ |
| इण् गतौ | १७ |
| णी प्रापणे | ४० |
| घस् अदने | १९ |

| पाठ. व्याकरणसम्बन्धी | पृष्ठाङ्कः |
|---|---|
| मन ज्ञाने | २४ |
| म्ना अभ्यासे | ६३ |
| रस रसने | ३१ |
| रु शब्दे | १९ |
| वर निवारणे | ३८ |

---

| पाठ कोशसम्बन्धी | पृष्ठाङ्क |
|---|---|
| **अनेकार्थे** | |
| अवदात तु | ८१ |
| उत् प्राधान्ये प्रकाशे च | ८० |
| उज्ज्वलस्तु | ९९ |
| नामप्राकाश्यकुत्सयो. | ७९ |
| बिम्ब तु प्रतिबिम्बे स्यात् मण्डले बिम्बिकाफले | ८० |
| वितानं कदके यज्ञे | ८० |
| **अभिधानचिन्तामणौ** | |
| अथाशुभम् । दुष्कृतं दुरितं पाप–मेनः पाप्मा च पातकम् । किल्बिषं कलुषं किण्वं कल्मषं वृजिनं तमः ॥ अहः कल्कामघं पङ्कः । | २६ |
| कालो नीलोऽसित. शितिः | २१ |
| उषा निशान्ते । अल्पे किञ्चिन्मनागीषच्च किञ्चन | ४० |

| पाठ कोशसम्बन्धी | पृष्ठाङ्क |
|---|---|
| नैल स्नेहोऽभ्यञ्जनं च | ४२ |
| दवो दावो वनवह्निः | ९९ |
| दिष्टान्तोऽस्तं कालधर्मः | ४६ |
| निज पुनः ॥ आत्मीयः स्वः स्वकीयश्च | १७ |
| पलाशं छदनं बर्हं पत्रं | ३५ |
| प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकं | ३४ |
| बिन्दौ पृषत्-पृषत-विप्रुष. | २४ |
| भामण्डल चारु च | ८३ |
| युद्धं तु सङ्ख्यं कलि | ६६ |
| विज्ञवैज्ञानिकाः पटुः छेको विदग्धे | ८ |
| स्तव. स्तोत्रं स्तुतिर्नुति | १६ |
| **विश्वकोशे** | |
| ललाम च ललाम च, लाञ्छनध्वजवाजिषु । मृगे प्रधाने भूषाया, रम्ये वालधिपुण्ड्रयोः ॥ | ३४ |

## ज—परिशिष्टम्

# भक्तामरटीकाद्वयान्तर्गतविशिष्टनामसूचिः

## (आ) अजैनदेवदेवीनामसूचिः



## (इ) जैनाजैनसाधुसाध्वीनामसूचिः

* एतच्चिह्नाङ्किता अजैनाः ।



## (ई) नृपनामसूचिः

## (उ) अवशिष्टनरनारीनामसूचिः

(ऊ) सम्प्रदायनामसूचिः



(ऋ) ग्रन्थनामसूचिः ।



(ॠ) नगर-नगरी-देशनामसूचिः ।

### (ऌ) तृणनामसूचिः



### (ॡ) नगनामसूचिः



### (ए) नदीनामसूचिः



### (ऐ) वृक्षनामसूचिः



### (ओ) समुद्रनामसूचिः



### (औ) स्वर्गनामसूचिः